# विष्णुधर्मः

https://sa.wikisource.org/s/1wi7
नारायणं नमस्कृत्य (१)
नरं चैव नरोत्तमम् (१)
देवीं सरस्वतीं चैव (१)
ततो जयम् उदीरयेत् (१)
द्वैपायनौष्ठपुटनिःसृतम् अप्रमेयं (२)
पुण्यं पवित्रम् अथ पापहरं शुभं च (२)
यो भारतं समधिगच्छति वाच्यमानं (२)
किं तस्य पुष्करजलैर् अभिषेचनेन (२)
नमो व्यासाय गुरवे (२)
सर्वज्ञाय महर्षये (२)
पाराशर्याय शान्ताय (२)
नमो नारायणाय ते (२)
कृताभिषेकं तनयम् (००१-००१)
राज्ञः पारीक्षितस्य ह (००१-००१)
द्रष्टुम् अभ्याययुः प्रीत्या (००१-००१)
शौनकाद्या महर्षयः (००१-००१)
तान् आगतान् स राजर्षिः (००१-००२)
पाद्यार्घ्यादिभिर् अर्चितान् (००१-००२)
सुखोपविष्टान् विश्रान्तान् (००१-००२)
कृतसंप्रश्नसत्कथान् (००१-००२)
तत्कथाभिः कृताह्लादः (००१-००३)
प्रणिपत्य कृताञ्जलिः (००१-००३)
शतानीको ऽथ पप्रच्छ (००१-००३)
नारायणकथां पराम् (००१-००३)
यम् आश्रित्य जगन्नाथम् (००१-००४)
मम पूर्वपितामहाः (००१-००४)
विपक्षापहृतं राज्यम् (००१-००४)
अवापुः पुरुषोत्तमाः (००१-००४)
द्रौणिब्रह्मास्त्रनिर्दग्धो (००१-००५)
मम येन पितामहः (००१-००५)
परीक्षित् प्राणसंयोगं (००१-००५)
देवदेवेन लम्भितः (००१-००५)
तस्य देवस्य माहात्म्यं (००१-००६)
देवर्षिसिद्धमनुजैः (००१-००६)
श्रुतं सुबहुशो मया (००१-००६)
स्तुतस्याशेषजन्मनः (००१-००६)
कः स्तोतुम् ईशस् तम् अजं (००१-००७)
यस्यैतत् सचराचरम् (००१-००७)
अव्ययस्याप्रमेयस्य (००१-००७)
ब्रह्माण्डम् उदरे शयम् (००१-००७)
रुद्रः क्रोधोद्भवो यस्य (००१-००८)
प्रसादाच् च पितामहः (००१-००८)
तस्य देवस्य कः शक्तः (००१-००८)
प्रवक्तुं वा विभूतयः (००१-००८)
सो ऽहम् इच्छामि देवस्य (००१-००९)

तस्य सर्वात्मनः प्रभोः (००१-००९)
श्रोतुम् आराधनं येन (००१-००९)
निस्तरेयं भवार्णवम् (००१-००९)
केनोपायेन मन्त्रैर् वा (००१-०१०)
रहस्यैः परिचर्यया (००१-०१०)
दानैर् व्रतोपवासैर् वा (००१-०१०)
जप्यैर् होमैर् अथापि वा (००१-०१०)
आराधितः समस्तानां (००१-०११)
क्लेशानां हानिदो हरिः (००१-०११)
शक्यः समाराधयितुं (००१-०११)
तन् नः शंसत सत्तमाः (००१-०११)
विद्यानाम् अपि सा विद्या (००१-०१२)
श्रुतानाम् अपि तच् छ्रुतम् (००१-०१२)
रहस्यानां रहस्यं तद् (००१-०१२)
येन विष्णुः प्रसीदति (००१-०१२)
मन्त्राणां परमो मन्त्रो (००१-०१३)
व्रतानां तन् महाव्रतम् (००१-०१३)
उपोषितं हि तच् छ्रेष्ठं (००१-०१३)
येन तुष्यति केशवः (००१-०१३)
सा जिह्वा या हरिं स्तौति (००१-०१४)
तच् चित्तं यत् तदर्पणम् (००१-०१४)
ताव् एव केवलौ श्लाघ्यौ (००१-०१४)
यौ तत्पूजाकरौ करौ (००१-०१४)
सुजन्म देहम् अत्यन्तं (००१-०१५)
तद् एवाशेषजन्मसु (००१-०१५)
यद् एव पुलकोद्भासि (००१-०१५)
विष्णोर् नामाभिकीर्तनात् (००१-०१५)
सा हानिस् तन् महच् छिद्रं (००१-०१६)
सा चान्धजडमूकता (००१-०१६)
यन् मुहूर्तं क्षणं वापि (००१-०१६)
वासुदेवो न चिन्त्यते (००१-०१६)
नूनं तत् कण्ठशालूकम् (००१-०१७)
अथवा प्रतिजिह्विका (००१-०१७)
रोगो वान्यो न सा जिह्वा (००१-०१७)
या न वक्ति हरेर् गुणान् (००१-०१७)
सन्त्य् अनेका बिलास् तद्वच् (००१-०१८)
श्रोत्रम् अप्य् अल्पमेधसाम् (००१-०१८)
दत्त्वावधानं यच् छब्दे (००१-०१८)
विनैव हरिसंस्तुतिम् (००१-०१८)
धर्मार्थकामसंप्राप्तौ (००१-०१९)
पुरुषाणां विचेष्टितम् (००१-०१९)
जन्मन्य् अविफला सैका (००१-०१९)
या गोविन्दाश्रया क्रिया (००१-०१९)
दुर्गसंसारकान्तारम् (००१-०२०)
अपारम् अभिधावताम् (००१-०२०)
एकः कृष्णनमस्कारो (००१-०२०)
मुक्तितीरस्य देशिकः (००१-०२०)
सर्वरत्नमयो मेरुः (००१-०२१)
सर्वाश्चर्यमयं नभः (००१-०२१)

सर्वतीर्थमयी गङ्गा (००१-०२१)
सर्वदेवमयो हरिः (००१-०२१)
एवम् आदिगुणो भोगः (००१-०२२)
कृष्णस्याद्भुतकर्मणः (००१-०२२)
श्रुतो मे बहुशो सिद्धैः (००१-०२२)
गीयमानस् तथापरैः (००१-०२२)
सो ऽहम् इच्छामि तं देवं (००१-०२३)
सर्वलोकपरायणम् (००१-०२३)
नारायणम् अशेषस्य (००१-०२३)
जगतो हृद्य् अवस्थितम् (००१-०२३)
आराधयितुम् ईशानम् (००१-०२४)
अनन्तम् अमितौजसम् (००१-०२४)
शंकरं जगतः प्राणं (००१-०२४)
स्मृतमात्राघहारिणम् (००१-०२४)
तन् ममाद्य मुनिश्रेष्ठाः (००१-०२५)
प्रसादयितुम् इच्छतः (००१-०२५)
उपदेशप्रदानेन (००१-०२५)
प्रसादं कर्तुम् अर्हत (००१-०२५)
तस्यैतद् वचनं श्रुत्वा (००१-०२६)
भक्तिम् उद्वहतो हरेः (००१-०२६)
परितोषं परं जग्मुर् (००१-०२६)
मुनयः सर्व एव ते (००१-०२६)
सर्वे च ते मुनिश्रेष्ठा (००१-०२७)
भृगुश्रेष्ठं च शौनकम् (००१-०२७)
यथार्थं भगवंस् तस्मै (००१-०२७)
कथ्यताम् इत्य् अचोदयन् (००१-०२७)
सर्वज्ञाननिधिः स्फीतस् (००१-०२८)
त्वम् अत्र भृगुनन्दन (००१-०२८)
त्रैलोक्यसर्वसंदेह- (००१-०२८)
तमोदीपस् तपोधन (००१-०२८)
एवम् उक्तो मुनिवरैः (००१-०२९)
प्रीत्या तस्य च भूपतेः (००१-०२९)
भक्त्या च देवदेवस्य (००१-०२९)
प्रवणीकृतमानसः (००१-०२९)
कृत्वोत्तरीयपर्यङ्कं (००१-०३०)
शिथिलं भगवान् अथ (००१-०३०)
प्रत्युवाच महाभागः (००१-०३०)
शौनकस् तं महीपतिम् (००१-०३०)
यत् पृच्छसि महीपाल (००१-०३१)
कृष्णस्याराधनं प्रति (००१-०३१)
व्रतोपवासजप्यादि (००१-०३१)
तद् इहैकमनाः शृणु (००१-०३१)
अनादिमत् परं ब्रह्म (००१-०३२)
सर्वहेयविवर्जितम् (००१-०३२)
व्यापि यत् सर्वभूतेषु (००१-०३२)
स्थितं सदसतः परम् (००१-०३२)
प्रधानपुंसोर् अजयोर् (००१-०३३)
यतः क्षोभः प्रवर्तते (००१-०३३)
नित्ययोर् व्यापिनोश् चैव (००१-०३३)

जगदादौ महात्मनोः (००१-०३३)
तत्क्षोभकत्वाद् ब्रह्माण्ड- (००१-०३४)
सृष्टिहेतुर् निरञ्जनः (००१-०३४)
अहेतुर् अपि सर्वात्मनः (००१-०३४)
जायते परमेश्वरः (००१-०३४)
प्रधानपुरुषत्वं च (००१-०३५)
तथैवेश्वरलीलया (००१-०३५)
समुपैति ततश् चैव (००१-०३५)
ब्रह्मत्वं छन्दतः प्रभुः (००१-०३५)
ततः स्थितौ पालयिता (००१-०३६)
विष्णुत्वं जगतः क्षये (००१-०३६)
रुद्रत्वं च जगन्नाथः (००१-०३६)
स्वेच्छया कुरुते ऽव्ययः (००१-०३६)
तद् एकम् अक्षरं धाम (००१-०३७)
परं सदसतोर् महत् (००१-०३७)
भेदाभेदस्वरूपस्थं (००१-०३७)
प्रणिपत्य परं पदम् (००१-०३७)
प्रवक्ष्यामि यथा पूर्वं (००१-०३८)
मत्पित्रा कथितं मम (००१-०३८)
तस्यापि किल तत्पित्रा (००१-०३८)
तस्मै चाह किलोशनाः (००१-०३८)
तेनापि भृगुम् आराध्य (००१-०३९)
प्राप्तम् आराधनं हरेः (००१-०३९)
सकाशाद् ब्रह्मणः प्राप्तं (००१-०३९)
भृगुणापि महात्मना (००१-०३९)
मरीचिमिश्रैश् च पुरा (००१-०४०)
परम् एतन् महर्षिभिः (००१-०४०)
प्राप्तं सकाशाद् देवस्य (००१-०४०)
ब्रह्मणो व्यक्तजन्मनः (००१-०४०)
योगं ब्रह्मा परं प्राह (००१-०४१)
महर्षीणां यदा प्रभुः (००१-०४१)
समस्तवृत्तिसंरोधात् (००१-०४१)
कैवल्यप्रतिपादकम् (००१-०४१)
तदा जगत्पतिर् ब्रह्मा (००१-०४२)
प्रणिपत्य महर्षिभिः (००१-०४२)
सर्वैः किलोक्तो भगवान् (००१-०४२)
आत्मयोनिः प्रजाहितम् (००१-०४२)
यो योगो भवता प्रोक्तो (००१-०४३)
मनोवृत्तिनिरोधजः (००१-०४३)
प्राप्तुं शक्यः स त्व् अनेकैः (००१-०४३)
जन्मभिर् जगतः पते (००१-०४३)
विषया दुर्जया नृणाम् (००१-०४४)
इन्द्रियाकर्षणाः प्रभो (००१-०४४)
वृत्तयश् चेतसश् चापि (००१-०४४)
चपला चातिदुर्धराः (००१-०४४)
रागादयः कथं जेतुं (००१-०४५)
शक्या वर्षशतैर् अपि (००१-०४५)
न योगयोग्यं हि मनो (००१-०४५)
भवत्य् एभिर् अनिर्जितैः (००१-०४५)

अल्पायुषश् च पुरुषा (००१-०४६)
ब्रह्मन् कृतयुगे ऽप्य् अमी (००१-०४६)
त्रेतायां द्वापरे चैव (००१-०४६)
किमु प्राप्ते कलौ युगे (००१-०४६)
भगवंस् त्वम् उपायज्ञः (००१-०४७)
प्रसन्नो वक्तुम् अर्हसि (००१-०४७)
अनायासेन येनेमम् (००१-०४७)
उत्तरेम भवार्णवम् (००१-०४७)
दुःखाम्बुमग्नाः पुरुषाः (००१-०४८)
प्राप्य ब्रह्म महाप्लवम् (००१-०४८)
उत्तरेयुर् भवाम्भोधिं (००१-०४८)
तथा त्वम् अनुचिन्तय (००१-०४८)
एवम् उक्तस् तदा ब्रह्मा (००१-०४९)
क्रियायोगं महात्मनाम् (००१-०४९)
तेषाम् ऋषीणाम् आचष्ट (००१-०४९)
नराणां हितकाम्यया (००१-०४९)
आराधयत विश्वेशम् (००१-०५०)
नारायणम् अतन्द्रिताः (००१-०५०)
बाह्यालम्बनसापेक्षास् (००१-०५०)
तम् अजं जगतः पतिम् (००१-०५०)
इज्यापूजानमस्कार- (००१-०५१)
शुश्रूषाभिर् अहर्निशम् (००१-०५१)
व्रतोपवासैर् विविधैर् (००१-०५१)
ब्राह्मणानां च तर्पणैः (००१-०५१)
तैस् तैश् चाभिमतैः कामैर् (००१-०५२)
ये च चेतसि तुष्टिदाः (००१-०५२)
अपरिच्छेद्यमाहात्म्यम् (००१-०५२)
आराधयत केशवम् (००१-०५२)
तन्निष्ठास् तद्गतधियस् (००१-०५३)
तत्कर्माणस् तदाश्रयाः (००१-०५३)
तद्दृष्टयस् तन्मनसः (००१-०५३)
सर्वस्मिन् स इति स्थितः (००१-०५३)
समस्तान्य् अथ कर्माणि (००१-०५४)
तत्र सर्वात्मनात्मनि (००१-०५४)
संन्यस्यध्वं स वः कर्ता (००१-०५४)
समस्तावरणक्षयम् (००१-०५४)
एतत् तद् अक्षरं ब्रह्म (००१-०५५)
प्रधानपुरुषाव् उभौ (००१-०५५)
यतो यस्मिन् यथा चोभौ (००१-०५५)
सर्वव्यापिन्य् अवस्थितौ (००१-०५५)
परः पराणां परमः (००१-०५६)
स एकः पुरुषोत्तमः (००१-०५६)
यस्याभिन्नम् इदं सर्वम् (००१-०५६)
यच् चेङ्गं यच् च नेङ्गति (००१-०५६)
तम् आराध्य जगन्नाथं (००१-०५७)
मोक्षकारणम् अव्यक्तम् (००१-०५७)
अचिन्त्यम् अपरिग्रहम् (००१-०५७)
क्रियायोगेन मुच्यते (००१-०५७)
इति ते ब्रह्मणः श्रुत्वा (००१-०५८)

रहस्यम् ऋषिसत्तमाः (००१-०५८)
नराणाम् उपकाराय (००१-०५८)
योगशास्त्राणि चक्रिरे (००१-०५८)
क्रियायोगपराणीह (००१-०५८)
मुक्तिकार्याण्य् अनेकशः (००१-०५८)
आराध्यते जगन्नाथो (००१-०५९)
यदनुष्ठानतत्परैः (००१-०५९)
परमात्मा हृषीकेशः (००१-०५९)
सर्वेशः सर्वभावनः (००१-०५९)
तानि ते नृपशार्दूल (००१-०६०)
सर्वपापहराण्य् अहम् (००१-०६०)
वक्ष्यामि श्रूयताम् अन्यद् (००१-०६०)
रहस्यम् इदम् उत्तमम् (००१-०६०)
संसारार्णवमग्नानां (००१-०६१)
विषयाक्रान्तचेतसाम् (००१-०६१)
उत्तारम् इच्छतां तस्माद् (००१-०६१)
भृशं यन् नान्तरैर् अपि (००१-०६१)
विष्णुपोतं विना नान्यत् (००१-०६१)
किंचिद् अस्ति परायणम् (००१-०६१)
उत्तिष्ठंश् चिन्तय हरिं (००१-०६२)
व्रजंश् चिन्तय केशवम् (००१-०६२)
भुञ्जंश् चिन्तय गोविन्दम् (००१-०६२)
स्वपंश् चिन्तय माधवम् (००१-०६२)
एवम् एकाग्रचित्तस् त्वं (००१-०६३)
संश्रितो मधुसूदनम् (००१-०६३)
जन्ममृत्युजराग्राहं (००१-०६३)
संसाराम्भस् तरिष्यसि (००१-०६३)
अनन्तम् ईड्यं पुरुषं पुराणं (००१-०६४)
जगद्विधातारम् अजं जनित्र्यम् (००१-०६४)
समाश्रिता ये हरिम् ईशितारं (००१-०६४)
तेषां भवो नास्ति हि मुक्तिभाजाम् (००१-०६४)
श्रूयतां कुरुशार्दूल (००२-००१)
संवादो ऽयम् अनुत्तमः (००२-००१)
अम्बरीषस्य राजर्षेः (००२-००१)
सह देवेन चक्रिणा (००२-००१)
अम्बरीषो महीपालः (००२-००२)
पालयन्न् एव मेदिनीम् (००२-००२)
उद्विग्न एव द्वन्द्वान्तम् (००२-००२)
अभीप्सुः पुरुषर्षभः (००२-००२)
देवदेवात् स गोविन्दाद् (००२-००३)
अभीप्सुर् द्वन्द्वसंक्षयम् (००२-००३)
तपस् तेपे निराहारो (००२-००३)
गृणन् ब्रह्म सनातनम् (००२-००३)
तस्य कालेन महता (००२-००४)
भक्तिम् उद्वहतः पराम् (००२-००४)
तुतोष भगवान् विष्णुः (००२-००४)
सर्वलोकपतिः प्रभुः (००२-००४)
स रूपम् ऐन्द्रम् आस्थाय (००२-००५)
तम् उवाच महीपतिम् (००२-००५)

मेघगम्भीरनिर्घोषो (००२-००५)
वारणेन्द्रगतिस् तदा (००२-००५)
राजर्षे वद यत् कार्यं (००२-००६)
तव चेतस्य् अवस्थितम् (००२-००६)
वरदो ऽहम् अनुप्राप्तो (००२-००६)
वरं वरय सुव्रत (००२-००६)
एवम् उक्तस् ततो राजा (००२-००७)
विलोक्य च पुरंदरं (००२-००७)
प्रत्युवाचार्घ्यम् उद्यम्य (००२-००७)
स्वागतं ते ऽस्त्व् इति प्रभो (००२-००७)
नाहम् आराधयामि त्वां (००२-००८)
तव बद्धो ऽयम् अञ्जलिः (००२-००८)
वरार्थिनां त्वं वरदः (००२-००८)
प्रयच्छाभिमतान् वरान् (००२-००८)
वरार्थाय त्वयान्यैश् च (००२-००९)
क्रियते नृपते तपः (००२-००९)
स किम् अर्थं त्वम् अस्मत्तो (००२-००९)
न गृह्णास्य् अभिवांछितम् (००२-००९)
न वरार्थम् अयं यत्नस् (००२-०१०)
त्वत्तो देवपते मम (००२-०१०)
विष्णोर् आराधनार्थाय (००२-०१०)
विद्धि मां त्वं कृतोद्यमम् (००२-०१०)
अहं हि सर्वदेवानां (००२-०११)
त्रैलोक्यस्य तथेश्वरः (००२-०११)
पालयन्ति ममैवाज्ञाम् (००२-०११)
आदित्याद्याः सदा सुराः (००२-०११)
आदित्या वसवो रुद्रा (००२-०१२)
नासत्यौ मरुतां गणाः (००२-०१२)
प्रजानां पतयः साध्या (००२-०१२)
विश्वेदेवा महर्षयः (००२-०१२)
कुर्वन्त्य् एते ममैवाज्ञां (००२-०१३)
सिद्धगन्धर्वपन्नगाः (००२-०१३)
मत्तो हि को ऽन्यो वरदः (००२-०१३)
प्रतिगृह्णीष्व वाञ्छितम् (००२-०१३)
त्वम् इन्द्रः सत्यम् एवैतद् (००२-०१४)
देवस् त्रिभुवनेश्वरः (००२-०१४)
त्वयापि प्राप्तम् ऐश्वर्यं (००२-०१४)
यतस् तं तोषयाम्य् अहम् (००२-०१४)
त्रैलोक्यं तव देवेश (००२-०१५,*(१))
वशे यस्य महात्मनः (००२-०१५,*(१))
सप्तोदरे शया लोकास् (००२-०१५)
तम् ईशं तोषयाम्य् अहम् (००२-०१५)
यस्य त्वम् अमरैः सर्वैः (००२-०१६)
समवेताः सुरेश्वर (००२-०१६)
देहप्राप्तो ऽन्तरस्थो वै (००२-०१६)
तं नमामि जनार्दनम् (००२-०१६)
निमेषो ब्रह्मणो रात्रिर् (००२-०१७)
उन्मेषो यस्य वासरः (००२-०१७)
तम् ईड्यम् ईशम् अजरं (००२-०१७)

प्रणतो ऽस्मि जनार्दनम् (००२-०१७)
यो हर्ता जगतो देवः (००२-०१८)
कर्ता पालायिता च यः (००२-०१८)
त्रयस्यास्य च यो योनिस् (००२-०१८)
तं विष्णुं तोषयाम्य् अहम् (००२-०१८)
हिरण्यकशिपुः पूर्वं (००२-०१९)
हिरण्याक्षश् च ते रिपुः (००२-०१९)
तवानुकम्पया येन (००२-०१९)
हतौ दैत्यौ नतो ऽस्मि तम् (००२-०१९)
बलिनापहृतं शक्र (००२-०२०)
दत्तं येन पुरा तव (००२-०२०)
त्रैलोक्यराज्यं तं बद्ध्वा (००२-०२०)
तं नमामि जनार्दनम् (००२-०२०)
प्रसीद शक्र गच्छ त्वम् (००२-०२१)
अहम् अप्य् अत्र संस्थितः (००२-०२१)
तपस् तप्स्ये जगन्नाथं (००२-०२१)
द्रष्टुं नारायणं हरिम् (००२-०२१)
एवम् उक्तस् ततस् तेन (००२-०२२)
शक्ररूपी जनार्दनः (००२-०२२)
पुनर् अप्य् आह तं कोपात् (००२-०२२)
पार्थिवं तपसि स्थितम् (००२-०२२)
यदि मद्वचनाद् अद्य (००२-०२३)
न भवांस् त्यक्ष्यते तपः (००२-०२३)
वज्रं ते प्रहरिष्यामि (००२-०२३)
बुध्यस्वैतद् यदीच्छसि (००२-०२३)
नाप्य् अल्पम् अपराधं ते (००२-०२४)
करोमि त्रिदशेश्वर (००२-०२४)
तथापि वधयोग्यं मां (००२-०२४)
मन्यसे चेत् क्षिपायुधम् (००२-०२४)
श्रूयते किल गोविन्दे (००२-०२५)
भक्तिम् उद्वहतां नृणाम् (००२-०२५)
संसारार्णावभीतानां (००२-०२५)
त्रिदशाः परिपन्थिनः (००२-०२५)
तापसो ऽहं क्व निःसङ्गः (००२-०२६)
क्व च कोपस् तवेदृशः (००२-०२६)
विज्ञातम् एतद् गोविन्द- (००२-०२६)
भक्तिविघ्नोपपादितम् (००२-०२६)
भवन्ति बहवो विघ्ना (००२-०२७)
नरे श्रेयःपरायणे (००२-०२७)
गोविन्दभक्त्यभ्यधिकं (००२-०२७)
श्रेयश् चान्यन् न विद्यते (००२-०२७)
स त्वं प्रहर वा मा वा (००२-०२८)
मयि वज्रं पुरंदर (००२-०२८)
नाहम् उत्सृज्य गोविन्दम् (००२-०२८)
अन्यम् आराधयामि भोः (००२-०२८)
न चापि वज्रं वज्री वा (००२-०२९)
त्वं च नान्ये सुरासुराः (००२-०२९)
शक्ता निहन्तुम् ईशाने (००२-०२९)
हृदयस्थे जनार्दने (००२-०२९)

किं च नो बहुनोक्तेन (००२-०३०)
नाहं वक्ष्याम्य् अतः परं (००२-०३०)
यथेप्सितं कुरुष्व त्वं (००२-०३०)
करिष्ये ऽहम् अभीप्सितम् (००२-०३०)
एवम् उक्त्वा सुरपतिं (००२-०३१)
पार्थिवः स पुनस् तपः (००२-०३१)
चचार मौनम् आस्थाय (००२-०३१)
तेनातुष्यत केशवः (००२-०३१)
संदर्शयाम् आस ततः (००२-०३२)
स्वं वपुः कैटभार्दनः (००२-०३२)
चतुर्भुजम् उदाराङ्गं (००२-०३२)
शङ्खचक्रगदाधरम् (००२-०३२)
किरीटस्रग्धरं स्पष्टं (००२-०३३)
नीलोत्पलदलच्छविम् (००२-०३३)
ऐरावतश् च गरुडस् (००२-०३३)
तत्क्षणात् समदृश्यत (००२-०३३)
स च राजवरो देवं (००२-०३४)
पीतवाससम् अच्युतम् (००२-०३४)
विलोक्य भक्तिशिरसा (००२-०३४)
सहसैव महीं ययौ (००२-०३४)
प्रत्युवाच च भूपालः (००२-०३५)
प्रणिपत्य कृताञ्जलिः (००२-०३५)
रोमाञ्चिततनुः स्तोत्रम् (००२-०३५)
पद्मनाभं ततो ऽस्तुवत् (००२-०३५)
आदिदेव जयाजेय (००२-०३६)
जय सर्गादिकारक (००२-०३६)
जयास्पष्टप्रकाशाण्ड (००२-०३६)
बृहन्मूर्ते जयाक्षर (००२-०३६)
जय सर्वगताचिन्त्य (००२-०३७)
जय जन्मजरापह (००२-०३७)
जय व्यापिन् जयाभेद (००२-०३७)
सर्वभूतेष्व् अवस्थित (००२-०३७)
जय यज्ञपते नाथ (००२-०३८)
हव्यकव्याशनाव्यय (००२-०३८)
जय विज्ञातसिद्धान्त (००२-०३८)
मायामोहक केशव (००२-०३८)
लोकस्थित्यर्थम् अनघ (००२-०३९)
वराह जय भूधर (००२-०३९)
नृसिंह जय देवारि- (००२-०३९)
वक्षःस्थलविदारण (००२-०३९)
देवानाम् अरिभीतानाम् (००२-०४०)
आर्तिनाशन वामन (००२-०४०)
जय क्रान्तसमस्तोर्वी- (००२-०४०)
नभःस्वर्लोकभावन (००२-०४०)
जितं ते जगताम् ईश (००२-*(२))
जितं ते सर्व सर्वद (००२-*(२))
जितं ते सर्वभूतेश (००२-०४१)
योगिध्येय नमो ऽस्तु ते (००२-०४१)
नमो ऽस्त्व् अव्यपदेश्याय (००२-०४२)

नमः सूक्ष्मस्वरूपिणे (००२-०४२)
नमस् त्रिमूर्तये तुभ्यं (००२-०४२)
विश्वमूर्ते नमो ऽस्तु ते (००२-०४२)
ब्रह्माद्यैश् चिन्त्यते रूपं (००२-०४३)
यत् तत् सदसतः परं (००२-०४३)
विशेषैर् अविशेष्याय (००२-०४३)
तस्मै तुभ्यं नमो नमः (००२-०४३)
पुरुषाख्यं ततो रूपं (००२-०४४)
निर्गुणं गुणभोक्तृ च (००२-०४४)
प्रकृतेः परतः सूक्ष्मं (००२-०४४)
तन् नमस्यामि ते हरे (००२-०४४)
अव्यक्तादिविशेषान्तम् (००२-०४५)
अतिसूक्ष्मतमं महत् (००२-०४५)
प्राकृतं तव तद् रूपं (००२-०४५)
तस्मै देव नमाम्य् अहम् (००२-०४५)
रूपैर् नानाविधैर् यश् च (००२-०४६)
तद्रूपान्तरगोचरम् (००२-०४६)
लीलया व्यवहारस् ते (००२-०४६)
तस्मै देवात्मने नमः (००२-०४६)
प्रसीद विष्णो गोविन्द (००२-०४७)
शङ्खचक्रगदाधर (००२-०४७)
धराधरारविन्दाक्ष (००२-०४७)
वासुदेव महेश्वर (००२-०४७)
इत्थं स्तुतो जगन्नाथः (००२-०४८)
प्रोक्तवान् इति केशवः (००२-०४८)
अम्बरीषं पृथिवीशं (००२-०४८)
जगत् संनादयन् गिरा (००२-०४८)
अम्बरीष प्रसन्नो ऽस्मि (००२-०४९)
भक्त्या स्तोत्रेण चानघ (००२-०४९)
वरं वृणीष्व धर्मज्ञ (००२-०४९)
यत् ते मनसि वर्तते (००२-०४९)
एष एव वरः श्लाघ्यो (००२-०५०)
यद् दृष्टो ऽसि जगत्पते (००२-०५०)
त्वद्दर्शनम् अपुण्यानां (००२-०५०)
स्वप्नेष्व् अपि हि दुर्लभम् (००२-०५०)
बाल्यात् प्रभृति या देव (००२-०५१)
त्वयि भक्तिर् ममाच्युत (००२-०५१)
वेत्ति तां भगवान् एव (००२-०५१)
हृदिस्थः सर्वदेहिनाम् (००२-०५१)
त्वत्प्रसादान् ममेशान (००२-०५२)
राज्यम् अव्याहतं भुवि (००२-०५२)
कोशदण्डौ तथातीव (००२-०५२)
शरीरारोग्यम् उत्तमम् (००२-०५२)
स्त्रियो ऽन्नपानसामर्थ्या (००२-०५३)
हानिः स्वल्पापि नास्ति मे (००२-०५३)
बलं नागसहस्रस्य (००२-०५३)
धारयाम्य् अरिसूदन (००२-०५३)
संततिर् निभृता भृत्या (००२-०५४)
सानुरागाश् च मे जनाः (००२-०५४)

धर्महानिश् च देवेश (००२-०५४)
न हि मे पालने भुवः (००२-०५४)
यद् यद् इच्छाम्य् अहं तत् तत् (००२-०५५)
सर्वम् अस्ति जगत्पते (००२-०५५)
एतेनैवानुमानेन (००२-०५५)
प्रसन्नो भगवान् इति (००२-०५५)
ज्ञातं मया हि गोविन्दे (००२-०५६)
नाप्रसन्ने विभूतयः (००२-०५६)
एवं सर्वसुखाह्लाद- (००२-०५६)
मध्यस्थो ऽपि च केशव (००२-०५६)
पुनरावृत्तिदुःखानां (००२-०५७)
त्रासाद् उद्विग्नमानसः (००२-०५७)
मयि प्रसादाभिमुखं (००२-०५७)
मनस् ते यदि केशव (००२-०५७)
तन् माम् अगाधे संसारे (००२-०५७)
मग्नम् उद्धर्तुम् अर्हसि (००२-०५७)
सुखानि तानि नैवान्ते (००२-०५८)
येषां दुःखं न तत् सुखम् (००२-०५८)
यद् अन्ते दुःखम् आगामि (००२-०५८)
किंपाकस्यैव भक्षणम् (००२-०५८)
स प्रसादं कुरु गुरो (००२-०५९)
जगताम् त्वं जनार्दन (००२-०५९)
ज्ञानदानेन येनेमां (००२-०५९)
वागुरान् निस्तरेमहि (००२-०५९)
इत्य् उक्तस् तस्य गोविन्दः (००२-०६०)
कथयाम् आस योगवित् (००२-०६०)
योगं निर्बीजम् अत्यन्त- (००२-०६०)
दुःखसंयोगभेषजम् (००२-०६०)
उपदिष्टे ततो योगे (००२-०६१)
प्रणिपत्याच्युतं नृपः (००२-०६१)
पुनः प्राह महाबाहुर् (००२-०६१)
विनयावनतः स्थितः (००२-०६१)
देवदेव त्वया योगो (००२-०६२)
यः प्रोक्तो मधुसूदन (००२-०६२)
नैष प्राप्यो मया नान्यैर् (००२-०६२)
मानवैर् अजितेन्द्रियैः (००२-०६२)
विषया दुर्जयाः पुंभिर् (००२-०६३)
इन्द्रियाकर्षिणः सदा (००२-०६३)
इन्द्रियाणां जयं तेषु (००२-०६३)
कः शक्तानां करिष्यति (००२-०६३)
अहं ममेति चाख्याति (००२-०६४)
दुर्जयं चञ्चलं मनः (००२-०६४)
रागादयः कथं जेतुं (००२-०६४)
शक्या जन्मान्तरैर् अपि (००२-०६४)
सो ऽहम् इच्छामि देवेश (००२-०६५)
त्वत्प्रसादाद् अनिर्जितैः (००२-०६५)
रागादिभिर् अमर्त्यत्वं (००२-०६५)
प्राप्तुं प्रक्षीणकल्मषः (००२-०६५)
यद्य् एवं मुक्तिकामस् त्वं (००२-०६६)

नरनाथ शृणुष्व तत् (००२-०६६)
क्रियायोगं समस्तानां (००२-०६६)
क्लेशानां हानिकारकम् (००२-०६६)
मन्मना भव मद्भक्तो (००२-०६७)
मद्याजी मां नमस्कुरु (००२-०६७)
माम् एवैष्यसि युक्त्वैवम् (००२-०६७)
आत्मानं मत्परायणः (००२-०६७)
मद्भावना मद्यजना (००२-०६८)
मद्भक्ता मत्परायणाः (००२-०६८)
मम पूजापराश् चैव (००२-०६८)
मयि यान्ति लयं नराः (००२-०६८)
सर्वभूतेषु मां पश्य (००२-०६९)
समवस्थितम् ईश्वरम् (००२-०६९)
कर्तासि केन वैरत्वं (००२-०६९)
एवं दोषान् प्रहास्यसि (००२-०६९)
जङ्गमाजङ्गमे ज्ञाते (००२-०७०)
मय्य् आत्मनि तथा तव (००२-०७०)
रागलोभादिनाशेन (००२-०७०)
भवित्री कृतकृत्यता (००२-०७०)
भक्त्यातिप्रवणस्यापि (००२-०७१)
चञ्चलत्वान् मनो यदि (००२-०७१)
मय्य् अनासादवद् भूप (००२-०७१)
कुरु मद्रूपिणीं तनुम् (००२-०७१)
सुवर्णरजताद्यैस् त्वं (००२-०७२)
शैलमृद्दारुलेखजाम् (००२-०७२)
पूजामहैर् विविधैः (००२-०७२)
संपूजय च पार्थिव (००२-०७२)
तस्यां चित्तं समावेश्य (००२-०७३)
त्याजयान्यान् व्यपाश्रयान् (००२-०७३)
पूजिता सैव ते भक्त्या (००२-०७३)
ध्याता चैवोपकारिणी (००२-०७३)
गच्छंस् तिष्ठन् स्वपन् भुञ्जंस् (००२-०७४)
ताम् एवाग्रे च पृष्ठतः (००२-०७४)
उपर्य् अधस् तथा पार्श्वे (००२-०७४)
चिन्तयान्तस् तथात्मनः (००२-०७४)
स्नानैस् तीर्थोदकैर् हृद्यैः (००२-०७५)
पुष्पगन्धानुलेपनैः (००२-०७५)
वासोभिर् भूषणैर् भक्ष्यैर् (००२-०७५)
गीतवाद्यैर् मनोहरैः (००२-०७५)
यच् च यच् च नृपेष्टं ते (००२-०७६)
किंचिद् भोज्यादि तेन ताम् (००२-०७६)
भक्तिनम्रो नरश्रेष्ठ (००२-०७६)
प्रीणयार्चां कृतां मम (००२-०७६)
रागेणाकृष्यते चेतो (००२-०७७)
गन्धर्वाभिमुखं यदि (००२-०७७)
मयि बुद्धिं समावेश्य (००२-०७७)
गायेथा मम तां कथाम् (००२-०७७)
कथायां रमते चेतो (००२-०७८)
यदि तत्भावना मम (००२-०७८)

श्रोतव्या प्रीतियुक्तेन (००२-०७८)
अवतारेषु या कथा (००२-०७८)
एवं मय्य् अर्पितमनाश् (००२-०७९)
चेतसो ये व्यपाश्रयाः (००२-०७९)
हेयास् तान् अखिलान् भूप (००२-०७९)
परित्यक्ष्यस्य् अभीर् भव (००२-०७९)
अक्षीणरागदोषो ऽपि (००२-०८०)
मत्क्रिया परमः परम् (००२-०८०)
पदम् आप्स्यसि मा भैस् त्वं (००२-०८०)
मय्य् अर्पितमना भव (००२-०८०)
मयि संन्यस्य सर्वं त्वम् (००२-०८१)
आत्मानं यत् तवास्ति च (००२-०८१)
मदर्थं कुरु कर्माणि (००२-०८१)
मा च धर्मव्यतिक्रमम् (००२-०८१)
राज्यं कुरु नरश्रेष्ठ (००२-०८२)
निवेद्य पृथिवीं मम (००२-०८२)
तद्व्याघातपरा ये च (००२-०८२)
जहि तान् अवनीपते (००२-०८२)
एतेनैवोपदेशेन (००२-०८३)
व्याख्यातम् अखिलं तव (००२-०८३)
क्रियायोगं समास्थाय (००२-०८३)
मय्य् अर्पितमना भव (००२-०८३)
मद्धिताय जगन्नाथ (००२-०८४)
क्रियायोगाश्रितं मम (००२-०८४)
विस्तरेणेदम् आख्याहि (००२-०८४)
प्रसन्नस् त्वं हि दुःखहा (००२-०८४)
त्वाम् ऋतेन हि नो वक्तुं (००२-०८५)
समर्थो ऽन्यो जगद्गुरो (००२-०८५)
गुह्यम् एतत् पवित्रं च (००२-०८५)
तद् आचक्ष्य प्रसीद मे (००२-०८५)
आख्यास्यत्य् एतद् अखिलं (००२-०८६)
वसिष्ठस् ते पुरोहितः (००२-०८६)
मत्प्रसादाद् अविकलं (००२-०८६)
स च वेत्स्यत्य् अशेषतः (००२-०८६)
इत्य् उक्त्वान्तर्दधे देवः (००२-०८७)
सर्वलोकेश्वरो हरिः (००२-०८७)
स च राजा वनाद् भूयो (००२-०८७)
निजम् अभ्यागमत् पुरम् (००२-०८७)
राज्यस्थस् तु महीपालः (००३-००१)
प्रणिपत्य पुरोहितम् (००३-००१)
वसिष्ठं परिपप्रच्छ (००३-००१)
विष्णोर् आराधनं प्रति (००३-००१)
देवदेवेन भगवन्न् (००३-००२)
आदिष्टो ऽसि महात्मना (००३-००२)
क्रियायोगाश्रितं सर्वं (००३-००२)
व्याख्यास्यति भवान् किल (००३-००२)
स त्वां पृच्छाम्य् अहं सर्वं (००३-००३)
क्रियायोगेन केशवम् (००३-००३)
संतोषयितुम् ईशानं (००३-००३)

यथा शक्ष्यामि तद् वद (००३-००३)
देवप्रसादाद् अखिला (००३-००४)
ममापि स्मृतिर् आगता (००३-००४)
ज्ञानम् एतद् अशेषं ते (००३-००४)
कथयामि निबोध तत् (००३-००४)
भक्तिमान् अभवद् दैत्यो (००३-००५)
हिरण्यकशिपोः सुतः (००३-००५)
नारायणे महाप्रज्ञः (००३-००५)
सर्वलोकपरायणे (००३-००५)
स पप्रच्छ भृगुश्रेष्ठं (००३-००५)
शुक्रम् आत्मपुरोहितम् (००३-००५)
भगवन् नृसिंहरूपस्य (००३-००६)
विष्णोस् तातं जिघांसतः (००३-००६)
दृष्टं देहे मया सर्वं (००३-००६)
त्रैलोक्यं भूर्भुवादिकम् (००३-००६)
ब्रह्मा प्रजापतिश् चेन्द्रो (००३-००७)
रुद्रैः पशुपतिः सह (००३-००७)
वसवो ऽष्टौ तथादित्या (००३-००७)
द्वादशाहःक्षपा मही (००३-००७)
दिशो नभस् तारकौघं (००३-००८)
नक्षत्रग्रहसंकुलम् (००३-००८)
अश्विनौ मरुतः साध्या (००३-००८)
विश्वेदेवास् तथ र्षयः (००३-००८)
वर्षाचलास् तथा नद्यः (००३-००९)
सप्त सप्त कुलाचलाः (००३-००९)
समुद्राः सप्त ऋतवः (००३-००९)
कान्ताराणि वनानि च (००३-००९)
नगरग्रामतरुभिः (००३-००९)
समावेतं च भूतलम् (००३-००९)
एतच् चान्यच् च यत् किंचिद् (००३-०१०)
देवर्षिपितृमानवम् (००३-०१०)
सतिर्यगूर्ध्वपातालं (००३-०१०)
तस्य दृष्टं तनौ मया (००३-०१०)
सो ऽहं तम् अजरं देवं (००३-०११)
दुष्टदैत्यनिवर्हणम् (००३-०११)
आराधयितुम् इच्छामि (००३-०११)
भगवंस् त्वदनुज्ञया (००३-०११)
अनुग्राह्यो ऽस्मि यदि ते (००३-०१२)
ममायं भक्तिमान् इति (००३-०१२)
तन् ममोपदिशाद्य त्वं (००३-०१२)
महद् आराधनं हरेः (००३-०१२)
अनुग्राह्यो ऽसि देवस्य (००३-०१३)
नूनम् अव्यक्तजन्मनः (००३-०१३)
आराधनाय दैत्येन्द्र (००३-०१३)
यत् ते तत्प्रवणं मनः (००३-०१३)
यदि देवपतिं विष्णुम् (००३-०१४)
आराधयितुम् इच्छसि (००३-०१४)
भगवन्तम् अनाद्यन्तं (००३-०१४)
भव भागवतो ऽसुर (००३-०१४)

न ह्य् अभागवतैर् विष्णुर् (००३-०१५)
ज्ञातुं स्तोतुं च तत्त्वतः (००३-०१५)
द्रष्टुं वा शक्यते मर्त्यैः (००३-०१५)
प्रवेष्टुं कुत एव हि (००३-०१५)
जन्मभिर् बहुभिः पूता (००३-०१६)
नरास् तद्गतचेतसः (००३-०१६)
भवन्ति वै भागवतास् (००३-०१६)
ते विष्णुं प्रविशन्ति च (००३-०१६)
अनेकजन्मसंसार- (००३-०१७)
चिते पापसमुच्चये (००३-०१७)
नाक्षीणे जायते पुंसां (००३-०१७)
गोविन्दाभिमुखी मतिः (००३-०१७)
प्रद्वेषं याति गोविन्दे (००३-०१८)
द्विजान् वेदांश् च निन्दति (००३-०१८)
यो नरस् तं विजानीयाद् (००३-०१८)
असुरांशसमुद्भवम् (००३-०१८)
पाषण्डेषु रतिः पुंसां (००३-०१९)
हेतुवादानुकूलता (००३-०१९)
जायते विष्णुमायाम्भः- (००३-०१९)
पतितानां दुरात्मनाम् (००३-०१९)
यदा पापक्षयः पुंसां (००३-०२०)
तदा वेदद्विजातिषु (००३-०२०)
विष्णौ च यज्ञपुरुषे (००३-०२०)
श्रद्धा भवति ते यथा (००३-०२०)
यदा स्वल्पावशेषस् तु (००३-०२१)
नराणां पापसंचयः (००३-०२१)
भवन्ति ते भागवतास् (००३-०२१)
तदा दैत्यपते नराः (००३-०२१)
भ्राम्यताम् अत्र संसारे (००३-०२२)
नराणां कर्मदुर्गमे (००३-०२२)
हस्तावलम्बदो ह्य् एको (००३-०२२)
भक्तिप्रीतो जनार्दनः (००३-०२२)
स त्वं भागवतो भूत्वा (००३-०२३)
सर्वपापहरं हरिम् (००३-०२३)
आराधय परं भक्त्या (००३-०२३)
प्रीतिम् एष्यति केशवः (००३-०२३)
किंलक्षणा भागवता (००३-०२४)
भवन्ति पुरुषा गुरो (००३-०२४)
यच् च भागवतैः कार्यं (००३-०२४)
तन् मे कथय भार्गव (००३-०२४)
कर्मणा मनसा वाचा (००३-०२५)
प्राणिनां यो न हिंसकः (००३-०२५)
भावभक्तश् च गोविन्दे (००३-०२५)
दैत्य भागवतो हि सः (००३-०२५)
यो ब्राह्मणांश् च वेदांश् च (००३-०२६)
नित्यम् एन्वानुमंस्यति (००३-०२६)
न च द्रोग्धा परं वादे (००३-०२६)
दैत्य भागवतो हि सः (००३-०२६)
सर्वान् देवान् हरिं वेत्ति (००३-०२७)

सर्वलोकांश् च केशवम् (००३-०२७)
तेभ्यश् च नान्यम् आत्मानं (००३-०२७)
दैत्य भागवतो हि सः (००३-०२७)
देवं मनुष्यम् अन्यं वा (००३-०२८)
पशुपक्षिपिपीलिकान् (००३-०२८)
तरुपाषाणकष्ठादि (००३-०२८)
भूम्यम्भोगगनं दिशः (००३-०२८)
आत्मानं वापि देवेशान् (००३-०२९)
नातिरिक्तं जनार्दनात् (००३-०२९)
यो भजेत विजानीष्व (००३-०२९)
तं वै भागवतं नरम् (००३-०२९)
सर्वं भगवतो भावो (००३-०३०)
यद् भूतं भवसंस्थितम् (००३-०३०)
इति यो वै विजानाति (००३-०३०)
स तु भागवतो नरः (००३-०३०)
भवभीतिं हरत्य् एष (००३-०३१)
भक्तिभावेन भावितः (००३-०३१)
भगवान् इति भावो यः (००३-०३१)
स तु भागवतो नरः (००३-०३१)
भावं न कुरुते यस् तु (००३-०३२)
सर्वभूतेषु पापकम् (००३-०३२)
कर्मणा मनसा वाचा (००३-०३२)
स तु भागवतो नरः (००३-०३२)
बाह्यार्थनिरपेक्षो यो (००३-०३३)
भक्तो भगवतः क्रियाम् (००३-०३३)
भावेन निष्पादयति (००३-०३३)
ज्ञेयो भागवतस् तु सः (००३-०३३)
नारयो यस्य न स्निग्धा (००३-०३४)
न चोदासी न वृत्तयः (००३-०३४)
पश्यतः सर्वम् एवेदं (००३-०३४)
विष्णुं भागवतो हि सः (००३-०३४)
सुतप्तेनेह तपसा (००३-०३५)
यज्ञैर् वा बहुदक्षिणैः (००३-०३५)
तां गतिं न नरा यान्ति (००३-०३५)
यां वै भागवता गताः (००३-०३५)
योगच्युतैर् भागवतैर् (००३-०३६)
देवराजः शतक्रतुः (००३-०३६)
अर्वाङ् निरीक्ष्यते यज्ञी (००३-०३६)
किमु ये योगपारगाः (००३-०३६)
यज्ञनिष्पत्तये वेदा (००३-०३७)
यज्ञो यज्ञपतेः कृते (००३-०३७)
तत्तोषणाय भावेन (००३-०३७)
तस्माद् भागवतो भव (००३-०३७)
येन सर्वात्मना विष्णौ (००३-०३८)
भक्त्या भावो निवेशितः (००३-०३८)
दैत्येश्वर कृतार्थत्वाच् (००३-०३८)
श्लाघ्यो भागवतो हि सः (००३-०३८)
अपि नः स कुले धन्यो (००३-०३९)
जायते कुलपावनः (००३-०३९)

भगवान् भक्तिभावेन (००३-०३९)
येन विष्णुर् उपासितः (००३-०३९)
यः कारयति देवार्चां (००३-०४०)
हृदयालम्बनं हरेः (००३-०४०)
स नरो विष्णुसालोक्यम् (००३-०४०)
उपैति धूतकल्मषः (००३-०४०)
यश् च देवालयं भक्त्या (००३-०४१)
विष्णोः कारयति स्वयम् (००३-०४१)
स सप्तपुरुषांल् लोकान् (००३-०४१)
विष्णोर् नयति मानवः (००३-०४१)
यावन्त्य् अब्दानि देवार्चा (००३-०४२)
हरेस् तिष्ठति मन्दिरे (००३-०४२)
तावद्वर्षसहस्राणि (००३-०४२)
विष्णुलोके स मोदते (००३-०४२)
देवार्चा लक्षणोपेता (००३-०४३)
तद्गृहं सततं दिवि (००३-०४३)
निष्कामं च मनो यस्य (००३-०४३)
स यात्य् अक्षरसात्म्यताम् (००३-०४३)
पुष्पाण्य् अतिसुगन्धीनि (००३-०४४)
मनोज्ञानि च यः पुमान् (००३-०४४)
प्रयच्छति हृषीकेशे (००३-०४४)
तद्भावगतमानसः (००३-०४४)
धूपांश् च विविधांस् तांस् तान् (००३-०४५)
गन्धाढ्यं चानुलेपनम् (००३-०४५)
दीपावल्युपहारांश् च (००३-०४५)
यच् चाभीष्टम् अथात्मनः (००३-०४५)
नरः सो ऽनुदिनं यज्ञं (००३-०४६)
करोत्य् आराधनं हरेः (००३-०४६)
यज्ञेशो भगवान् विष्णुर् (००३-०४६)
मखैर् अपि हि तोष्यते (००३-०४६)
बहूपकरणा यज्ञा (००३-०४७)
नानासंभारविस्तराः (००३-०४७)
प्राप्यन्ते ते धनयुतैर् (००३-०४७)
मनुष्यैर् नाल्पसंचयैः (००३-०४७)
भक्त्या च पुरुषैः पूजा (००३-०४८)
कृता दूर्वाङ्कुरैर् अपि (००३-०४८)
हरेर् ददाति हि फलं (००३-०४८)
सर्वयज्ञैः सुदुर्लभम् (००३-०४८)
यानि पुष्पाणि हृद्यानि (००३-०४९)
धूपगन्धानुलेपनम् (००३-०४९)
दयितं भूषणं यच् च (००३-०४९)
ये च कौशेयवाससी (००३-०४९)
यानि चाभ्यवहाराणि (००३-०५०)
भक्ष्याणि च फलानि च (००३-०५०)
प्रयच्छ तानि गोविन्दे (००३-०५०)
भवेथाश् चैव तन्मनाः (००३-०५०)
आद्यन्तं यज्ञपुरुषं (००३-०५१)
यथाशक्त्या प्रसादय (००३-०५१)
आराध्य याति तं देवं (००३-०५१)

तस्मिन्न् एव नरो लयम् (००३-०५१)
पुण्यैस् तीर्थोदकैर् गन्धैर् (००३-०५२)
मधुना सर्पिषा तथा (००३-०५२)
क्षीरेण स्नापयेद् ईशम् (००३-०५२)
अच्युतं जगतः पतिम् (००३-०५२)
दधिक्षीरह्रदान् पुण्यांस् (००३-०५३)
ततो लोकान् मधुच्युतः (००३-०५३)
प्रयास्यस्य् असुरश्रेष्ठ (००३-०५३)
निर्वृतिं चापि शाश्वतीम् (००३-०५३)
स्तोत्रैर् गीतैस् तथा वाद्यैर् (००३-०५४)
ब्राह्मणानां च तर्पणैः (००३-०५४)
मनसश् चैकतायोगाद् (००३-०५४)
आराधय जनार्दनम् (००३-०५४)
आराध्य तं विदेहानां (००३-०५५)
पुरुषाः सप्तसप्ततिः (००३-०५५)
हैहयाः पञ्चपञ्चाशद् (००३-०५५)
अमृतत्वम् उपागताः (००३-०५५)
स त्वम् एभिः प्रकारैस् तम् (००३-०५६)
उपवासैश् च केशवम् (००३-०५६)
तोषयाद्यो हि तुष्टो ऽसौ (००३-०५६)
विष्णुर् द्वन्द्वप्रशान्तिदः (००३-०५६)
उपवासैर् हृषीकेशः (००४-००१)
कथं तुष्यति भार्गव (००४-००१)
परिहारांस् तथाचक्ष्व (००४-००१)
ये त्याज्याश् चोपवासिनाम् (००४-००१)
यद् यत् कार्यं यथा चैव (००४-००२)
केशवाराधने नरैः (००४-००२)
तत् सर्वं विस्तराद् ब्रह्मन् (००४-००२)
यथावद् वक्तुम् अर्हसि (००४-००२)
स्मृतः संपूजितो धूप- (००४-००३)
पुष्पाद्यैर् दयितैर् हरिः (००४-००३)
भोगिनाम् उपकाराय (००४-००३)
किं पुनश् चोपवासिनाम् (००४-००३)
उपावृत्तस् तु पापेभ्यो (००४-००४)
यस् तु वासो गुणैः सह (००४-००४)
उपवासः स विज्ञेयः (००४-००४)
सर्वभोगविवर्जितः (००४-००४)
एकरात्रं द्विरात्रं वा (००४-००५)
त्रिरात्रम् अथवापरम् (००४-००५)
उपवासी हरिं यस् तु (००४-००५)
भक्त्या ध्यायति मानवः (००४-००५)
तन्नामजापी तत्कर्म- (००४-००६)
रतिस् तद्गतमानसः (००४-००६)
निष्कामो दैत्य स ब्रह्म (००४-००६)
परम् आप्नोत्य् असंशयम् (००४-००६)
यं च कामम् अभिध्यायन् (००४-००७)
केशवार्पितमानसः (००४-००७)
उपोष्यति तम् आप्नोति (००४-००७)
प्रसन्ने गरुडध्वजे (००४-००७)

कथ्यते च पुरा विप्रः (००४-००८)
पुलस्त्यो ब्रह्मवादिना (००४-००८)
दाल्भ्येन पृष्टो ऽकथयद् (००४-००८)
यथैतद् अरिसूदन (००४-००८)
ब्राह्मणैः क्षत्रियैर् वैश्यैः (००४-००९)
शूद्रैः स्त्रीभिस् तथा मुने (००४-००९)
संसारगर्तपङ्कस्थैः (००४-००९)
सुगतिः प्राप्यते कथम् (००४-००९)
अनाराध्य जगन्नाथं (००४-०१०)
सर्वधातारम् अच्युतम् (००४-०१०)
निर्व्यलीकेन चित्तेन (००४-०१०)
कः प्रयास्यति सद्गतिम् (००४-०१०)
विषयग्राहि वै यस्य (००४-०११)
न चित्तं केशवार्पितम् (००४-०११)
स कथं पापपङ्काङ्की (००४-०११)
नरो यास्यति सद्गतिम् (००४-०११)
यदि संसारदुःखार्तः (००४-०१२)
सुगतिं गन्तुम् इच्छसि (००४-०१२)
तदाराधय सर्वेशं (००४-०१२)
जगद्धातारम् अच्युतम् (००४-०१२)
पुष्पैः सुगन्धैर् हृद्यैश् च (००४-०१३)
धूपैः सागरुचन्दनैः (००४-०१३)
वासोभिर् भूषणैर् भक्ष्यैर् (००४-०१३)
उपवासपरायणः (००४-०१३)
यदि संसारनिर्वेदाद् (००४-०१४)
अभिवाञ्छसि सद्गतिम् (००४-०१४)
तदाराधय गोविन्दं (००४-०१४)
यच् चेष्टं तव चेतसि (००४-०१४)
पुष्पाणि यदि ते न स्युः (००४-०१५)
शस्तं पादपपल्लवैः (००४-०१५)
दूर्वाङ्कुरैर् अपि ब्रह्मंस् (००४-०१५)
तदभावे ऽर्चयाच्युतम् (००४-०१५)
सुगन्धिपुष्पदीपाद्यैर् (००४-*(३))
यः कुर्यात् केशवालये (००४-*(३))
सर्वतीर्थफलं तस्य (००४-*(३))
संभवेत् केशवार्चया (००४-*(३))
सबाह्याभ्यन्तरं यस् तु (००४-*(३))
मार्जयेद् अच्युतालयम् (००४-*(३))
सबाह्याभ्यन्तरं तस्य (००४-*(३))
कायो निष्कल्मषो भवेत् (००४-*(३))
पुष्पपत्राम्बुभिर् धूपैर् (००४-०१६)
यथाविभवम् अच्युतः (००४-०१६)
पूजितस् तुष्टिम् अतुलां (००४-०१६)
भक्त्यायात्य् एकचेतसाम् (००४-०१६)
यः सदायतने विष्णोः (००४-०१७)
कुरुते मार्जनक्रियाम् (००४-०१७)
स पांसुभूमेर् देहाच् च (००४-०१७)
सर्वपापं व्यपोहति (००४-०१७)
यावन्त्यः पांसुकणिका (००४-०१८)

मार्ज्यन्ते केशवालये (००४-०१८)
दिनानि दिवि तावन्ति (००४-०१८)
तिष्ठत्य् अस्तमलो नरः (००४-०१८)
अहन्य् अहनि यत् पापं (००४-०१९)
कुरुते द्विजसत्तम (००४-०१९)
गोचर्ममात्रं संमार्ज्य (००४-०१९)
हन्ति तत् केशवालये (००४-०१९)
यश् चोपलेपनं कुर्याद् (००४-०२०)
विष्णोर् आयतने नरः (००४-०२०)
सो ऽपि लोकं समासाद्य (००४-०२०)
मोदते च शतक्रतोः (००४-०२०)
मृदा धातुविकारैर् वा (००४-०२१)
वर्णकैर् गोमयेन वा (००४-०२१)
उपलेपनकृद् याति (००४-०२१)
विमानं मणिचित्रितम् (००४-०२१)
उदकाभ्युक्षणं विष्णोर् (००४-०२२)
यः करोति तथा गृहे (००४-०२२)
सो ऽपि गच्छति यत्रास्ते (००४-०२२)
भगवान् यादसां पतिः (००४-०२२)
पुष्पप्रकरम् अत्यर्थं (००४-०२३)
सुगन्धं केशवालये (००४-०२३)
उपलिप्ते नरो दत्त्वा (००४-०२३)
न दुर्गतिम् अवाप्नुयात् (००४-०२३)
विमानम् अतिविद्योति (००४-०२४)
सर्वरत्नमयं दिवि (००४-०२४)
समाप्नोति नरो दत्त्वा (००४-०२४)
दीपकं केशवालये (००४-०२४)
यस् तु संवत्सरं पूर्णं (००४-०२५)
तिलपात्रप्रदो नरः (००४-०२५)
ध्वजं तु विष्णवे दद्यात् (००४-०२५)
समम् एतत् फलं द्विज (००४-०२५)
विधुन्वन् हन्ति वातेन (००४-०२६)
दातुर् अज्ञानतः कृतम् (००४-०२६)
पापं केतुर् गृहे विष्णोर् (००४-०२६)
दिवारात्रम् असंशयम् (००४-०२६)
गीतवाद्यादिभिर् देवं (००४-०२७)
य उपास्ते जनार्दनम् (००४-०२७)
गान्धर्वैर् गीतनृत्यैः स (००४-०२७)
विमानस्थो निषेव्यते (००४-०२७)
जातिस्मरत्वं मेधां च (००४-०२८)
तथैवोपरमे स्मृतिम् (००४-०२८)
प्राप्नोति विष्ण्वायतने (००४-०२८)
पुण्याख्यानकथाकरः (००४-०२८)
उपोषितः पूजितो वा (००४-*(४))
दृष्टो वा नमितो ऽपि वा (००४-*(४))
प्रदम्भ हरते (?) पापं (००४-*(४))
को न सेवेद् धरिं ततः (००४-*(४))
वेदवादक्रियायज्ञ- (००४-*(४))
स्नानतीर्थफलं परम् (००४-*(४))

अष्टाङ्गप्रणिपातेन (००४-*(४))
प्रणिपत्य हरिं लभेत् (००४-*(४))
प्रगम्य हृदा शिरसा (००४-*(४))
पादपद्मे महीतले (००४-*(४))
निष्कल्मषो भवेत् सद्यो (००४-*(४))
न नाटी पादपांसुना (००४-*(४))
एकस्य कृष्णस्य क्राजतः प्रणामो (००४-*(४))
दशाश्वमेधावभृथेन तुल्यः (००४-*(४))
दशाश्वमेधैः पुनर् एति जन्म (००४-*(४))
कृष्णप्रणामी न पुनर्भवाय (००४-*(४))
एवं देवेश्वरो भक्त्या (००४-०२९)
येन विष्णुर् उपासितः (००४-०२९)
स प्राप्नोति गतिं श्लाघ्यां (००४-०२९)
यां याम् इच्छति चेतसा (००४-०२९)
देवत्वं मनुजैः कैश्चिद् (००४-०३०)
गन्धर्वत्वं तथापरैः (००४-०३०)
विद्याधरत्वम् अपरैर् (००४-०३०)
आराध्याप्तं जनार्दनम् (००४-०३०)
शक्रः क्रतुशतेनेशम् (००४-०३१)
आराध्य गरुडध्वजम् (००४-०३१)
देवेन्द्रत्वं गतस् तस्मान् (००४-०३१)
नान्यः पूज्यतमः क्वचित् (००४-०३१)
देवेभ्यो ऽपि हि पूज्यस् तु (००४-०३२)
स्वगुरुर् ब्रह्मचारिणः (००४-०३२)
तस्यापि यज्ञपुरुषो (००४-०३२)
विष्णुः पूज्यो द्विजोत्तम (००४-०३२)
स्त्रियश् च भर्तारम् ऋते (००४-०३३)
पूज्यम् अन्यन् न दैवतम् (००४-०३३)
भर्तुर् गृहस्थस्य सतः (००४-०३३)
पूज्यो यज्ञपतिर् हरिः (००४-०३३)
वैखानसानाम् आराध्यस् (००४-०३४)
तपोभिर् मधुसूदनः (००४-०३४)
ध्येयः परिव्राजकानां (००४-०३४)
वासुदेवो महात्मनाम् (००४-०३४)
एवं सर्वाश्रमाणां हि (००४-०३५)
वासुदेवः परायणम् (००४-०३५)
सर्वेषां चैव वर्णानां (००४-०३५)
तम् आराध्याप्नुयाद् गतिम् (००४-०३५)
शृणुष्व गदतः काम्याम् (००४-०३६)
उपवासांस् तथापरान् (००४-०३६)
तत् तम् आश्रित्य यान् कामान् (००४-०३६)
कुर्वीतेप्सितम् आत्मनः (००४-०३६)
एकादश्यां शुक्लपक्षे (००४-०३७)
फाल्गुने मासि यो नरः (००४-०३७)
जपेत् कृष्णेति देवस्य (००४-०३७)
नाम भक्त्या पुनःपुनः (००४-०३७)
देवार्चने चाष्टशतं (००४-०३८)
कृत्वैतत् तु जपेच् छुचिः (००४-०३८)
प्रातः प्रस्थानकाले च (००४-०३८)

उत्थाने स्खलिते क्षुते (००४-०३८)
पाषण्डपतितांश् चैव (००४-०३९)
तथैवान्त्यावसायिनः (००४-०३९)
नालपेत तथा कृष्णम् (००४-०३९)
अर्चयेच् छ्रद्धयान्वितः (००४-०३९)
इदं चोदाहरेत् कृष्णे (००४-०३९)
मनः संधाय तत्परः (००४-०३९)
कृष्ण कृष्ण कृपालुस् त्वम् (००४-०४०)
अगतीनां गतिर् भव (००४-०४०)
संसारान्तर्निमग्नानां (००४-०४०)
प्रसीद मधुसूदन (००४-०४०)
एवं प्रसाद्योपावासं (००४-०४१)
कृत्वा नियतमानसः (००४-०४१)
पूर्वाह्न एव चान्येद्युर् (००४-०४१)
गव्यं संप्रास्य वै सकृत् (००४-०४१)
स्नातो ऽर्चयित्वा कृष्णेति (००४-०४१)
पुनर् नाम प्रकीर्तयेत् (००४-०४१)
वारिधारात्रयं चैव (००४-०४२)
विक्षिपेद् देवपादयोः (००४-०४२)
चैत्रवैशाखयोश् चैव (००४-०४२)
तद्वज् ज्येष्ठे तु पूजयेत् (००४-०४२)
मर्त्यलोके गतिं श्रेष्ठां (००४-०४३)
दाल्भ्य प्राप्नोति वै नरः (००४-०४३)
उत्क्रान्तिकाले कृष्णस्य (००४-०४३)
स्मरणं च तथाप्नुते (००४-०४३)
आषाढे श्रावणे चैव (००४-०४४)
मासे भाद्रपदे तथा (००४-०४४)
तथैवाश्वयुजे देवम् (००४-०४४)
अनेन विधिना नरः (००४-०४४)
उपोष्य संपूज्य तथा (००४-०४५)
केशवेति च कीर्तयेत् (००४-०४५)
गोमूत्रप्राशनात् पूर्वं (००४-०४५)
स्वर्गलोकगतिं व्रजेत् (००४-०४५)
आराधितस्य जगताम् (००४-०४६)
ईश्वरस्याव्यायात्मनः (००४-०४६)
उत्क्रान्तिकाले स्मरणं (००४-०४६)
केशवस्य तथाप्नुयात् (००४-०४६)
क्षीरस्य प्राशनं यस् तु (००४-०४७)
विधिं चेमं यथोदितम् (००४-०४७)
कार्त्तिकादि यथान्यायं (००४-०४७)
कुर्यान् मासचतुष्टयम् (००४-०४७)
तेनैव विधिना ब्रह्मन् (००४-०४८)
विष्णोर् नाम प्रकीर्तयेत् (००४-०४८)
स याति विष्णुसालोक्यं (००४-०४८)
विष्णुं स्मरति च क्षये (००४-०४८)
प्रतिमासं द्विजातिभ्यो (००४-०४९)
दद्याद् दानं यथेच्छया (००४-०४९)
चातुर्मास्ये च संपूर्णे (००४-०४९)
पुण्यं श्रवणकीर्तनम् (००४-०४९)

कथां वा वासुदेवस्य (००४-०५०)
तद्गीतीर् वापि कारयेत् (००४-०५०)
एवम् एतां गतिं श्रेष्ठां (००४-०५०)
देवनामानुकीर्तनात् (००४-०५०)
कथितं पारणं यत् ते (००४-०५१)
कार्ष्णं मासचतुष्टयम् (००४-०५१)
आधिपत्यं तथा भोगांस् (००४-०५१)
तेन प्राप्नोति मानुषान् (००४-०५१)
द्वितीयेन तथा भोगान् (००४-०५२)
ऐन्द्रान् प्राप्नोति मानवः (००४-०५२)
विष्णोर् लोकं तृतीयेन (००४-०५२)
पारणेन तथाप्नुयात् (००४-०५२)
एवम् एतत् समाख्यातं (००४-०५३)
गतिप्रापकम् उत्तमम् (००४-०५३)
विधानं द्विजशार्दूल (००४-०५३)
कृष्णतुष्टिप्रदं नृणाम् (००४-०५३)
सुगतिद्वादशीम् एतां (००४-०५४)
श्रद्दधानस् तु यो नरः (००४-०५४)
उपोष्य च तथा नारी (००४-०५४)
प्राप्नोति त्रिविधां गतिम् (००४-०५४)
एषा धन्या पापहरा (००४-०५५)
तिथिर् नित्यम् उपासिता (००४-०५५)
आराधनाय शिष्टैषा (००४-०५५)
देवदेवस्य चक्रिणः (००४-०५५)
पञ्चदश्यां च शुक्लस्य (००५-००१)
फाल्गुनस्यैव सत्तम (००५-००१)
पाषण्डपतितांश् चैव (००५-००१)
तथैवान्त्यावसायिनः (००५-००१)
नास्तिकान् भिन्नवृत्तींश् च (००५-००२)
पापिनश् चाप्य् अनालपन् (००५-००२)
नारायणे गतमनाः (००५-००२)
पुरुषो नियतेन्द्रियः (००५-००२)
तिष्ठन् व्रजन् प्रस्खलिते (००५-००३)
क्षुते वापि जनार्दनम् (००५-००३)
कीर्तयेत् तत्क्रियाकाले (००५-००३)
सप्तकृत्वः प्रकीर्तयेत् (००५-००३)
लक्ष्म्या समन्वितं देवम् (००५-००४)
अर्चयेच् च जनार्दनम् (००५-००४)
संध्याव्युपरमे चेन्दु- (००५-००४)
स्वरूपं हरिम् ईश्वरम् (००५-००४)
रात्रिं च लक्ष्मीं संचिन्त्य (००५-००५)
सम्यग् अर्घ्येन पूजयेत् (००५-००५)
नक्तं च भुञ्जीत नरस् (००५-००५)
तैलक्षारविवर्जितम् (००५-००५)
तथैव चैत्रवैशाख- (००५-००६)
ज्येष्ठेषु मुनिसत्तम (००५-००६)
अर्चयीत यथाप्रोक्तं (००५-००६)
प्राप्ते प्राप्ते तु तद्दिने (००५-००६)
निष्पादितं भवेद् एकम् (००५-००७)

पारणं दाल्भ्य भक्तितः (००५-००७)
द्वितीयं चापि वक्ष्यामि (००५-००७)
पारणं द्विजसत्तम (००५-००७)
आषाढे श्रावणे मासि (००५-००८)
प्राप्ते भाद्रपदे तथा (००५-००८)
तथैवाश्वयुजे ऽभ्यर्च्य (००५-००८)
श्रीधरं च श्रिया सह (००५-००८)
सम्यक् चन्द्रमसे दत्त्वा (००५-००९)
भुञ्जीतार्घ्यं यथाविधि (००५-००९)
द्वितीयम् एतद् आख्यातं (००५-००९)
तृतीयं पारणं शृणु (००५-००९)
कार्त्तिकादिषु मासेषु (००५-०१०)
तथैवाभ्यर्च्य केशवम् (००५-०१०)
भूत्या समन्वितं दद्याच् (००५-०१०)
शशाङ्कायार्हनं निशि (००५-०१०)
भुञ्जीत च तथा प्रोक्तं (००५-०११)
तृतीयम् इति पारणम् (००५-०११)
प्रतिपूजासु दद्याच् च (००५-०११)
ब्राह्मणेभ्यश् च दक्षिणाम् (००५-०११)
प्रतिमासं च वक्ष्यामि (००५-०१२)
प्राशनं कायशोधनम् (००५-०१२)
चतुरः प्रथमान् मासान् (००५-०१२)
पञ्चगव्यम् उदाहृतम् (००५-०१२)
कुशोदकं तथैवान्यद् (००५-०१३)
उक्तं मासचतुष्टयम् (००५-०१३)
सूर्यांशुतप्तं तद्वच् च (००५-०१३)
जलं मासचतुष्टयम् (००५-०१३)
गीतवाद्यादिकं पाठ्यं (००५-०१४)
तथा कृष्णस्य वा कथान् (००५-०१४)
कारियीत च देवस्य (००५-०१४)
पारणे पारणे गते (००५-०१४)
एवं संपूज्य विधिवत् (००५-०१५)
सपत्नीकं जनार्दनम् (००५-०१५)
नाप्नोतीष्तवियोगादीन् (००५-०१५)
पुमान् योषिद् अथापि वा (००५-०१५)
जनार्दनं सलक्ष्मीकम् (००५-०१६)
अर्चयेत् प्रथमं ततः (००५-०१६)
सश्रीकं श्रीधरं भक्त्या (००५-०१६)
तृतीये भूतिकेशवौ (००५-०१६)
यावन्त्य् एतद्विधानेन (००५-०१७)
पारणेनार्चति प्रभुम् (००५-०१७)
तावन्ति जन्मान्य् असुखं (००५-०१७)
नाप्नोतीष्टवियोगजम् (००५-०१७)
देवस्य च प्रसादेन (००५-०१८,*(६))
मरणे प्राप्य तत्स्मृतिम् (००५-०१८,*(६))
कुले सतां स्फीतधने (००५-०१८)
भोगभुज् जायते नरः (००५-०१८)
नारिं प्राप्नोति न व्याधिं (००५-*(५))
नरकं च न पश्यति (००५-*(५))

दुर्गमं यममार्गं च (००५-*(५))
नेक्षते द्विजसत्तम (००५-*(५))
श्रोतुम् इच्छाम्य् अहं तात (००५-०१९)
यममार्गं सुदुर्गमम् (००५-०१९)
यथा सुखेन संयान्ति (००५-०१९)
मानवास् तद् वदस्व मे (००५-०१९)
प्रतिमासं तु नामानि (००५-०२०)
कृष्णस्यैतानि द्वादश (००५-०२०)
कृतोपवासः सुस्नातः (००५-०२०)
पूजयित्वा जनार्दनम् (००५-०२०)
उच्चारयन् नरो ऽभ्येति (००५-०२०)
सुसुखेनैव तत्पथम् (००५-०२०)
ततो विप्राय वै दद्याद् (००५-०२१)
उदकुम्भं सदक्षिणं (००५-०२१)
उपानद्वस्त्रयुग्मं च (००५-०२१)
छत्त्रं कनकम् एव च (००५-०२१)
यद् वै मासगतं नाम (००५-०२२)
तत्प्रीतिश् चापि संवदेत् (००५-०२२)
संवत्सरान्ते ऽप्य् अथवा (००५-०२२)
प्रतिमासं द्विजान् बुधः (००५-०२२)
वाचयेद् उदकुम्भाद्यैर् (००५-०२२)
दानैः सर्वान् अनुक्रमात् (००५-०२२)
केशवं मार्गशीर्षे तु (००५-०२३)
पौषे नारायणं तथा (००५-०२३)
माधवं माघमासे तु (००५-०२३)
गोविन्दं फाल्गुने तथा (००५-०२३)
विष्णुं चैत्रे ऽथ वैशाखे (००५-०२४)
तथैव मधुसूदनम् (००५-०२४)
ज्येष्ठे त्रिविक्रमं देवम् (००५-०२४)
आषाढे वामनं तथा (००५-०२४)
श्रावणे श्रीधरं चैव (००५-०२५)
हृषीकेशेति चापरम् (००५-०२५)
नाम भाद्रपदे मासि (००५-०२५)
गीयते पुण्यकाङ्क्षिभिः (००५-०२५)
पद्मनाभं चाश्वयुजे (००५-०२६)
दामोदरम् अतः परम् (००५-०२६)
कार्त्तिके देवदेवेशं (००५-०२६)
स्तुवंस् तरति दुर्गतिम् (००५-०२६)
इह वै स्वस्थतां प्राप्य (००५-०२७)
मरणे स्मरणं ततः (००५-०२७)
याम्यक्लेशम् असंप्राप्य (००५-०२७)
स्वर्गलोके महीयते (००५-०२७)
ततो मानुष्यम् आसाद्य (००५-०२८)
निरातङ्को गतज्वरः (००५-०२८)
धनधान्यवति स्फीते (००५-०२८)
जन्म साधुकुले ऽर्हति (००५-०२८)
उपवासव्रतानीह (००६-००१)
केशवाराधनं प्रति (००६-००१)
ममाचक्ष्व महाभाग (००६-००१)

परं कौतूहलं हि मे (००६-००१)
कामान् यान् यान् नरो भक्तो (००६-००२)
मनसेच्छति केशवात् (००६-००२)
व्रतोपवासनात् प्रीतस् (००६-००२)
तांस् तान् विष्णुः प्रयच्छति (००६-००२)
रत्नपर्वतम् आरुह्य (००६-००३)
यथा रत्नं महामुने (००६-००३)
सत्त्वानुरूपम् अदत्ते (००६-००३)
तथा कृत्स्नान् मनोरथान् (००६-००३)
मार्गशीर्षं तु यो मासम् (००६-००४)
एकभक्तेन यः क्षपेत् (००६-००४)
कुर्वन् वै विष्णुशुश्रूषां (००६-००४)
स देशे जायते शुभे (००६-००४)
पौषमासं तथा दाल्भ्य (००६-००५)
एकभक्तेन यः क्षपेत् (००६-००५)
शुश्रूषणपरः शौरेर् (००६-००५)
न रोगी स च जायते (००६-००५)
माघमासं द्विजश्रेष्ठ (००६-००६)
एकभक्तेन यः क्षपेत् (००६-००६)
विष्णुशुश्रूषणपरः (००६-००६)
स कुले जायते सताम् (००६-००६)
क्षपयेद् एकभक्तेन (००६-००७)
शुश्रूषुर् यश् च फाल्गुनम् (००६-००७)
सौभाग्यं स्वजनानां स (००६-००७)
सर्वेषाम् एति सोन्नतिम् (००६-००७)
चैत्रं विष्णुपरो मासम् (००६-००८)
एकभक्तेन यः क्षपेत् (००६-००८)
सुवर्णमणिमुक्ताढ्यं (००६-००८)
स गार्हस्थ्यम् अवाप्नुयात् (००६-००८)
यः क्षपेद् एकभक्तेन (००६-००९)
वैशाखं पूजयन् हरिम् (००६-००९)
नरो वा यदि वा नारी (००६-००९)
ज्ञातीनां श्रेष्ठतां व्रजेत् (००६-००९)
कृष्णार्पितमना ज्येष्ठम् (००६-०१०)
एकभक्तेन यः क्षपेत् (००६-०१०)
ऐश्वर्यम् अतुलं श्रेष्ठं (००६-०१०)
पुमान् स्त्री वाभिजायते (००६-०१०)
आषाढम् एकभक्तेन (००६-०११)
यो नयेद् विष्णुतन्मनाः (००६-०११)
बहुधान्यो बहुधनो (००६-०११)
बहुपुत्रश् च जायते (००६-०११)
क्षपयेद् एकभक्तेन (००६-०१२)
श्रावणं विष्णुतत्परः (००६-०१२)
धनधान्यहिरण्याढ्ये (००६-०१२)
कुले स ज्ञातिवर्धनः (००६-०१२)
एकाहारो भाद्रपदं (००६-०१३)
यश् च कृष्णपरायणः (००६-०१३)
धनाढ्यं स्फीतम् अचलम् (००६-०१३)
ऐश्वर्यं प्रतिपद्यते (००६-०१३)

नयंश् चाश्वयुजं विष्णुं (००६-०१४)
पूजयेद् एकभोजनः (००६-०१४)
धनवान् वाहनाढ्यश् च (००६-०१४)
बहुपुत्रश् च जायते (००६-०१४)
कार्त्तिके चैकदा भुङ्क्ते (००६-०१५)
यश् च विष्णुपरो नरः (००६-०१५)
शूरश् च कृतविद्यश् च (००६-०१५)
बहुपुत्रश् च जायते (००६-०१५)
यस् तु संवत्सरं पूर्णम् (००६-०१६)
एकभक्तो भवेन् नरः (००६-०१६)
अहिंसः सर्वभूतेषु (००६-०१६)
वासुदेवपरायणः (००६-०१६)
नमो ऽस्तु वासुदेवायेत्य् (००६-०१७)
अहश् चाष्टशतं जपेत् (००६-०१७)
अतिरात्रस्य यज्ञस्य (००६-०१७)
ततः फलम् अवाप्नुयात् (००६-०१७)
दश वर्षसहस्राणि (००६-०१८)
स्वर्गलोके महीयते (००६-०१८)
तत्क्षयाद् इह चागत्य (००६-०१८)
माहात्म्यं प्रतिपद्यते (००६-०१८)
ब्राह्मणः क्षत्रियो वैश्यः (००६-०१९)
स्त्री शूद्रो वा यथोदितान् (००६-०१९)
उपवासान् इमान् कुर्वन् (००६-०१९)
फलान्य् एतान्य् अवाप्नुयात् (००६-०१९)
जगत्पतिं जगद्योनिं (००६-०२०)
जगन्निष्ठं जगद्गुरुम् (००६-०२०)
जयं शरणम् अभ्येत्य (००६-०२०)
न जनैः शोच्यते जनः (००६-०२०)
यस्य नाम्नि स्मृते मर्त्यः (००६-०२१)
समुत्क्रान्तेर् अनन्तरम् (००६-०२१)
प्राप्नोति शाश्वतं स्थानं (००६-०२१)
ततः पूज्यतरो हि सः (००६-०२१)
नादिर् न मध्यं नैवान्तो (००६-०२२)
यस्य देवस्य विद्यते (००६-०२२)
अनादित्वाद् अमध्यत्वाद् (००६-०२२)
अनन्तत्वाच् च सो ऽव्ययः (००६-०२२)
परापरं सुकृतवतां परां गतिं (००६-०२३)
स्वयंभुवं प्रभवन् निधानम् अव्ययम् (००६-०२३)
सनातनं यद् अमृतम् अच्युतं ध्रुवं (००६-०२३)
प्रविश्य तं हरिम् अमरत्वम् अश्नुते (००६-०२३)
शृणु दाल्भ्य परं काम्यं (००७-००१)
व्रतं संततिदं नृणाम् (००७-००१)
यम् उपोष्य न विच्छेदः (००७-००१)
पितृपिण्डस्य जायते (००७-००१)
कृष्णाष्टम्यां चैत्रमासे (००७-००२)
स्नातो नियतमानसः (००७-००२)
कृष्णम् अभ्यर्च्य पूजां च (००७-००२)
देवक्याः कुरुते तु यः (००७-००२)
निराहारो जपन् नाम (००७-००३)

कृष्णस्य जगतः पतेः (००७-००३)
उपविष्टो जपस्नान- (००७-००३)
क्षुतप्रस्खलितादिषु (००७-००३)
पूजायां चापि कृष्णस्य (००७-००४)
सप्त वारान् प्रकीर्तयेत् (००७-००४)
पाषण्डिनो विकर्मस्थान् (००७-००४)
नालपेच् चैव नास्तिकान् (००७-००४)
प्रभाते तु पुनः स्नातो (००७-००५)
दत्त्वा विप्राय दक्षिणाम् (००७-००५)
भुञ्जीत कृतपूजस् तु (००७-००५)
कृष्णस्यैव जगत्पतेः (००७-००५)
वैशाखज्येष्ठयोश् चैव (००७-००६)
पारणं हि त्रिमासिकम् (००७-००६)
उपोष्य देवदेवेशं (००७-००६)
घृतेन स्नापयेद् धरिम् (००७-००६)
आषाढे श्रावणे चैव (००७-००७)
मासे भाद्रपदे तथा (००७-००७)
उपोषिते द्वितीयं वै (००७-००७)
पारणं पूर्ववत् तु तत् (००७-००७)
तथैवाश्वयुजं चादिं (००७-००८)
कृत्वा मासत्रयं बुधः (००७-००८)
उपोष्य स्नापयेद् देवं (००७-००८)
हविषा पारणे गते (००७-००८)
पौषे माघे फाल्गुने च (००७-००९)
नरस् तद्वद् उपोषितः (००७-००९)
चतुर्थे पारणे पूर्णे (००७-००९)
घृतेन स्नापयेद् धरिम् (००७-००९)
एवं कृतोपवासस्य (००७-०१०)
पुरुषस्य तथा स्त्रियः (००७-०१०)
न संततेः परिच्छेदः (००७-०१०)
कदाचिद् अभिजायते (००७-०१०)
कृष्णाष्टमीम् इमां यस् तु (००७-०११)
नरो योषिद् अथापि वा (००७-०११)
उपोष्यतीह साह्लादं (००७-०११)
नृलोके प्राप्य निर्वृत्तिम् (००७-०११)
पुत्रपौत्रसमृद्धिं च (००७-०१२)
मृतः स्वर्गे महीयते (००७-०१२)
इत्य् एतत् कथितं दाल्भ्य (००७-०१२)
मया कृष्णाष्टईव्रतम् (००७-०१२)
प्रावृट्काले तु नियमात्र् (००७-०१३)
शृणु काम्यान् इमान् मम (००७-०१३)
प्रावृट्काले यदा शेते (००७-०१४)
वासुदेवः पयोनिधौ (००७-०१४)
भोगिभोगे निजां मायां (००७-०१४)
योगनिद्रां च मानयन् (००७-०१४)
विशिष्टा न प्रवर्तन्ते (००७-०१५)
तदा यज्ञादिकाः क्रियाः (००७-०१५)
देवानां सा भवेद् रात्रिर् (००७-०१५)
दक्षिणायनसंज्ञिता (००७-०१५)

यदा स्वपिति गोविन्दो (००७-०१६)
यस् तु मासं चतुष्टयम् (००७-०१६)
अधःशायी ब्रह्मचारी (००७-०१६)
केशवार्पितमानसः (००७-०१६)
नमो नमो ऽस्तु कृष्णाय (००७-०१७)
केशवाय नमो नमः (००७-०१७)
नमो ऽस्तु नरसिंहाय (००७-०१७)
विष्णवे च नमो नमः (००७-०१७)
इति प्रातस् तथा सायं (००७-०१८)
जपेद् देवक्रियापरः (००७-०१८)
शमयत्य् अतिदुष्पारं (००७-०१८)
दुरितं जन्मसंचितम् (००७-०१८)
मधु मांसं च यो मासाञ् (००७-०१९)
चतुरस् तान् निरस्यति (००७-०१९)
देवक्रियारतिर् विष्णोर् (००७-०१९)
अनुस्मरणतत्परः (००७-०१९)
सो ऽपि स्वर्गं समभ्येति (००७-०२०)
च्युतस् तस्मात् तु जायते (००७-०२०)
अरोगी धनधान्याढ्यः (००७-०२०)
कुलसंततिमान् नरः (००७-०२०)
समस्तमन्दिराणां च (००७-०२१)
यः सुप्ते मधुसूदने (००७-०२१)
निर्वृत्तिं कुरुते सो ऽपि (००७-०२१)
देवो वैमानिको भवेत् (००७-०२१)
अनेनैव विधानेन (००७-०२२)
नरो विष्णुक्रियापरः (००७-०२२)
एकाहारो भवेद् यस् तु (००७-०२२)
सर्वपापैः प्रमुच्यते (००७-०२२)
सुप्ते च सर्वलोकेशे (००७-०२३)
नक्तभोजी भवेत् तु यः (००७-०२३)
सर्वपापविनिर्मुक्तः (००७-०२३)
स्वर्गलोके ऽमरो भवेत् (००७-०२३)
शस्तं त्व् अनन्तरं पुंसां (००७-०२४)
ततश् चैवेकभोजनम् (००७-०२४)
नक्तभोजनतुल्यं तु (००७-०२४)
नोपवासफलं क्वचित् (००७-०२४)
तैलाभङ्गं च यो मासांश् (००७-०२५)
चतुरस् तान् निरस्यति (००७-०२५)
सो ऽप्य् अङ्गलावण्यगुणम् (००७-०२५)
आरोग्यं च नरो लभेत् (००७-०२५)
यस् त्व् एतानि समस्तानि (००७-०२६)
मासान् एतान् नरश् चरेत् (००७-०२६)
स विष्णुलोकम् आसाद्य (००७-०२६)
विष्णोर् अनुचरो भवेत् (००७-०२६)
चतुर्भिः पारणं मासैर् (००७-०२७)
निष्पाद्यं हरितत्परैः (००७-०२७)
ब्राह्मणान् भोजयेद् दद्यात् (००७-०२७)
ततस् तेभ्यश् च दक्षिणाम् (००७-०२७)
पूजयेच् च जगन्नाथं (००७-०२८)

सर्वपापहरं हरिम् (००७-०२८)
प्रीयस्व देव गोविन्देत्य् (००७-०२८)
एवं चैव प्रसादयेत् (००७-०२८)
इति दाल्भ्य समाख्यातं (००७-०२९)
चातुर्मास्ये हि यद् व्रतम् (००७-०२९)
देवदेवस्य सुप्तस्य (००७-०२९)
द्वादशीं शृणु चापराम् (००७-०२९)
यस्याम् अनन्तस्मरणाद् (००७-०२९)
अनन्तफलभाग् भवेत् (००७-०२९)
मासि प्रोष्ठपदे शुक्ले (००८-००१)
द्वादश्यां जलशायिनम् (००८-००१)
प्रणम्यानन्तम् अभ्यर्च्य (००८-००१)
पुष्पधूपादिभिः शुचिः (००८-००१)
पाषण्डादिभिर् आलापम् (००८-००२)
अकुर्वन् नियतात्मवान् (००८-००२)
विप्राय दक्षिणां दत्त्वा (००८-००२)
नक्तं भुङ्क्ते तु यो नरः (००८-००२)
तिष्ठन् व्रजन् स्वपंश् चैव (००८-००३)
क्षुतप्रस्खलितादिषु (००८-००३)
अनन्तनामस्मरणं (००८-००३)
कुर्वन्न् उच्चारणं तथा (००८-००३)
अनेनैव विधानेन (००८-००४)
मासान् द्वादश वै क्रमात् (००८-००४)
उपोष्य पारणे पूर्णे (००८-००४)
समभ्यर्च्य जगद्गुरुम् (००८-००४)
गीतवाद्येन हृद्येन (००८-००४)
प्रीणयन् व्युष्टिम् अश्नुते (००८-००४)
अनन्तं गीतवाद्येन (००८-००५)
यतः फलम् उदाहृतम् (००८-००५)
तेनानन्तं समभ्यर्च्य (००८-००५)
तद् एव लभते फलम् (००८-००५)
एवं यः पुरुषः कुर्याद् (००८-००६)
अनन्ताराधनं शुचिः (००८-००६)
नारी वा स्वर्गम् अभ्येत्य (००८-००६)
सो ऽनन्तफलम् अश्नुते (००८-००६)
एवं दाल्भ्य हृषीकेशो (००८-००७)
नरैर् भक्त्या यथाविधि (००८-००७)
फलं ददात्य् असुलभं (००८-००७)
सलिलेनापि पूजितः (००८-००७)
न विष्णुर् वित्तदानेन (००८-००८)
पुष्पैर् वा न फलैस् तथा (००८-००८)
आराध्यते सुशुद्धेन (००८-००८)
हृदयेनैव केवलम् (००८-००८)
रागाद्यपेतं हृदयं (००८-००९)
वाग् दुष्टा नानृतादिना (००८-००९)
हिंसादिरहितः कायः (००८-००९)
केशवाराधनत्रयम् (००८-००९)
रागादिदूषिते चित्ते (००८-०१०)
नास्पदी मधुसूदनः (००८-०१०)

करोति न रतिं हंसः (००८-०१०)
कदाचित् कर्दमाम्भसि (००८-०१०)
न योग्या केशवस्तुत्यै (००८-०११)
वाग् दुष्टा चानृतादिना (००८-०११)
तमसो नाशनायालं (००८-०११)
नेन्दोर् लेखा घनावृता (००८-०११)
हिंसादिदूषितः कायः (००८-०१२)
केशवाराधने कुतः (००८-०१२)
जनचित्तप्रसादाय (००८-०१२)
न नभस् तिमिरावृतम् (००८-०१२)
तस्माच् छृद्धस्व भावेन (००८-०१३)
सत्यभावेन च द्विज (००८-०१३)
अहिंसकेन गोविन्दो (००८-०१३)
निसर्गाद् एव तोषितः (००८-०१३)
सर्वस्वम् अपि कृष्णाय (००८-०१४)
यो दद्यात् कुटिलाशयः (००८-०१४)
स नैवाराधयत्य् एनं (००८-०१४)
सद्भावेनार्चयाच्युतम् (००८-०१४)
रागाद्यपेतं हृदयं (००८-०१५)
कुरु त्वं केशवार्पितम् (००८-०१५)
ततः प्राप्स्यसि दुःप्राप्यम् (००८-०१५)
अयत्नेनैव केशवम् (००८-०१५)
भगवन् कथितः सम्यक् (००८-०१६)
काम्यो ऽयं केशवं प्रति (००८-०१६)
आराधनविधिः सर्वो (००८-०१६)
भूयः पृच्छामि तद् वद (००८-०१६)
कुले जन्म तथारोग्यं (००८-०१७)
धनर्द्धिश् चेह दुर्लभा (००८-०१७)
त्रितयं प्राप्यते येन (००८-०१७)
तन् मे वद महामुने (००८-०१७)
मातामहं काण्वम् उदारवीर्यं (००८-०१८)
महर्षिम् अभ्यर्च्य कुलप्रसूतिम् (००८-०१८)
पप्रच्छ पुंसाम् अथ योषितां च (००८-०१८)
दुष्वन्तपुत्रो भरतः प्रणम्य (००८-०१८)
यथावद् आचष्ट ततो महात्मा (००८-०१९)
स राजवर्याय यथा कुलेषु (००८-०१९)
प्रयान्ति सूतिं पुरुषाः स्त्रियश् च (००८-०१९)
यथा च सम्यक् सुखिनो भवन्ति (००८-०१९)
पौषे सिते द्वादशमे ऽह्नि सार्के (००८-०२०)
तथार्क्षयोगे जगतः प्रसूतिम् (००८-०२०)
संपूज्य विष्णुं विधिनोपवासी (००८-०२०)
स्रग्गन्धधूपान्नवरोपहारैः (००८-०२०)
गृह्णीत मासं प्रतिमासपूजाम् (००८-०२१)
दानादियुक्तं व्रतम् अब्दम् एकम् (००८-०२१)
दद्याच् च दानं द्विजपुङ्गवेभ्यस् (००८-०२१)
तद् उच्यमानं विनिबोध भूप (००८-०२१)
घृतं तिलान् व्रीहियवं हिरण्यं (००८-०२२)
यवान्नम् अम्भःकरकान्नपानम् (००८-०२२)
छत्त्रं पयो ऽन्नं गुडफाणिताढ्यं (००८-०२२)

स्रक्चन्दनं वस्त्रम् अनुक्रमेण (००८-०२२)
मासे च मासे विधिनोदितेन (००८-०२३)
तस्यां तिथौ लोकगुरुं प्रपूज्य (००८-०२३)
अश्नीत यान्य् आत्मविशुद्धिहेतोः (००८-०२३)
संप्राशनानीह निबोध तानि (००८-०२३)
गोमूत्रम् अम्भो घृतम् आमशाकं (००८-०२४)
दूर्वा दधि व्रीहियवांस् तिलांश् च (००८-०२४)
सूर्यांशुतप्तं जलम् अम्बु दार्भं (००८-०२४)
क्षीरं च मासक्रमशोपयुञ्ज्यात् (००८-०२४)
कुले प्रधाने धनधान्यपूर्णे (००८-०२५)
विवेकवत्य् अस्तसमस्तदुःखे (००८-०२५)
प्राप्नोति जन्माविकलेन्द्रियश् च (००८-०२५)
भवत्य् अरोगो मतिमान् सुखी च (००८-०२५)
तस्मात् त्वम् अप्य् एतद् अमोघविद् यो (००८-०२६)
नारायणाराधनम् अप्रमत्तः (००८-०२६)
कुरुष्व विष्णुं भगवन्तम् ईशम् (००८-०२६)
आराध्य कामान् अखिलान् उपैति (००८-०२६)
यदा च शुक्लद्वादश्यां (००९-००१)
नक्षत्रं श्रवणं भवेत् (००९-००१)
तदा सा तु महापुण्या (००९-००१)
द्वादशी विजया स्मृता (००९-००१)
तस्यां स्नातः सर्वतीर्थैः (००९-००२)
स्नातो भवति मानवः (००९-००२)
संपूज्य वर्षपूजायाः (००९-००२)
सकलं फलम् अश्नुते (००९-००२)
एकं जप्त्वा सहस्रस्य (००९-००३)
जप्तस्याप्नोति यत् फलम् (००९-००३)
दानं सहस्रगुणितं (००९-००३)
तथा वै विप्र भोजनम् (००९-००३)
यत् क्षेमम् अपि वै तस्यां (००९-*(७))
सहस्रं श्रावणे तु तत् (००९-*(७))
अन्यस्याम् एव तिथ्यां (००९-*(७))
शुभायां श्रावणं यदा (००९-*(७))
होमस् तथोपवासश् च (००९-००३)
सहस्राख्यफलप्रदः (००९-००३)
रोहिण्याश् च यदा कृष्ण- (०१०-००१)
पक्षे ऽष्टम्यां द्विजोत्तम (०१०-००१)
जयन्ती नाम सा प्रोक्ता (०१०-००१)
सर्वपापहरा तिथिः (०१०-००१)
यद् बाल्ये यच् च कौमारे (०१०-००२)
यौवने वार्द्धिके च यत् (०१०-००२)
सप्तजन्मकृतं पापं (०१०-००२)
स्वल्पं वा यदि वा बहु (०१०-००२)
तत् क्षालयति गोविन्दं (०१०-००३)
तस्याम् अभ्यर्च्य भक्तितः (०१०-००३)
होमजप्यादिदानानां (०१०-००३)
फलं च शतसंमितम् (०१०-००३)
संप्राप्नोति न संदेहो (०१०-००४)
यच् चान्यन् मनसेच्छति (०१०-००४)

उपवासश् च तत्रोक्तो (०१०-००४)
महापातकनाशनः (०१०-००४)
एकदश्यां शुक्लपक्षे (०११-००१)
यदा क्षं वै पुनर्वसुः (०११-००१)
नाम्ना सातिजयाख्याता (०११-००१)
तिथीनाम् उत्तमा तिथिः (०११-००१)
यो ददाति तिलप्रस्थं (०११-००२)
तृष्कालं वत्सरं नरः (०११-००२)
उपवासं च तस्यां यः (०११-००२)
करोत्य् एतत् समं स्मृतम् (०११-००२)
तस्यां जगत्पतिर् देवः (०११-००३)
सर्वः सर्वेश्वरो हरिः (०११-००३)
प्रत्यक्षतां प्रयात्य् अल्पं (०११-००३)
तदानन्तफलं स्मृतम् (०११-००३)
सगरेण ककुत्स्थेन (०११-००४)
दुंधुमारेण गाधिना (०११-००४)
तस्याम् आराधितः कृष्णो (०११-००४)
दत्तवान् निखिलां भुवम् (०११-००४)
अयने चोत्तरे प्राप्ते (०१२-००१)
यः स्नापयति केशवम् (०१२-००१)
घृतप्रस्थेन पापं सः (०१२-००१)
सकलं वै व्यपोहति (०१२-००१)
कपिलां विप्रमुख्याय (०१२-००२)
ददात्य् अनुदिनं हि यः (०१२-००२)
घृतस्नानं च देवस्य (०१२-००२)
तस्मिन् काले समं हि तत् (०१२-००२)
स्नाप्यमानं च पश्यति (०१२-००३)
ये घृतेनोत्तरायणे (०१२-००३)
ते यान्ति विष्णुसालोक्यं (०१२-००३,०१३-*(८))
सर्वपापविवर्जिताः (०१२-००३,०१३-*(८))
मैत्रेयी ब्राह्मणी पूर्वं (०१३-००१)
याज्ञवल्क्यम् अपृच्छत (०१३-००१)
प्रणिपत्य महाभागं (०१३-००१)
योगेश्वरम् अकल्मषम् (०१३-००१)
पापप्रशमनायालं (०१३-००२)
यत् पुण्यस्योपवृंहकम् (०१३-००२)
मनोरथप्रदं यच् च (०१३-००२)
तद् व्रतं कथ्यतां मम (०१३-००२)
कानि दानानि शस्तानि (०१३-००३)
स्नानानि च यतव्रत (०१३-००३)
प्रशस्तास् तिथयः काश् च (०१३-००३)
प्राशनानि च शंस मे (०१३-००३)
सर्वदानानि शस्तानि (०१३-००४)
यान्य् उद्दिश्य जनार्दनम् (०१३-००४)
दीयन्ते विप्रमुख्येभ्यः (०१३-००४)
श्रद्धापूतेन चेतसा (०१३-००४)
ता एव तिथयः शस्ता (०१३-००५)
यास्व् अभ्यर्च्य जनार्दनम् (०१३-००५)
क्रियन्ते श्रधया सम्यग् (०१३-००५)

उपवासव्रताः सदा (०१३-००५)
प्राप्यते विविधैर् यज्ञैर् (०१३-००६)
यत् फलं साध्वसाधुभिः (०१३-००६)
उपवासैस् तद् आप्नोति (०१३-००६)
समभ्यर्च्य जनार्दनम् (०१३-००६)
मनोरथानां संप्राप्ति- (०१३-००७)
कारकं पापनाशनम् (०१३-००७)
श्रूयतां मम धर्मज्ञे (०१३-००७)
व्रतानाम् उत्तमं व्रतम् (०१३-००७)
यत् कृत्वा न जडो नान्धो (०१३-००८)
बधिरो न च दुःखितः (०१३-००८)
न चैवेष्टवियोगार्ति (०१३-००८)
कश्चित् प्राप्नोति मानवः (०१३-००८)
न चाप्रियो ऽस्य लोकस्य (०१३-००९)
न दरिद्रो न दुर्गतिः (०१३-००९)
सप्त जन्मानि भवति (०१३-००९)
सर्वपापैः प्रमुच्यते (०१३-००९)
विष्णुव्रतम् इदं ख्यातं (०१३-०१०)
भाषितं विष्णुना स्वयम् (०१३-०१०)
पौषशुक्लद्वितीयादि (०१३-०११)
कृत्वा दिनचतुष्टयम् (०१३-०११)
षण्मासपारणप्रायं (०१३-०११)
गृह्णीयात् परमं व्रतम् (०१३-०११)
पूर्वं सिद्धार्थकैः स्नानं (०१३-०१२)
ततः कृष्णतिलैः स्मृतम् (०१३-०१२)
वचया च तृतीये ऽह्नि (०१३-०१२)
सर्वौषध्या ततः परम् (०१३-०१२)
नाम्ना कृष्णाच्युताख्येन (०१३-०१३)
तथानन्तेन पूजयेत् (०१३-०१३)
तथैव च चतुर्थे ऽह्नि (०१३-०१३)
हृषीकेशेन केशवम् (०१३-०१३)
देवम् अभ्यर्च्य पुष्पैश् च (०१३-०१३)
पत्त्रैर् धूपानुलेपनैः (०१३-०१३)
उद्गच्छतश् च बालेन्दोर् (०१३-०१४)
दद्याद् अर्घ्यं समाहितः (०१३-०१४)
पुष्पैः पत्त्रैः फलैश् चैव (०१३-०१४)
सर्वधान्यैश् च भक्तितः (०१३-०१४)
दिनक्रमेण चैतानि (०१३-०१५)
चन्द्रनामानि कीर्तयेत् (०१३-०१५)
शशिचन्द्रशशाङ्केन्दु- (०१३-०१५)
संज्ञानि ब्रह्मवादिनि (०१३-०१५)
नक्तं भुञ्जीत मतिमान् (०१३-०१६)
यावत् तिष्ठति चन्द्रमाः (०१३-०१६)
अस्तंगते न भुञ्जीत (०१३-०१६)
व्रतभङ्गभयाच् छुभे (०१३-०१६)
एवं सर्वेषु मासेषु (०१३-०१७)
ज्येष्ठान्तेषु यशस्विनि (०१३-०१७)
कर्तव्यं वै व्रतश्रेष्ठं (०१३-०१७)
द्वितीयादिचतुर्दिनम् (०१३-०१७)

विप्राय दक्षिणां दद्यात् (०१३-०१८)
पञ्चम्यां च स्वशक्तितः (०१३-०१८)
एवं समापयेन् मासैः (०१३-०१८)
षड्भिः प्रथमपारणम् (०१३-०१८)
पारणान्ते च देवस्य (०१३-०१९)
प्रीणनं भक्तितः शुभे (०१३-०१९)
यथाशक्त्या तु कर्तव्यं (०१३-०१९)
वित्तशाठ्यं विवर्जयेत् (०१३-०१९)
आषाढादिद्वितीयं तु (०१३-०२०)
षण्मासेन तपोधने (०१३-०२०)
पारणं वै समाख्यातं (०१३-०२०)
व्रतस्यास्य शुभप्रदम् (०१३-०२०)
व्रतम् एतद् दिलीपेन (०१३-०२१)
दुष्वन्तेन ययातिना (०१३-०२१)
तथान्यैः पृथिवीपालैर् (०१३-०२१)
उपवासविधानतः (०१३-०२१)
चरितं मुनिमुख्यैश् च (०१३-०२१)
ऋचीकच्यवनादिभिः (०१३-०२१)
सुरम्भया सुकैकेय्या (०१३-०२२)
शाण्डिल्या धूम्रपिङ्गया (०१३-०२२)
सुदेष्णयाथवा रिण्या (०१३-०२२)
मतिमत्या कृताशया (०१३-०२२)
सावित्र्या पौर्णमास्या च (०१३-०२३)
वैरिण्या च सुभद्रया (०१३-०२३)
ब्राह्मणक्षत्रियविशाम् (०१३-०२३)
इति स्त्रीभिर् अनुष्ठितम् (०१३-०२३)
उर्वश्या रम्भया चैव (०१३-०२४)
सौरभेय्या तथा व्रतम् (०१३-०२४)
वराप्सरोभिर् धर्मज्ञे (०१३-०२४)
चरितं धर्मवांछया (०१३-०२४)
प्रथमे पादपूजा स्याद् (०१३-०२५)
द्वितीये नाभिपूजनम् (०१३-०२५)
तृतीये वक्षसः पूजा (०१३-०२५)
चतुर्थे शिरसो हरेः (०१३-०२५)
एतच् चीर्त्वा समस्तेभ्यः (०१३-०२६)
पापेभ्यः श्रद्धयान्वितः (०१३-०२६)
मुच्यते सकलांश् चैव (०१३-०२६)
संप्राप्नोति मनोरथान् (०१३-०२६)
व्रतानाम् उत्तमं ह्य् एतत् (०१३-०२७)
स्वयं देवेन भाषितम् (०१३-०२७)
पापप्रशमनं शस्तं (०१३-०२७)
मनोरथफलप्रदम् (०१३-०२७)
यं च कामम् अभिध्यायन् (०१३-०२८)
क्रियते नियतव्रतैः (०१३-०२८)
व्रतम् एतन् महाभागे (०१३-०२८)
तं तु पूरयते नृणाम् (०१३-०२८)
मनोरथान् पूरयति (०१३-०२९)
सर्वपापं व्यपोहति (०१३-०२९)
अव्याहतेन्द्रियत्वं च (०१३-०२९)

सप्त जन्मानि यच्छति (०१३-०२९)
माघे स्नातस्य यत् पुण्यं (०१३-०३०)
प्रयागे पापनाशनम् (०१३-०३०)
सकलं तद् अवाप्नोति (०१३-०३०)
श्रुत्वा विष्णुव्रतं त्व् इदम् (०१३-०३०)
साक्षाद् भगवता प्रोक्तं (०१३-*(९))
परमं पापनाशनम् (०१३-*(९))
शुक्लपक्षे तु पौषस्य (०१४-००१)
संप्राप्तद्वादशीं शृणु (०१४-००१)
याम् उपोष्य समाप्नोति (०१४-००१)
सर्वान् एव मनोरथान् (०१४-००१)
पाषण्डादिभिर् आलापम् (०१४-००२)
अकुर्वन् विष्णुतत्परः (०१४-००२)
पूजयेत् प्रणतो देवम् (०१४-००२)
एकाग्रमतिर् अच्युतम् (०१४-००२)
पौषादिपारणं मासैः (०१४-००३)
षड्भिर् ज्येष्ठान्तकं स्मृतम् (०१४-००३)
प्रथमे पुण्डरीकाक्षं (०१४-००३)
नाम देवस्य गीयते (०१४-००३)
द्वितीये माधवाख्यं तु (०१४-००४)
विश्वरूपं तु फाल्गुने (०१४-००४)
पुरुषोत्तमाख्यं च ततः (०१४-००४)
पञ्चमे चाच्युतेति च (०१४-००४)
षष्ठे जयेति देवस्य (०१४-००५)
गुह्यं नाम प्रकीर्त्यते (०१४-००५)
पूर्वेषु षट्सु मासेषु (०१४-००५)
स्नानप्राशनयोस् तिलाः (०१४-००५)
आषाढादिषु मासेषु (०१४-००६)
पञ्चगव्यम् उदाहृतम् (०१४-००६)
स्नाने च प्राशने चैव (०१४-००६)
प्रशस्तं पापनाशनम् (०१४-००६)
प्रतिमासं च देवस्य (०१४-००७)
कृत्वा पूजां यथाविधि (०१४-००७)
विप्राय दक्षिणां दद्याच् (०१४-००७)
श्रद्दधानः स्वशक्तितः (०१४-००७)
पारणान्ते च देवस्य (०१४-००८)
प्रीणनं भक्तिपूर्वकम् (०१४-००८)
क्रुवीत शक्त्या गोविन्दे (०१४-००८)
सद्भावाभ्यर्चनो यतः (०१४-००८)
नक्तं भुञ्जीत च ततस् (०१४-००९)
तैलक्षारविवर्जितं (०१४-००९)
एकादश्याम् उषित्वैवं (०१४-००९)
द्वादश्याम् अथवा दिने (०१४-००९)
एताम् उषित्वा धर्मज्ञे (०१४-०१०)
प्रीणनं देवतत्परः (०१४-०१०)
सर्वकामान् अवाप्नोति (०१४-०१०)
सर्वपापैः प्रमुच्यते (०१४-०१०)
यतः सर्वम् अवाप्नोति (०१४-०११)
यद् यद् इच्छति चेतसा (०१४-०११)

ततो लोकेषु विख्याता (०१४-०११)
संप्राप्तिद्वादशीति वै (०१४-०११)
कृताभिलषिता ह्य् एषा (०१४-०१२)
प्रारब्धा धर्मतत्परैः (०१४-०१२)
पूरयत्य् अखिलान् कामान् (०१४-०१२)
संश्रुता च दिने दिने (०१४-०१२)
तस्मिन्न् एव दिने पुण्ये (०१५-००१)
गोविन्दद्वादशीं शृणु (०१५-००१)
यस्यां सम्यग् अनुष्ठानात् (०१५-००१)
प्राप्नोत्य् अभिमतं फलम् (०१५-००१)
पौषमासे सिते पक्षे (०१५-००२)
द्वादश्यां समुपोषितः (०१५-००२)
संयक् संपूज्य गोविन्दं (०१५-००२)
नाम्ना देवम् अधोक्षजम् (०१५-००२)
पुष्पधूपोपहाराद्यैर् (०१५-००२)
उपवासैः समाहितः (०१५-००२)
गोविन्देति जपन् नाम (०१५-००३)
पुनस् तद्गतमानसः (०१५-००३)
विप्राय दक्षिणां दद्याद् (०१५-००३)
यथाशक्ति तपोधने (०१५-००३)
स्वपन् विबुद्धः स्खलितो (०१५-००४)
गोविन्देति च कीर्तयेत् (०१५-००४)
पाषण्डादिविकर्मस्थैर् (०१५-००४)
आलापं च विवर्जयेत् (०१५-००४)
गोमूत्रं गोमयं वापि (०१५-००५)
दधि क्षीरम् अथापि वा (०१५-००५)
गोदेहतः समुत्पन्नं (०१५-००५)
संप्राश्नीतात्मशुद्धये (०१५-००५)
द्वितीये ऽह्नि पुनः स्नातस् (०१५-००६)
तथैवाभ्यर्च्य तं प्रभुम् (०१५-००६)
तेनैव नाम्ना संस्तूय (०१५-००६)
दत्त्वा विप्राय दक्षिणाम् (०१५-००६)
ततो भुञ्जीत गोदेह- (०१५-००६)
संभूतेन समन्वितम् (०१५-००६)
एवम् एवाखिलान् मासान् (०१५-००७)
उपोष्य प्रयतः शुचिः (०१५-००७)
दद्याद् गवाह्निकं भक्त्या (०१५-००७)
प्रतिमासं स्वशक्तितः (०१५-००७)
पारिते च पुनर् वर्षे (०१५-००८)
यथाशक्ति गवाह्निकम् (०१५-००८)
दत्त्वा परगवे भूयः (०१५-००८)
शृणु यत् फलम् अश्नुते (०१५-००८)
सुवर्णशृङ्गाः पञ्च गाः (०१५-००९)
षष्ठं च वृषभं नरः (०१५-००९)
प्रतिमासं द्विजाग्रेभ्यो (०१५-००९)
यद् दत्त्वा फलम् अश्नुते (०१५-००९)
तद् आप्नोत्य् अखिलं सम्यग् (०१५-०१०)
व्रतम् एतद् उपोषितः (०१५-०१०)
तं च लोकम् अवाप्नोति (०१५-०१०)

गोविन्दो यत्र तिष्ठति (०१५-०१०)
गोविन्दद्वादशीम् एताम् (०१५-०११)
उपोष्य दिवि तारकाः (०१५-०११)
विद्योतमाना दृश्यन्ते (०१५-०११)
लोकैर् अद्यापि शोभने (०१५-०११)
उपवासव्रतानां तु (०१६-००१)
वैकल्यं यन् महामुने (०१६-००१)
दानकर्मकृतं तस्य (०१६-००१)
विपाको वद यादृशः (०१६-००१)
यज्ञानाम् उपवासानां (०१६-००२)
व्रतानां च यतव्रते (०१६-००२)
वैकल्यात् फलवैकल्यं (०१६-००२)
यादृशं तच् छृणुष्व मे (०१६-००२)
उपवासादिना राज्यं (०१६-००३)
संप्राप्यं ते तथा वसु (०१६-००३)
भ्रष्टैश्वर्या निर्धनाश् च (०१६-००३)
भवन्ति पुरुषाः पुनः (०१६-००३)
रूपं तथोत्तमं प्राप्य (०१६-००४)
व्रतवैकल्यदोषतः (०१६-००४)
काणाः कुण्ठाश् च भूयस् ते (०१६-००४)
भवन्त्य् अन्धाश् च मानवाः (०१६-००४)
उपवासान् नरः पत्नीं (०१६-००५)
नारी प्राप्य तथा पतिम् (०१६-००५)
वियोगं व्रतवैकल्याद् (०१६-००५)
उभयं तद् अवाप्नुते (०१६-००५)
ये द्रव्ये सत्य् अदातारस् (०१६-००६)
तथान्येनाहिताग्नयः (०१६-००६)
कुले च सति दुःशीला (०१६-००६)
दौष्कुलाः शीलिनश् च ये (०१६-००६)
वस्त्रानुलेपनैर् हीना (०१६-००७)
भूषणैश् चातिरूपिणः (०१६-००७)
विरूपरूपाश् च तथा (०१६-००७)
प्रसाधनगुणान्विताः (०१६-००७)
ते सर्वे व्रतवैकल्यात् (०१६-००८)
फलवैकल्यम् आगताः (०१६-००८)
गुणिनो ऽपि हि दोषेण (०१६-००८)
संयुक्ताः संभवन्ति ते (०१६-००८)
तस्मान् न व्रतवैकल्यं (०१६-००९)
यज्ञवैकल्यम् एव वा (०१६-००९)
उपवासे च कर्तव्यं (०१६-००९)
वैकल्याद् विकलं फलम् (०१६-००९)
कथंचिद् यदि वैकल्यम् (०१६-०१०)
उपवासादिके भवेत् (०१६-०१०)
किं तत्र वद कर्तव्यम् (०१६-०१०)
अच्छिद्रं येन जायते (०१६-०१०)
अखण्डद्वादशीम् एताम् (०१६-०११)
अशेषेष्व् एव कर्मसु (०१६-०११)
वैकल्यप्रशमायालं (०१६-०११)
शृणुष्व गदतो मम (०१६-०११)

मार्गशीर्षे सिते पक्षे (०१६-०१२)
द्वादश्यां नियतः शुचिः (०१६-०१२)
कृतोपवासो देवेशं (०१६-०१२)
समभ्यर्च्य जनार्दनम् (०१६-०१२)
पञ्चगव्यजलस्नातः (०१६-०१३)
पञ्चगव्यकृताशनः (०१६-०१३)
यवव्रीहिभृतं पात्रं (०१६-०१३)
दद्याद् विप्राय भक्तितः (०१६-०१३)
इदं चोच्चारयेद् भक्त्या (०१६-०१३)
देवस्य पुरतो हरेः (०१६-०१३)
सप्त जन्मानि यत् किंचिद् (०१६-०१४)
मया खण्डव्रतं कृतम् (०१६-०१४)
भगवंस् त्वत्प्रसादेन (०१६-०१४)
तद् अखण्डम् इहास्तु मे (०१६-०१४)
यथाखण्डं जगत् सर्वम् (०१६-०१५)
त्वम् एव पुरुषोत्तम (०१६-०१५)
तथाखिलान्य् अखण्डानि (०१६-०१५)
व्रतानि मम सन्तु वै (०१६-०१५)
एवम् एवानुमासं वै (०१६-०१६)
चातुर्मास्यविधिः स्मृतः (०१६-०१६)
चतुर्भिर् एव मासैस् तु (०१६-०१७)
पारणं प्रथमं स्मृतम् (०१६-०१७)
प्रीणनं च हरेः कुर्यात् (०१६-०१७)
पारिते पारणे ततः (०१६-०१७)
चैत्रादिषु च मासेषु (०१६-०१८)
चतुर्ष्व् अन्यं तु पारणम् (०१६-०१८)
तत्रापि सक्तुपात्राणि (०१६-०१८)
दद्याच् छ्रद्धासमन्वितः (०१६-०१८)
श्रावणादिषु मासेषु (०१६-०१९)
कार्त्तिकान्तेषु पारणम् (०१६-०१९)
यत्नात् तु घृतपात्राणि (०१६-०१९)
दद्याद् विप्राय भक्तितः (०१६-०१९)
एवं सम्यग् यथान्यायम् (०१६-०२०)
अखण्डद्वादशीं नरः (०१६-०२०)
यद् उपोष्यत्य् अखण्डं स (०१६-०२०)
व्रतस्य फलम् अश्नुते (०१६-०२०)
सप्त जन्मसु वैकल्यम् (०१६-०२१)
यद् व्रतस्य क्वचित् कृतम् (०१६-०२१)
करोत्य् अविकलं सर्वम् (०१६-०२१)
अखण्डद्वादशीव्रतम् (०१६-०२१)
तस्माद् एषातियत्नेन (०१६-०२२)
नरैः स्त्रीभिश् च सुव्रते (०१६-०२२)
अखण्डद्वादशी सम्यग् (०१६-०२२)
उपोष्या फलकांक्षिभिः (०१६-०२२)
एवं पुरा याज्ञवल्क्यः (०१७-००१)
पृष्टः पत्न्या महामुनिः (०१७-००१)
आचष्ट पुण्यफलदम् (०१७-००१)
उपवासविधिं परम् (०१७-००१)
तथा त्वम् अपि विप्रर्षे (०१७-००२)

केशवाराधने रतः (०१७-००२)
व्रतोपवासपरमो (०१७-००२)
भवेथा नान्यमानसः (०१७-००२)
पुनश् चैतन् महाभाग (०१७-००३)
श्रूयतां गदतो मम (०१७-००३)
प्रोक्तं नरेण देवानां (०१७-००३)
तिथिमाहात्म्यम् उत्तमम् (०१७-००३)
विजयातिजया चैव (०१७-००४)
जयन्ती पापनाशनी (०१७-००४)
तथोत्तरायणं शस्तं (०१७-००४)
सर्वदा केशवार्चने (०१७-००४)
यद् अन्यकाले वर्षेण (०१७-००५)
केशवाल् लभ्यते फलम् (०१७-००५)
सकृद् एवार्चिते कृष्णे (०१७-००५)
तद् एतास्व् अपि लभ्यते (०१७-००५)
विजयातिजया चैव (०१७-००६)
जयन्ती पापनाशनी (०१७-००६)
तथोत्तरायणं चैव (०१७-००६)
यच् छस्तं केशवार्चने (०१७-००६)
तत् सर्वं कथयेहाद्य (०१७-००७)
तिथिमाहात्म्यम् उत्तमम् (०१७-००७)
यत्र संपूजितः कृष्णः (०१७-००७)
सर्वपापं व्यपोहति (०१७-००७)
एकादश्यां सिते पक्षे (०१७-००८)
पुष्यर्क्षं यत्र सत्तम (०१७-००८)
तिथौ भवति सा प्रोक्ता (०१७-००८)
विष्णुना पापनाशनी (०१७-००८)
तस्यां संपूज्य गोविन्दं (०१७-००९)
जगताम् ईश्वरेश्वरम् (०१७-००९)
सप्तजन्मकृतात् पापान् (०१७-००९)
मुच्यते नात्र संशयः (०१७-००९)
यश् चोपवासं कुरुते (०१७-०१०)
तस्यां स्नातो द्विजोत्तम (०१७-०१०)
सर्वपापविनिर्मुक्तो (०१७-०१०)
विष्णुलोके महीयते (०१७-०१०)
दानं यद् दीयते किंचित् (०१७-०११)
समुद्दिश्य जनार्दनम् (०१७-०११)
होमो वा क्रियते तस्याम् (०१७-०११)
अक्षयं लभते फलम् (०१७-०११)
एका ऋग् देवपुरतो (०१७-०१२)
जप्ता श्रद्धावता तथा (०१७-०१२)
ऋग्वेदस्य समस्तस्य (०१७-०१२)
जपता यच्छते फलम् (०१७-०१२)
सामवेदफलं साम (०१७-०१३)
यजुर्वेदफलं यजुः (०१७-०१३)
जप्तम् एकं मुनिश्रेष्ठ (०१७-०१३)
ददात्य् अत्र न संशयः (०१७-०१३)
तारका दिवि राजन्ते (०१७-०१४)
द्योतमाना द्विजोत्तम (०१७-०१४)

समभ्यर्च्य तिथाव् अस्यां (०१७-०१४)
देवदेवं जनार्दनम् (०१७-०१४)
यतः पापम् अशेषं वै (०१७-०१५)
नाशयत्य् अत्र केशवः (०१७-०१५)
पुष्यर्क्षैकादशी ब्रह्मंस् (०१७-०१५)
तेनोक्ता पापनाशनी (०१७-०१५)
तथान्यद् अपि धर्मज्ञ (०१८-००१)
श्रूयतां गदतो मम (०१८-००१)
पदद्वयं जगद्धातुर् (०१८-००१)
देवदेवस्य शार्ङ्गिणः (०१८-००१)
संवत्सरः पादपीठं (०१८-००२)
तत्र न्यस्तं पदद्वयम् (०१८-००२)
वासुदेवेन विप्रेन्द्र (०१८-००२)
भूतानां हितकाम्यया (०१८-००२)
वामम् अस्य पदं ब्रह्मन् (०१८-००३)
उत्तरायणसंज्ञितम् (०१८-००३)
देवाद्यैः सकलैर् वन्द्यं (०१८-००३)
दक्षिणं दक्षिणायनम् (०१८-००३)
तस्मिन् यः प्रयतः सम्यग् (०१८-००४)
देवदेवस्य मानवः (०१८-००४)
करोत्य् आराधनं तस्य (०१८-००४)
तोषम् आयाति केशवः (०१८-००४)
कथम् आराधनं तस्य (०१८-००५)
देवदेवस्य शार्ङ्गिणः (०१८-००५)
क्रियते मुनिशार्दूल (०१८-००५)
तन् ममाख्यातुम् अर्हसि (०१८-००५)
उत्तरे त्व् अयने दाल्भ्य (०१८-००६)
स्नातो नियतमानसः (०१८-००६)
घृतक्षीरादिना देवं (०१८-००६)
स्नापयेद् धरणीधरम् (०१८-००६)
चारुवस्त्रोपहारैश् च (०१८-००७)
पुष्पधूपानुलेपनैः (०१८-००७)
समभ्यर्च्य ततः सम्यग् (०१८-००७)
ब्राह्मणानां च तर्पणैः (०१८-००७)
पदद्वयव्रतं सम्यग् (०१८-००७)
गृह्णीयाद् विष्णुतत्परः (०१८-००७)
स्नातो नारायणं वक्ष्ये (०१८-००८)
भुञ्जन् नारायणं तथा (०१८-००८)
भुङ्क्त्वा नारायणं चाहं (०१८-००८)
गच्छन् नारायणं ततः (०१८-००८)
स्वपन् विबुद्धः प्रणमन् (०१८-००९)
होमं कुर्वंस् तथार्चनम् (०१८-००९)
नारायणस्यानुदिनं (०१८-००९)
करिष्ये नामकीर्तनम् (०१८-००९)
यावद् अद्यदिनात् प्राप्तं (०१८-०१०)
क्रमशो दक्षिणायनम् (०१८-०१०)
स्खलिते ऽहं क्षुते चैव (०१८-०१०)
वेदनार्तो ऽथवा सदा (०१८-०१०)
तावन् नारायणं वक्ष्ये (०१८-०१०)

सर्वम् एवोत्तरायणम् (०१८-०१०)
यावज् जीववधं किंचिद् (०१८-०११)
ज्ञानतो ऽज्ञानतो ऽपि वा (०१८-०११)
करिष्ये ऽहं तथा चैव (०१८-०११)
कीर्तयिष्यामि तं प्रभुम् (०१८-०११)
यदा तदानृतं किंचिद् (०१८-०१२)
अथ वक्ष्यामि दुर्वचः (०१८-०१२)
अज्ञानाद् अथवा ज्ञानात् (०१८-०१२)
कीर्तयिष्यामि तं प्रभुम् (०१८-०१२)
षण्मासम् एष मे जापो (०१८-०१३)
नारायणमयः परः (०१८-०१३)
तं स्मरन् मरणे याति (०१८-०१३)
यां गतिं सास्तु मे गतिः (०१८-०१३)
षण्मासाभ्यन्तरे मृत्युर् (०१८-०१४)
यद्य् अकस्माद् भवेन् मम (०१८-०१४)
तन् मया वासुदेवाय (०१८-०१४)
स्वयम् आत्मा निवेदितः (०१८-०१४)
परमार्थमयं ब्रह्म (०१८-०१५)
वासुदेवमयं परम् (०१८-०१५)
यम् अन्ते संस्मरन् याति (०१८-०१५)
स मे विष्णुः परा गतिः (०१८-०१५)
यदा प्रातस् तदा सायं (०१८-०१६)
मध्याह्ने वा म्रिये ह्य् अहम् (०१८-०१६)
षण्मासाभ्यन्तरे न्यासः (०१८-०१६)
कृतो व्रतमयो मया (०१८-०१६)
तथा कुरु जगन्नाथ (०१८-०१७)
सर्वलोकपरायण (०१८-०१७)
नारायण यथा नान्यं (०१८-०१७)
त्वत्तो यामि मृते गतिम् (०१८-०१७)
एवम् उच्चार्य षण्मास- (०१८-०१८)
पारणं प्रवरं व्रतम् (०१८-०१८)
तावन् निष्पादयेद् यावत् (०१८-०१८)
संप्राप्तं दक्षिणायनम् (०१८-०१८)
ततश् च प्रीणनं कुर्याद् (०१८-०१९)
यथाशक्त्या जगद्गुरोः (०१८-०१९)
भोजयेद् ब्राह्मणान् सम्यग् (०१८-०१९)
दद्यात् तेभ्यश् च दक्षिणाम् (०१८-०१९)
एवं व्रतम् इदं दाल्भ्य (०१८-०२०)
यः पारयति मानवः (०१८-०२०)
नारी वा सर्वपापेभ्यः (०१८-०२०)
षण्मासाद् विप्र मुच्यते (०१८-०२०)
षण्मासाभ्यन्तरे चास्य (०१८-०२१)
मरणं यदि जायते (०१८-०२१)
प्राप्नोत्य् अनशनस्योक्तं (०१८-०२१)
यत् फलं तद् असंशयम् (०१८-०२१)
पदद्वयं च कृष्णस्य (०१८-०२२)
सम्यक् तेन तथार्चितम् (०१८-०२२)
हरेर् नाम जपन् भक्त्या (०१८-*(१०))
स पुरा न जनेश्वर (१८*(१०))

भगवान् उज्जगौ विष्णुः (०१८-०२२)
पुरा गार्ग्याय पृच्छते (०१८-०२२)
फाल्गुनामलपक्षस्य (०१९-००१)
एकादश्याम् उपोषितः (०१९-००१)
नरो वा यदि वा नारी (०१९-००१)
समभ्यर्च्य जगद्गुरुम् (०१९-००१)
हरेर् नाम जपेद् भक्त्या (०१९-००२)
सप्त वारान् नरेश्वर (०१९-००२)
उत्तिष्ठन् प्रस्वपंश् चैव (०१९-००२)
हरिम् एवानुकीर्तयेत् (०१९-००२)
ततो ऽन्यदिवसे प्राप्ते (०१९-००३)
द्वादश्यां प्रयतो हरिम् (०१९-००३)
स्नात्वा सम्यक् तम् अभ्यर्च्य (०१९-००३)
दद्याद् विप्राय दक्षिणाम् (०१९-००३)
हरिम् उद्दिश्य चैवाग्नौ (०१९-००४)
घृतहोमकृतक्रियः (०१९-००४)
प्रणिपत्य जगन्नाथम् (०१९-००४)
इति वाणीम् उदीरयेत् (०१९-००४)
पातालसंस्था वसुधा (०१९-००५)
यं प्रसाद्य मनोरथान् (०१९-००५)
अवाप वासुदेवो ऽसौ (०१९-००५)
प्रददातु मनोरथान् (०१९-००५)
यम् अभ्यर्च्यादितिः प्राप्ता (०१९-००६)
सकलांश् च मनोरथान् (०१९-००६)
पुत्रांश् चैवेप्सितान् देवः (०१९-००६)
प्रददातु मनोरथान् (०१९-००६)
भ्रष्टराज्यश् च देवेन्द्रो (०१९-००७)
यम् अभ्यर्च्य जगत्पतिम् (०१९-००७)
मनोरथान् अवापाग्र्यान् (०१९-००७)
स ददातु मनोरथान् (०१९-००७)
एवम् अभ्यर्च्य पूजां च (०१९-००८)
निष्पाद्य हरये ततः (०१९-००८)
भुञ्जीत प्रयतः सम्यग् (०१९-००८)
हविष्यं मनुजर्षभ (०१९-००८)
फाल्गुनं चैत्रवैशाखौ (०१९-००९)
ज्येष्ठमासं च पार्थिव (०१९-००९)
चतुर्भिः पारणं मासैर् (०१९-००९)
एभिर् निष्पादितं भवेत् (०१९-००९)
रक्तपुष्पैस् तु चतुरो (०१९-०१०)
मासान् कुर्वीत चार्चनम् (०१९-०१०)
दहेच् च गुग्गुलं प्राश्य (०१९-०१०)
गोशृङ्गक्षालनं जलम् (०१९-०१०)
हविष्यान्नं च नैवेद्यम् (०१९-०११)
आत्मनश् चैव भोजनम् (०१९-०११)
ततश् च श्रूयताम् अन्यद् (०१९-०११)
आषाढादौ तु या क्रिया (०१९-०११)
जातीपुष्पाणि धूपश् च (०१९-०१२)
शस्तः सर्जरसो नृप (०१९-०१२)
प्राश्य दर्भोदकं चात्र (०१९-०१२)

शाल्यन्नं च निवेदनम् (०१९-०१२)
स्वयं तद् एव चाश्नीयाच् (०१९-०१३)
शेषं पूर्ववद् आचरेत् (०१९-०१३)
कार्त्तिकादिषु मासेषु (०१९-०१३)
गोमूत्रं कायशोधनम् (०१९-०१३)
सुगन्धं चेच्छया धूपं (०१९-०१४)
पूजाभृङ्गारकेण च (०१९-०१४)
कासारं चात्र नैवेद्यम् (०१९-०१४)
अश्नीयात् तच् च वै स्वयम् (०१९-०१४)
प्रतिमासं च विप्राय (०१९-०१५)
दातव्या दक्षिणा तथा (०१९-०१५)
प्रीणनं चेच्छया विष्णोः (०१९-०१५)
पारणे पारणे गते (०१९-०१५)
यथाशक्ति यथाप्रीति (०१९-०१६)
वित्तशाठ्यं विवर्जयेत् (०१९-०१६)
सद्भावेनैव गोविन्दः (०१९-०१६)
पूजितः प्रीयते यतः (०१९-०१६)
पारणान्ते यथाशक्त्या (०१९-०१७)
स्नापितः पूजितो हरिः (०१९-०१७)
प्रीणितश् चेप्सितान् कामान् (०१९-०१७)
ददात्य् अव्याहतान् नृप (०१९-०१७)
एषा धन्या पापहरा (०१९-०१८)
द्वादशी फलम् इच्छताम् (०१९-०१८)
यथाभिलषितान् कामान् (०१९-०१८)
ददाति मनुजेश्वर (०१९-०१८)
पूरयत्य् अखिलान् भक्त्या (०१९-०१९)
यतश् चैषा मनोरथान् (०१९-०१९)
मनोरथद्वादशीयं (०१९-०१९)
ततो लोकेषु विश्रुता (०१९-०१९)
उपोष्यैतां त्रिभुवनं (०१९-०२०)
प्राप्तम् इन्द्रेण वै पुरा (०१९-०२०)
अदित्या चेप्सिताः पुत्रा (०१९-०२०)
धनं चोशनसा नृप (०१९-०२०)
धौम्येन चाप्य् अध्ययनम् (०१९-०२१)
अन्यैश् चाभिमतं फलम् (०१९-०२१)
राजर्षिभिस् तथा विप्रैः (०१९-०२१)
स्त्रीभिः शूद्रैश् च भूपते (०१९-०२१)
यं यं कामम् अभिध्यायेद् (०१९-०२२,*(११))
व्रतम् एतद् उपोषितः (०१९-०२२,*(११))
तं तम् आप्नोत्य् असंदिग्धं (०१९-०२२,*(११))
विष्णोर् आराधनोद्यतः (०१९-०२२,*(११))
अपुत्रो लभते पुत्रम् (०१९-०२३)
अधनो लभते धनम् (०१९-०२३)
रोगाभिभूतश् चारोग्यं (०१९-०२३)
कन्या प्राप्नोति सत्पतिम् (०१९-०२३)
समागमं प्रवसितैर् (०१९-०२४)
उपोष्यैताम् अवाप्नुते (०१९-०२४)
सर्वान् कामान् अवाप्नोति (०१९-०२४)
मृतः स्वर्गे च मोदते (०१९-०२४)

नापुत्रो नाधनो नेष्ट- (०१९-०२५)
वियोगी न च निर्गुणः (०१९-०२५)
उपोष्यैतद् व्रतं मर्त्यः (०१९-०२५)
स्त्री जनो वापि जायते (०१९-०२५)
य एव व्रतसंचीर्णो (०१९-*(१२))
विष्णुलोके महीयते (०१९-*(१२))
स्वर्गलोके सहस्राणि (०१९-०२६)
वर्षाणां मनुजाधिप (०१९-०२६)
भोगान् अभिमतान् भुक्त्वा (०१९-०२६)
स्वर्गलोके ऽभिकाङ्क्षितान् (०१९-०२६)
इह पुण्यवतां नृणां (०१९-०२७)
धनिनां साधुशीलिनाम् (०१९-०२७)
गृहेषु जायते राजन् (०१९-०२७)
सर्वव्याधिविवर्जितः (०१९-०२७)
अशोकपूर्णिमां चान्यां (०२०-००१)
शृणुश्व वदतो मम (०२०-००१)
याम् उपोष्य नरः शोकं (०२०-००१)
नाप्नोति स्त्री तथापि वा (०२०-००१)
फाल्गुनामलपक्षस्य (०२०-००२)
पूर्णिमास्यां नरेश्वर (०२०-००२)
मृज्जलेन नरः स्नात्वा (०२०-००२)
दत्त्वा शिरसि वै मृदम् (०२०-००२)
मृत्प्राशनं तथा कृत्वा (०२०-००३)
कृत्वा च स्थण्डिलं मृदा (०२०-००३)
पुष्पैः पत्रैस् तथाभ्यर्च्य (०२०-००३)
भूधरं नान्यमानसः (०२०-००३)
धरणीं च तथा देवीम् (०२०-००३)
अशोकेत्य् अभिधीयते (०२०-००३)
यथा विशोकां धरणीं (०२०-००४)
कृतवांस् त्वं जनार्दनः (०२०-००४)
तथा मां सर्वपापेभ्यो (०२०-००४)
मोचयाशेषधारिणि (०२०-००४)
यथा समस्तभूतानां (०२०-००५)
धारणं त्वय्य् अवस्थितम् (०२०-००५)
तथा विशोकं कुरु मां (०२०-००५)
सकलेच्छाविभूतिभिः (०२०-००५)
ध्यातमात्रे यथा विष्णौ (०२०-००६)
स्वास्थ्यं यातासि मेदिनि (०२०-००६)
तथा मनः स्वस्थतां मे (०२०-००६)
कुरु त्वं भूतधारिणि (०२०-००६)
एवं स्तुत्वा तथाभ्यर्च्य (०२०-००७)
चन्द्रायार्घ्यं निवेद्य च (०२०-००७)
उपोषितव्यं नक्तं वा (०२०-००७)
भोक्तव्यं तैलवर्जितम् (०२०-००७)
अनेनैव प्रकारेण (०२०-००८)
चत्वारः फाल्गुनादयः (०२०-००८)
उपोष्या नृपते मासाः (०२०-००८)
प्रथमं तत् तु पारणम् (०२०-००८)
आषाढादिषु मासेषु (०२०-००९)

तद्वत् स्नानं मृदम्बुना (०२०-००९)
तद् एव प्राशनं पूजा (०२०-००९)
तथैवेन्दोस् तथार्हणम् (०२०-००९)
चतुर्ष्व् अन्येषु चैवोक्तं (०२०-०१०)
तथा वै कार्त्तिकादिषु (०२०-०१०)
पारणं त्रितयं चैव (०२०-०१०)
चातुर्मासिकम् उच्यते (०२०-०१०)
प्रथमं धरणी नाम (०२०-०११)
स्तुत्यै मासचतुष्टयम् (०२०-०११)
द्वितीये मेदिनी वाच्या (०२०-०११)
तृतीये च वसुंधरा (०२०-०११)
पारणे पारणे वस्त्र- (०२०-०१२)
पूजया पूजयेन् नृप (०२०-०१२)
धरणीं देवदेवं च (०२०-०१२)
घृतस्नानेन केशवम् (०२०-०१२)
वस्त्राभावे तु सूत्रेण (०२०-०१३)
पूजयेद् धरणीं तथा (०२०-०१३)
घृताभावे तथा क्षीरं (०२०-०१३)
शस्तं वा सलिलं हरेः (०२०-०१३)
पातालमूलगतया (०२०-०१४)
चीर्णम् एतन् महाव्रतम् (०२०-०१४)
धरण्या केशवप्रीत्यै (०२०-०१४)
ततः प्राप्ता समुन्नतिः (०२०-०१४)
देवेन चोक्ता धरणी (०२०-०१५)
वराहवपुषा तदा (०२०-०१५)
उपवासप्रसन्नेन (०२०-०१५)
समुद्धृत्य रसातलात् (०२०-०१५)
व्रतेनानेन कल्याणि (०२०-०१६)
प्रणतो यः करिष्यति (०२०-०१६)
तस्य प्रसादम् अप्य् अहम् (०२०-*(१३))
करोमि तव मेदिनि (०२०-*(१३))
तथैव कुरुते पूजां (०२०-*(१३))
भक्त्या मम शुभो जनः (०२०-*(१३))
तथैव तव कल्याणि (०२०-*(१३))
प्रणतो यः करिष्यति (०२०-*(१३))
व्रतम् एतद् उपाश्रित्य (०२०-०१६)
पारणं च यथाविधि (०२०-०१६)
सर्वपापविनिर्मुक्तः (०२०-०१७)
सप्त जन्मान्तराण्य् असौ (०२०-०१७)
विशोकः सर्वकल्याण- (०२०-०१७)
भाजनो मतिमात्र् जनः (०२०-०१७)
सर्वत्र पूज्यः सततं (०२०-०१८)
सर्वेषाम् अपराजितः (०२०-०१८)
यथाहम् एवं वसुधे (०२०-०१८)
भविता निर्वृतेः पदम् (०२०-०१८)
तथा त्वम् अपि कल्याणि (०२०-*(१४))
भविष्यसि न संशयः (०२०-*(१४))
एवम् एतन् महापुण्यं (०२०-०१९)
सर्वपापोपशान्तिदम् (०२०-०१९)

विशोकाख्यं व्रतं धन्यं (०२०-०१९)
तत् कुरुष्व महीपते (०२०-०१९)
स्त्रीणां धर्मं द्विजश्रेष्ठ (०२१-००१)
उपवासं भवन् मम (०२१-००१)
कथयेह यथातत्त्वम् (०२१-००१)
उपवासविधिश् च यः (०२१-००१)
कौमारके गृहस्थाया (०२१-००२)
विधवायाश् च सत्तम (०२१-००२)
धर्मं प्रब्रूह्य् अशेषेण (०२१-००२)
भगवन् प्रीतिकारकम् (०२१-००२)
श्रूयताम् अखिलं ब्रह्मन् (०२१-००३)
यद् एतद् अनुपृच्छसि (०२१-००३)
उपकाराय च स्त्रीणां (०२१-००३)
त्रिषु लोकेष्व् अनुत्तमम् (०२१-००३)
प्रश्नम् एतत् पुरा देवी (०२१-००४)
शैलराजसुता पतिम् (०२१-००४)
पप्रच्छ शङ्करं ब्रह्मन् (०२१-००४)
कैलासशिखरे स्थितम् (०२१-००४)
कुमारिकाभिर् देवेश (०२१-००५)
गृहस्थाभिश् च केशवः (०२१-००५)
विधवाभिस् तथा स्त्रीभिः (०२१-००५)
कथम् आराध्यते वद (०२१-००५)
साधु साध्वि त्वया पृष्टम् (०२१-००६)
एतन् नारायणाश्रितम् (०२१-००६)
उपवासादि यत् तत्त्वं (०२१-००६)
श्रूयताम् अस्य यो विधिः (०२१-००६)
योग्यं पतिं समासाद्य (०२१-००७)
नारी धर्मम् अवाप्नुते (०२१-००७)
दुःशीले ऽपि हि कामार्ते (०२१-००७)
नारी प्राप्नोति भर्तरि (०२१-००७)
अनाराध्य जगन्नाथं (०२१-००८)
सर्वलोकेश्वरं हरिम् (०२१-००८)
कथम् आप्नोति वै नारी (०२१-००८)
पतिं शीलगुणान्वितम् (०२१-००८)
सुकलत्रप्रदं तस्माद् (०२१-००९)
व्रतम् अच्युततुष्टिदम् (०२१-००९)
कर्तव्यं लक्षणं तस्य (०२१-००९)
श्रूयतां वरवर्णिनि (०२१-००९)
यच् चीर्त्वा सर्वनारीणां (०२१-०१०)
श्रेष्ठम् आप्नोत्य् असंशयम् (०२१-०१०)
ऐहिकं च सुखं प्राप्य (०२१-०१०)
स्वर्गे भुङ्क्ते सुखान्य् अपि (०२१-०१०)
अनुज्ञां प्राप्य पितृतो (०२१-०११)
मातृतश् च कुमारिका (०२१-०११)
पूजयेच् च जगन्नाथं (०२१-०११)
भक्त्या पापहरं हरिम् (०२१-०११)
त्रिषूत्तरेषु स्वृक्षेषु (०२१-०१२)
पतिकामा कुमारिका (०२१-०१२)
माधवाख्यं तु वै नाम (०२१-०१२)

जपेन् नित्यम् अतन्द्रिता (०२१-०१२)
प्रियङ्गुणा रक्तपुष्पैर् (०२१-०१३)
बन्धूककुसुमैस् तथा (०२१-०१३)
समभ्यर्च्य ततो दद्याद् (०२१-०१३)
रक्तम् एवानुलेपनम् (०२१-०१३)
सर्वौषध्या स्वयं स्नात्वा (०२१-०१४)
समभ्यर्च्य जगत्पतिम् (०२१-०१४)
नमो ऽस्तु माधवायेति (०२१-०१४)
होमयेन् मधुसर्पिषी (०२१-०१४)
स देवम् उत्तरायोगे (०२१-०१५)
समभ्यर्च्य जनार्दनम् (०२१-०१५)
शोभनं पतिम् आप्नोति (०२१-०१५)
प्रेत्य स्वर्गं च गच्छति (०२१-०१५)
अतिबाल्ये च यत् किंचित् (०२१-०१६)
तया पापम् अनुष्ठितम् (०२१-०१६)
तस्माच् च मुच्यते देवि (०२१-०१६)
सुखिनी चैव जायते (०२१-०१६)
अब्देनैकेन तन्वङ्गि (०२१-०१७)
धूतपापा यद् इच्छति (०२१-०१७)
तद् एव प्राप्नुयाद् भद्रे (०२१-०१७)
नारायणपरायणा (०२१-०१७)
षण्मासं प्रीणनं कार्यं (०२१-०१८)
भक्त्या शक्त्या च वै हरेः (०२१-०१८)
पारणान्ते महाभगे (०२१-०१८)
तथा ब्राह्मणतर्पणम् (०२१-०१८)
गार्हस्थ्ये ऽवस्थिता नारी (०२२-००१)
भक्त्या संपूजयेत् पतिम् (०२२-००१)
स एव देवता तस्याः (०२२-००१)
पूज्यः पूज्यतरश् च सः (०२२-००१)
तस्मिंस् तुष्टे परो धर्मस् (०२२-००२)
तस्यैव परिचर्यया (०२२-००२)
तोषम् आयाति सर्वात्मा (०२२-००२)
परमात्मा जनार्दनः (०२२-००२)
नैव तस्याः पृथग् यज्ञो (०२२-००३)
न श्राद्धं नाप्य् उपोषितम् (०२२-००३)
भर्तृशुश्रूषणेनैव (०२२-००३)
प्राप्नोति स्त्री यथेप्सितम् (०२२-००३)
तेनैव साप्य् अनुज्ञाता (०२२-००४)
तस्य शुश्रूषणाद् अनु (०२२-००४)
तोषयेज् जगताम् ईशम् (०२२-००४)
अनन्तम् अपराजितम् (०२२-००४)
व्रतैर् नानाविधैर् देवि (०२२-००५)
ऐहिकामुष्मिकाप्तये (०२२-००५)
विष्णुव्रतादिभिर् दिव्यैस् (०२२-००५)
तथा दानैर् मनोऽनुगैः (०२२-००५)
घृतक्षीराभिषेकैश् च (०२२-००६)
ब्राह्मणानां च तर्पणैः (०२२-००६)
मनोज्ञैर् विविधैर् धूपैः (०२२-००६)
पुष्पवस्त्रानुलेपनैः (०२२-००६)

गीतवाद्यैस् तथा हृद्यैर् (०२२-००७)
उपवासैश् च भामिनि (०२२-००७)
एवम् आराध्य गोविन्दम् (०२२-००७)
अनुज्ञाता यथाविधि (०२२-००७)
पतिना सकलान् कामान् (०२२-००७)
अवाप्नोति न संशयः (०२२-००७)
पतिना त्व् अननुज्ञाता (०२२-००८)
किंचित् पुण्यं करोति या (०२२-००८)
विफलं तद् अशेषं वै (०२२-००८)
तस्याः शैलवरात्मजे (०२२-००८)
न च प्रसादं कुरुते (०२२-००९)
भगवान् मधुसूदनः (०२२-००९)
नानुज्ञाता तु या नारी (०२२-००९)
पतिनार्चति केशवम् (०२२-००९)
या तु भर्तृपरा नारी (०२२-०१०)
नारायणम् अतन्द्रिता (०२२-०१०)
भक्त्या संपूजयेद् देवं (०२२-०१०)
तोषम् आयाति केशवः (०२२-०१०)
या तु भर्त्रा परित्यक्ता (०२२-०११)
तथा या मृतभर्तृका (०२२-०११)
पाषण्डानुगतो वापि (०२२-०११)
यस्या भर्ता महेश्वर (०२२-०११)
प्रायो ददाति नानुज्ञां (०२२-०१२)
विष्णोर् आराधने तदा (०२२-०१२)
कथम् आराधनं कार्यं (०२२-०१२)
विष्णोस् तद् वद शंकर (०२२-०१२)
या तु भर्त्रा परित्यक्ता (०२२-०१३)
सा संपूज्य निजं पतिम् (०२२-०१३)
मनसा तन्मनस्का च (०२२-०१३)
तस्यैव हितकारिणी (०२२-०१३)
न निन्दाकरणी तस्य (०२२-०१४)
श्रेयोऽभिध्यायिनी तथा (०२२-०१४)
तस्यैव सर्वकालेषु (०२२-०१४)
सर्वकल्याणम् इच्छति (०२२-०१४)
आराधयेज् जगन्नाथं (०२२-०१५)
सर्वधातारम् अच्युतम् (०२२-०१५)
कृतोपवासा पुष्पादि (०२२-०१५)
निवेद्य सकलं ततः (०२२-०१५)
भर्तुर् मनोरथावाप्तिं (०२२-०१६)
प्रार्थयेत् प्रथमं वरम् (०२२-०१६)
स्वयं यथाभिलषितं (०२२-०१६)
प्रार्थयेत् तं वरं ततः (०२२-०१६)
एवं भर्तृपरित्यक्ता (०२२-०१७)
योषिद् आराधनं हरेः (०२२-०१७)
कुर्वाणा सकलान् कामान् (०२२-०१७)
अवाप्नोति न संशयः (०२२-०१७)
भर्ता करोति यच् चस्याः (०२२-०१८)
किंचित् पुण्यम् अहर्निशम् (०२२-०१८)
तस्य पुण्यस्य संपूर्णम् (०२२-०१८)

अर्धं प्राप्नोति सा शुभे (०२२-०१८)
यत् तु सा कुरुते पुण्यं (०२२-०१९)
विना दोषेण योज्झिता (०२२-०१९)
तत् तस्याः सकलं देवि (०२२-०१९)
तस्यार्धं न लभेत् पतिः (०२२-०१९)
भर्तर्य् एवं प्रवसिते (०२२-०२०)
त्यक्ता च पतिना शुभे (०२२-०२०)
कुर्वीताराधनं नारी (०२२-०२०)
उपवासादिना हरेः (०२२-०२०)
एतत् तवोक्तं यत् पृष्टं (०२२-०२१)
त्वयाहं गिरिनन्दिनि (०२२-०२१)
विधवानाम् अतो धर्मं (०२२-०२१)
श्रूयतां विष्णुतुष्टिदम् (०२२-०२१)
मृते भर्तरि साध्वी स्त्री (०२२-०२२)
ब्रह्मचर्यव्रतोदिता (०२२-०२२)
स्नाता प्रतिदिनं दद्यात् (०२२-०२२)
स्वभर्तृसलिलाञ्जलिम् (०२२-०२२)
कुर्याद् यानुदिनं भक्त्या (०२२-०२३)
देवानाम् अपि पूजनम् (०२२-०२३)
अतिथेस् तर्पणं तद्वद् (०२२-०२३)
अग्निहोत्रम् अमन्त्रकम् (०२२-०२३)
पूर्तधर्माश्रितं चान्यत् (०२२-०२४)
कुर्यान् नित्यम् अतन्द्रिता (०२२-०२४)
नित्यकर्म ऋते चास्या (०२२-०२४)
नेष्टं कर्म विधीयते (०२२-०२४)
विष्णोर् आराधनं चैव (०२२-०२५)
कुर्यान् नित्यम् उपोषिता (०२२-०२५)
दानादि विप्रमुख्येभ्यो (०२२-०२५)
दद्यात् पुण्यविवृद्धये (०२२-०२५)
उपवासांश् च विविधान् (०२२-०२५)
कुर्याच् छास्त्रोदितान् शुभे (०२२-०२५)
लोकान्तरस्थं भर्तारम् (०२२-०२६)
आत्मानं च वरानने (०२२-०२६)
तारयत्य् उभयं नारी (०२२-०२६)
येत्थं धर्मपरायणा (०२२-०२६)
पुत्रैश्वर्यस्थिता नारी (०२२-०२७)
उपवासादिना हरिम् (०२२-०२७)
या तोषयति सिद्धिं सा (०२२-०२७)
पुत्रेभ्यो ऽपि प्रयच्छति (०२२-०२७)
शुभांल् लोकांस् तथा भर्तुर् (०२२-०२८)
आत्मनश् च यथेप्सितान् (०२२-०२८)
सकलं पूरयत्य् अस्तं (०२२-०२८)
पापं नयति चाखिलम् (०२२-०२८)
आत्मनश् चैव भर्तुश् च (०२२-०२९)
नारी परमिकां गतिम् (०२२-०२९)
ददात्य् आराध्य गोविन्दं (०२२-०२९)
सपुत्रा विधवा च या (०२२-०२९)
तस्माद् एभिर् विधानैस् तु (०२२-०३०)
सर्वकालं तु योषितः (०२२-०३०)

केशवाराधनं कार्यं (०२२-०३०)
लोकद्वयफलप्रदम् (०२२-०३०)
ये नरा मृतपत्निकास् (०२२-०३१)
तैर् अप्य् एतद् अशेषतः (०२२-०३१)
पूर्तधर्माश्रितं कार्यं (०२२-०३१)
नित्यकर्म च केवलम् (०२२-०३१)
पुत्रैश्वर्यस्थितैः सम्यग् (०२२-०३२)
ब्रह्मचर्यगुणान्वितैः (०२२-०३२)
विष्णोर् आराधनं कार्यं (०२२-०३२)
तीर्थस्थैर् अथवा गृहे (०२२-०३२)
ब्राह्मणः क्षत्रियो वैश्यः (०२२-०३३)
स्त्री शूद्रश् च वरानने (०२२-०३३)
अनाराध्य हृषीकेशं (०२२-०३३)
नाप्नोति परमां गतिम् (०२२-०३३)
ऐश्वर्यं संततिं श्रेष्ठाम् (०२२-०३४)
आरोग्यं द्रव्यसंपदम् (०२२-०३४)
ददाति भगवान् विष्णुर् (०२२-०३४)
गतिम् अग्र्यां सुतोषितः (०२२-०३४)
एवं शैलसुता प्रोक्ता (०२२-०३५)
स्वयं देवेन शंभुना (०२२-०३५)
पृष्टेन सम्यक् कथितं (०२२-०३५)
भवतो ऽपि महामुने (०२२-०३५)
सर्ववर्णैस् तथा स्त्रीभिर् (०२२-०३६)
अन्यैर् अपि जनैर् हरिः (०२२-०३६)
आराधनीयो नातुष्टे (०२२-०३६)
विष्णौ संप्राप्यते गतिः (०२२-०३६)
न दुर्गतिं रौरवादीन् (०२२-०३७)
नरकांश् च न गच्छति (०२२-०३७)
यम् आराध्येश्वरं वन्द्यं (०२२-०३७)
कस् तं विष्णुं न पूजयेत् (०२२-०३७)
तस्माद् अमुष्मिकान् क्लेशान् (०२२-०३८)
नरके याश् च यातनाः (०२२-०३८)
सदैवोद्विजता दाल्भ्य (०२२-०३८)
समाराध्यो जनार्दनः (०२२-०३८)
भगवन् यातना घोराः (०२३-००१)
श्रूयन्ते नरकेषु याः (०२३-००१)
तासां स्वरूपम् अत्युग्रं (०२३-००१)
यथावद् वक्तुम् अर्हसि (०२३-००१)
शृणु दाल्भ्यातिघोराणां (०२३-००२)
यातनानां मयोदितम् (०२३-००२)
स्वरूपं नारकैर् यत् तु (०२३-००२)
नरकेष्व् अनुभूयते (०२३-००२)
योजनानां सहस्राणि (०२३-००३)
रौरवो नरको द्विज (०२३-००३)
अङ्गारपूर्णमध्यो ऽसौ (०२३-००३)
ज्वालामालापरिष्कृतः (०२३-००३)
तन्मध्ये पतितो याति (०२३-००४)
योजनानि सहस्रशः (०२३-००४)
सत्यहान्यानृती याति (०२३-००४)

तत्र पापरतिर् नरः (०२३-००४)
रौरवाद् द्विगुणश् चैव (०२३-००५)
महारौवरसंज्ञितः (०२३-००५)
तप्ततामपुटाङ्गार- (०२३-००५)
ज्वलत्पावकसंवृतः (०२३-००५)
परोपतापिनस् तत्र (०२३-००६)
पतन्ति नरके नराः (०२३-००६)
नाश्चर्यं द्विजशार्दूल (०२३-००६)
वर्षलक्षयुतानि च (०२३-००६)
कालसूत्रेण च्छिद्यन्ते (०२३-००७)
चक्रारूढाश् च मानवाः (०२३-००७)
कालाङ्गुलिस्थेन सदा (०२३-००७)
आपादतलमस्तकात् (०२३-००७)
कालसूत्र इति ख्यातो (०२३-००८)
घोरः स नरकोत्तमः (०२३-००८)
तत्रापि वञ्चका यान्ति (०२३-००८)
ये चैवोत्कोचजीविनः (०२३-००८)
तप्तकुम्भस् तथैवान्यो (०२३-००९)
नरको भृशदारुणः (०२३-००९)
तैलकुम्भेषु पच्यन्ते (०२३-००९)
तत्राप्य् अग्निभृतेषु ते (०२३-००९)
देववेदद्विजातीनां (०२३-०१०)
ये निन्दां कुर्वते सदा (०२३-०१०)
संशृण्वन्ति च ये मूढा (०२३-०१०)
ये च मत्सरिणो ऽधमाः (०२३-०१०)
करम्भवालुकाकुम्भ- (०२३-०११)
संज्ञं च नरकं शृणु (०२३-०११)
परदाररता ये तु (०२३-०११)
पतन्ति नरके ऽधमाः (०२३-०११)
हृतं यैश् च जलं ते ऽपि (०२३-०१२)
तस्मिन् यान्ति नराधमाः (०२३-०१२)
गोनिपानेषु विघ्नानि (०२३-०१२)
मूढा ये चापि कुर्वते (०२३-०१२)
करम्भवालुकाकुम्भ- (०२३-०१२)
नरके ते पतन्ति वै (०२३-०१२)
अन्धे तमसि दुष्पारे (०२३-०१३)
शीतार्तिपरिकम्पिताः (०२३-०१३)
भ्राम्यन्ते मानवा गात्रैः (०२३-०१३)
समस्तैः स्फुटितास्थिभिः (०२३-०१३)
गोवधः स्त्रीवधः पापैः (०२३-०१४)
कृतं यैश् च गवानृतम् (०२३-०१४)
ते तत्रातिमहाभीमे (०२३-०१४)
पतन्ति नरके नराः (०२३-०१४)
उत्पाट्यते तथा जिह्वा (०२३-०१५)
संदंशैर् भृशदारुणैः (०२३-०१५)
आक्रिशकानां दुष्टानां (०२३-०१५)
सदैवाबद्धभाषिणाम् (०२३-०१५)
करपत्रैश् च पाट्यन्ते (०२३-०१६)
यमस्य पुरुषैस् तथा (०२३-०१६)

परदारपरद्रव्य- (०२३-०१६)
हिंसकाः पुरुषाधमाः (०२३-०१६)
आयसीं च शिलां तप्ताम् (०२३-०१७)
अशेषाङ्गैस् तथा नराः (०२३-०१७)
परदाररता एवं (०२३-०१७)
समालिङ्गन्ति पापिनः (०२३-०१७)
सर्वाङ्गैर् विकृतैर् रक्तम् (०२३-०१८)
उद्गिरन्तो ऽतिपीडिताः (०२३-०१८)
यन्त्रेष्व् अन्येषु पीड्यन्ते (०२३-०१८)
जन्तुपीडाकरा नराः (०२३-०१८)
वृकैः संभक्ष्यते पृष्ठं (०२३-०१९)
नराणां पापकारिणाम् (०२३-०१९)
जनस्य पृष्ठमांसं यैर् (०२३-०१९)
भक्षितं पापकारिभिः (०२३-०१९)
असिपत्रवनैर् घोरैश् (०२३-०२०)
छिद्यन्ते पापकर्मिणः (०२३-०२०)
सद्भावप्रवणा यैस् तु (०२३-०२०)
भग्ना विश्रम्भिनो जनाः (०२३-०२०)
अयोमुखैः खगैर् भग्नाः (०२३-०२१)
खण्डखण्डं तथापरैः (०२३-०२१)
व्रजन्ति पापकर्माणः (०२३-०२१)
श्वशृगालैस् तथापरैः (०२३-०२१)
सूषायाम् अपि धास्यन्ते (०२३-०२२)
ज्वलदग्निचयावृताः (०२३-०२२)
पाषाणपेष्यं पिष्यन्ते (०२३-०२२)
तथान्ये पापकर्मिणः (०२३-०२२)
देवतातिथिभृत्याणाम् (०२३-०२३)
अदत्त्वा भुञ्जते तु ये (०२३-०२३)
मृषागतास् तथाइवैक्यं (०२३-०२३)
त्रपुषा सीसकेन च (०२३-०२३)
प्रयान्ति पुरुषास् तैलैः (०२३-०२३)
क्वाथ्यन्ते ऽन्ये पुनः पुनः (०२३-०२३)
वर्णधर्मपरित्यागे (०२३-०२४)
नैक्यं ये पुरुषा गताः (०२३-०२४)
ते ऽपि पापसमाचारा (०२३-०२४)
वर्णसंकरकारिणः (०२३-०२४)
स्वरूपं नारकस्याग्नेः (०२३-०२५)
शृणुष्व कथयामि ते (०२३-०२५)
मुक्तस् ततो ऽन्यवह्निस्हतः (०२३-०२५)
शेते संप्राप्य निर्वृतिम् (०२३-०२५)
शस्त्रधारास् तथैवैता (०२३-०२६)
मृणालप्रस्तरं नरः (०२३-०२६)
मन्यते नारकैः शस्त्रैर् (०२३-०२६)
विक्षतो द्विजसत्तम (०२३-०२६)
हिमखण्डचयाछन्नो (०२३-०२७)
निवातं मन्यते नरः (०२३-०२७)
विमुक्तो नारकाच् छीतात् (०२३-०२७)
प्रकाशं तमसस् तमः (०२३-०२७)
प्रोता गुदेषु भिन्नाङ्गा (०२३-०२८)

आर्ता रावविराविणः (०२३-०२८)
शूलेषु लोहेष्व् अपरे (०२३-०२८)
त्रिशूलेषु तथापरे (०२३-०२८)
याज्योपाध्यायदाम्पत्य- (०२३-०२९)
सुहृन्मित्रसुतादिषु (०२३-०२९)
कृतो भेदो दुराचारैर् (०२३-०२९)
यैर् अलीकोक्तिभाषिभिः (०२३-०२९)
आयसाः कण्टकास् तीक्ष्णा (०२३-०३०)
नरके कूटशाल्मलौ (०२३-०३०)
तेषु प्रोता दुरात्मानः (०२३-०३०)
परदारभुजो नराः (०२३-०३०)
कृमिकीटजलौकादि- (०२३-०३१)
तीक्ष्णदंष्ट्रास्यविक्षताः (०२३-०३१)
भ्राम्यन्ते चान्धतामिस्रे (०२३-०३१)
वृथामांसाशिनो हि ये (०२३-०३१)
एतांश् चान्यांश् च नरकाञ् (०२३-०३२)
शतशो ऽथ सहस्रशः (०२३-०३२)
कर्मान्तरं जनो भुङ्क्ते (०२३-०३२)
परिणामांश् च चेतसः (०२३-०३२)
यादृक् कर्म मनुष्याणां (०२३-०३३)
तादृग् विषयरूपवत् (०२३-०३३)
परिणामं मनो याति (०२३-०३३)
शुभाशुभमयं द्विज (०२३-०३३)
अतीवभीषणान् इत्थं (०२४-००१)
शस्त्राग्निभयदान् नरः (०२४-००१)
कथं न गच्छेन् नरकान् (०२४-००१)
एतन् मे वक्तुम् अर्हसि (०२४-००१)
अहो ऽतिकष्टपापानां (०२४-००२)
विपाको नरकस्थितैः (०२४-००२)
पुरुषैर् भुज्यते ब्रह्मंस् (०२४-००२)
तन्मोक्षं वद सत्तम (०२४-००२)
पुण्यस्य कर्मणः पाकः (०२४-००३)
पुण्य एव द्विजोत्तम (०२४-००३)
चेतसः परिणामोत्तः (०२४-००३)
स्वर्गस्थैर् भुज्यते नरैः (०२४-००३)
तथैव पाकः पापानां (०२४-००४)
पुरुषैर् नरकस्थितैः (०२४-००४)
भुज्यते तावद् अखिलं (०२४-००४)
यावत् पापं क्षयं गतम् (०२४-००४)
यदा तु पापस्य जयः (०२४-००५)
क्षीयते सुकृतं तदा (०२४-००५)
शुभस्य कर्मणो वृद्धौ (०२४-००५)
क्षयम् आयात्य् अशोभनम् (०२४-००५)
जये यतेत पुरुषस् (०२४-००६)
तस्मात् सुकृतकर्मणः (०२४-००६)
पापं कर्म विना नैव (०२४-००६)
नरकप्राप्तिर् इष्यते (०२४-००६)
जयाय द्वादशी शस्ता (०२४-००७)
नृणां सुकृतकर्मणाम् (०२४-००७)

याम् उपोष्य द्विजश्रेष्ठ (०२४-००७)
न याति नरकं नरः (०२४-००७)
फाल्गुनामलपक्षस्य (०२४-००८)
एकादश्याम् उपोषितः (०२४-००८)
द्वादश्यां तु द्विजश्रेष्ठ (०२४-००८)
पूजयेन् मधुसूदनम् (०२४-००८)
एकादश्यां समुद्दिष्टं (०२४-००९)
विष्णोर् नामानुकीर्तनम् (०२४-००९)
पूजायां वासुदेवस्य (०२४-००९)
कुर्वीत सुसमाहितः (०२४-००९)
नमो नारायणायेति (०२४-०१०,*(१५))
वाच्यं च स्वपता निशि (०२४-०१०,*(१५))
क्रोधः प्रपञ्च ईर्ष्या च (०२४-०१०)
दम्भो लोभश् च वर्जितः (०२४-०१०)
कामो द्रोहो मदश् चापि (०२४-०११)
मानमात्सर्यम् एव च (०२४-०११)
सर्वम् एतत् परित्यज्य (०२४-०११)
विष्णुभक्तेन चेतसा (०२४-०११)
असारतां च लोके ऽस्मिन् (०२४-०१२)
संसारे भावयेन् मतिम् (०२४-०१२)
कामं क्रोधं च लोभं च (०२४-*(१५))
दम्भम् ईर्ष्यां च वर्जयेत् (०२४-*(१५))
मानद्रोहादिदोषांश् च (०२४-*(१५))
सर्वान् धनमदोद्भूतान् (०२४-*(१५))
भावयेद् विष्णुभक्तांश् च (०२४-*(१५))
संसारासारतां तथा (०२४-*(१५))
एवं भावितचित्तेन (०२४-*(१५))
प्राणिनां हितम् इच्छता (०२४-*(१५))
तथैव कुर्याद् द्वादश्यां (०२४-०१२)
नाम्नाम् उच्चारणं द्विज (०२४-०१२)
यवपात्राणि पूर्वं तु (०२४-०१३)
दद्यान् मासचतुष्टयम् (०२४-०१३)
आषाढादिद्वितीयं तु (०२४-०१३)
पारणं यन् महामते (०२४-०१३)
तत्रापि घृतपात्राणि (०२४-०१३)
दद्याच् छ्रद्धासमन्वितः (०२४-०१३)
कार्त्तिकादिषु मासेषु (०२४-०१४)
माघन्तेषु तथा तिलान् (०२४-०१४)
विप्राय दद्यात् पात्रस्थतान् (०२४-०१४)
प्रतिमासम् उपोषितः (०२४-०१४)
नामत्रयम् अशेषेषु (०२४-०१५)
मासि मासि दिनद्वयम् (०२४-०१५)
तथैवोच्चारयेद् दद्याद् (०२४-०१५)
द्वादश्यां च यवादिकम् (०२४-०१५)
प्रणम्य च हृषीकेशं (०२४-०१५)
कृतपूजः प्रसादयेत् (०२४-०१५)
विष्णो नमस् ते जगतः प्रसूते (०२४-०१६)
ॐ वासुदेवाय नमो नमस् ते (०२४-०१६)
नारायण त्वां प्रणतो ऽस्म्य् अचिन्त्य (०२४-०१६)

जयो ऽस्तु मे शाश्वतपुण्यराशेः (०२४-०१६)
प्रसीद पुण्यं जयम् एतु विष्णो (०२४-०१७)
ॐ वासुदेव र्द्धिम् उपैतु पुण्यम् (०२४-०१७)
नारायणों भूतिम् उपैतु पुण्यम् (०२४-०१७)
प्रयातु चाशेषम् अघं विनाशम् (०२४-०१७)
विष्णो पुण्योद्भवो मे ऽस्तु (०२४-०१८)
वासुदेवास्तु मे शुभम् (०२४-०१८)
नारायणास्तु धर्मो मे (०२४-०१८)
जहि पापम् अशेषतः (०२४-०१८)
अनेकजन्मजनितं (०२४-०१९)
बाल्ययौवनवार्द्धिके (०२४-०१९)
पुण्यं विवृद्धिम् आयातु (०२४-०१९)
यातु पापं तु संक्षयम् (०२४-०१९)
आकाशादिषु शब्दादौ (०२४-०२०)
श्रोत्रादौ महदादिषु (०२४-०२०)
प्रकृतौ पुरुषे चैव (०२४-०२०)
ब्रह्मण्य् अपि च स प्रभुः (०२४-०२०)
यथैक एव सर्वात्मा (०२४-०२०)
वासुदेवो व्यवस्थितः (०२४-०२०)
तेन सत्येन मे पापं (०२४-०२१)
नरकार्तिप्रदं क्षयम् (०२४-०२१)
प्रयातु सुकृतस्यास्तु (०२४-०२१)
ममानुदिवसं जयः (०२४-०२१)
पापस्य हानिः पुण्यं च (०२४-०२१)
वृद्धिम् अभ्येत्य् अनुत्तमाम् (०२४-०२१)
एवम् उच्चार्य विप्राय (०२४-०२२)
दत्त्वा यत् कथितं तव (०२४-०२२)
भुञ्जीत कृतकृत्यस् तु (०२४-०२२)
पारणे पारणे गते (०२४-०२२)
पारणान्ते च देवस्य (०२४-०२३)
प्रीणनं शक्तितो द्विज (०२४-०२३)
कुर्वीताखिलपाषण्डैर् (०२४-०२३)
आलापं च विवर्जयेत् (०२४-०२३)
इत्य् एतत् कथितं दाल्भ्य (०२४-०२४)
सुकृतस्य जयावहा (०२४-०२४)
द्वादशी नरकं मृत्यो (०२४-०२४)
याम् उपोष्य न पश्यति (०२४-०२४)
नाग्नयो न च शस्त्राणि (०२४-०२५)
न च लोहमूखाः खगाः (०२४-०२५)
नारकास् तं प्रबाधन्ते (०२४-०२५)
मतिर् यस्य जनार्दने (०२४-०२५)
नामोच्चारणमात्रेण (०२४-०२६)
विष्णोः क्षीणो ऽघसंचयः (०२४-०२६)
भवत्य् अपास्तपापस्य (०२४-०२६)
नरके गमनं कुतः (०२४-०२६)
नमो नारायण हरे (०२४-०२७)
वासुदेवेति कीर्तयेत् (०२४-०२७)
न याति नरकं मर्त्यः (०२४-०२७)
संक्षीणाशेषपातकः (०२४-०२७)

तस्मात् पाषण्डिसंसर्गम् (०२४-०२८)
अकुर्वन् द्वादशीम् इमाम् (०२४-०२८)
उपोष्य पुण्योपचयी (०२४-०२८)
न याति नरकं नरः (०२४-०२८)
पाषण्डिभिर् असंस्पर्शम् (०२५-००१)
असंभाषणम् एव च (०२५-००१)
विष्णोर् आराधनपरैर् (०२५-००१)
नरैः कार्यम् उपोषितैः (०२५-००१)
किं ब्रूहि लक्षणं तेषां (०२५-००२)
यादृशान् वर्जयेद् व्रती (०२५-००२)
कथंचिद् यदि संलाप- (०२५-००२)
दर्शनस्पर्शनादिकम् (०२५-००२)
उपोषितानां पाषण्डैर् (०२५-००३)
नराणां विप्र जायते (०२५-००३)
किं तत्र वद कर्तव्यं (०२५-००३)
येनाखण्डं व्रतं भवेत् (०२५-००३)
श्रुतिस्मृत्युदितं धर्मं (०२५-००४)
वर्णाश्रमविभागजम् (०२५-००४)
उल्लङ्घ्य ये प्रवर्तन्ते (०२५-००४)
स्वेच्छया कूटयुक्तिभिः (०२५-००४)
विकर्माभिरता मूढा (०२५-००५)
युक्तिप्रागल्भ्यदुर्मदाः (०२५-००५)
पाषण्डिनस् ते दुःशीला (०२५-००५)
नरकार्हा नराधमाः (०२५-००५)
तांस् तु पाषण्डिनः पापान् (०२५-००६)
विकर्मस्थांश् च मानवान् (०२५-००६)
वैडालव्रतिकांश् चैव (०२५-००६)
नित्यम् एव तु नालपेत् (०२५-००६)
संभाष्यैतान् शुचिषदं (०२५-००७)
चिन्तयेद् अच्युतं बुधः (०२५-००७)
इदं चोदाहरेत् सम्यक् (०२५-००७)
कृत्वा तत्प्रवणं मनः (०२५-००७)
शारीरम् अन्तःकरणोपघातं (०२५-००८)
वाचश् च विष्णुर् भगवान् अशेषम् (०२५-००८)
शमं नयत्व् अस्तु ममेह शर्म (०२५-००८)
पापाद् अनन्ते हृदि संनिविष्टे (०२५-००८)
अन्तःशुद्धिं बहिःशुद्धिं (०२५-००९)
शुद्धो ऽन्तर् मम यो ऽच्युतः (०२५-००९)
स करोत्व् अमले तस्मिन् (०२५-००९)
शुचिर् एवास्मि सर्वदा (०२५-००९)
बाह्योपघाताद् अनघो (०२५-०१०)
बोद्धा च भगवान् अजः (०२५-०१०)
शुद्धिं नयत्व् अनन्तात्मा (०२५-०१०)
विष्णुश् चेतसि संस्थितः (०२५-०१०)
एतत् संभाष्य जप्तव्यं (०२५-०११)
पाषण्डिभिर् उपोषितैः (०२५-०११)
नमः शुचिषदेत्य् उक्त्वा (०२५-०११)
सूर्यं पश्येत वीक्षितैः (०२५-०११)
श्रूयते च पुरा मर्त्याः (०२५-०१२)

स्वेच्छया स्वर्गगामिनः (०२५-०१२)
बभूवुर् अनघाः सर्वे (०२५-०१२)
स्वधर्मपरिपालनात् (०२५-०१२)
देवाश् च बलिनो मर्त्यैर् (०२५-०१३)
वर्णकर्मण्य् अनुव्रतैः (०२५-०१३)
यज्ञाध्ययनदानेषु (०२५-०१३)
वर्तमानैश् च मानवैः (०२५-०१३)
दैतेयाश् च पराभावम् (०२५-०१४)
अतुष्टाव् असुरा ययुः (०२५-०१४)
ततश् च षण्डो मर्कश् च (०२५-०१४)
दैत्येन्द्राणां पुरोहितौ (०२५-०१४)
चक्रतुः कर्म देवानां (०२५-०१४)
विनाशायातिभीषणम् (०२५-०१४)
तत्रोत्पन्नो ऽतिकृष्णाङ्गस् (०२५-०१५)
तमःप्रायो ऽतिदारुणः (०२५-०१५)
दम्भाधारः शाठ्यसारो (०२५-०१५)
निद्राप्रकृतिर् उल्वणः (०२५-०१५)
महामोह इति ख्यातः (०२५-०१६)
कृत्यरूपो विभीषणः (०२५-०१६)
चतुर्धा स विभक्तश् च (०२५-०१६)
ताभाम् अत्र महीयते (०२५-०१६)
वेददेवद्विजातीनाम् (०२५-०१७)
एकांशेन स निन्दनम् (०२५-०१७)
करोत्य् अन्येन न रतिं (०२५-०१७)
योगकर्मसु विन्दति (०२५-०१७)
विकर्मण्य् अपरेणापि (०२५-०१८)
संयोजयति मानवान् (०२५-०१८)
ज्ञानापहारम् अन्येन (०२५-०१८)
करोति द्विजसत्तम (०२५-०१८)
ज्ञानबुद्ध्या तथाज्ञानं (०२५-०१९)
गृह्णात्य् अज्ञानमोहितः (०२५-०१९)
वेदवादविरोधेन (०२५-०१९)
या कथा सास्य रोचते (०२५-०१९)
एवं स तु महामोहः (०२५-०२०)
षण्डमर्कोपपादितः (०२५-०२०)
दम्भादिदूषितो ऽधर्म- (०२५-०२०)
स्वरूपो ऽतिभयंकर (०२५-०२०)
स लोकान् विविधोपायैर् (०२५-०२१)
लोकेष्व् एव व्यवस्थितः (०२५-०२१)
मोहाभिभवनिःसाराण् (०२५-०२१)
करोति द्विजसत्तम (०२५-०२१)
तन्मोहितानाम् अचिराद् (०२५-०२२)
विवेको याति संक्षयम् (०२५-०२२)
क्षीणज्ञाना विकर्माणि (०२५-०२२)
कुर्वन्त्य् अहरहो द्विज (०२५-०२२)
निजवर्णात्मकं धर्मं (०२५-०२३)
परित्यज्य विमोहिताः (०२५-०२३)
धर्मबुद्ध्या ततः पापं (०२५-०२३)
कुर्वन्त्य् अज्ञानदुर्मदाः (०२५-०२३)

ज्ञानावलेपस् तत्रैव (०२५-०२४)
ततस् तेषां प्रजायते (०२५-०२४)
सुहृद्भिर् वार्यमाणास् ते (०२५-०२४)
पण्डितैश् च दयालुभिः (०२५-०२४)
प्रयच्छन्त्य् उत्तरं ंऊढाः (०२५-०२४)
कूटयुक्तिसमन्वितम् (०२५-०२४)
ततस् ते स्वयम् आत्मानम् (०२५-०२५)
अन्यं चाल्पमतिं नरम् (०२५-०२५)
विकर्मणा योजयन्तश् (०२५-०२५)
च्यवयन्ति स्वधर्मतः (०२५-०२५)
पाषण्डिनो दुराचाराः (०२५-०२६)
परान्नगुणवादिनः (०२५-०२६)
असंस्कृतान्नभोक्तारो (०२५-०२६)
व्रात्याः संस्कारवर्जिताः (०२५-०२६)
पाषण्डाः पापसंकल्पा (०२५-०२७)
दाम्भिकाः शठबुद्धयः (०२५-०२७)
वर्णसंकरकर्तारो (०२५-०२७)
मायाव्याजोपजीविनः (०२५-०२७)
निःशौचा वक्रमतयो (०२५-०२७)
नान्यदस्तीतिवादिनः (०२५-०२७)
एवंविधास् ते सन्मार्गाद् (०२५-०२८)
वेदप्रोक्ताद् बहिःस्थिताः (०२५-०२८)
क्रियाकलापं निन्दन्त (०२५-०२८)
ऋग्यजुःसामसंज्ञितम् (०२५-०२८)
आत्मानं च परांश् चैव (०२५-०२८)
कुर्वन्ति नरकस्थितान् (०२५-०२८)
तेषां दर्शनसंभाष- (०२५-०२९)
स्पर्शनानि नरैः सदा (०२५-०२९)
परित्याज्यानि दृष्टे च (०२५-०२९)
प्रोक्तः संभाषणे च यः (०२५-०२९)
संस्पर्शे च बुधः स्नात्वा (०२५-०२९)
शुचिः शुचिषदं स्मरेत् (०२५-०२९)
भवत्य् अतः सदैवैषाम् (०२५-०३०)
आलापस्पर्१शनं त्यजेत् (०२५-०३०)
पुण्यकामो महाभागः (०२५-०३०)
किं पुनर् यद् उपोषितः (०२५-०३०)
यतो हि निन्दिते कर्मण्य् (०२५-०३१)
अभ्यासो रतिर् एव च (०२५-०३१)
पाषण्डिनाम् अशेषाणाम् (०२५-०३१)
अप्रीतिर् वेदकर्मणि (०२५-०३१)
ते ह्य् अधोगामिनः प्रोक्ता (०२५-०३१)
आसुरं भावम् आश्रिताः (०२५-०३१)
अप्राप्तिर् न तथा दुःखम् (०२६-००१)
ऐश्वर्यादेर् द्विजोत्तम (०२६-००१)
यथा मनोरथैर् लब्धैर् (०२६-००१)
विच्युतिर् धर्महानिजा (०२६-००१)
ऐश्वर्याद् वित्ततो वापि (०२६-००२)
संततेर् देवलोकतः (०२६-००२)
अभीष्टाद् अन्यतो वापि (०२६-००२)

पदाद् येन न विच्युतिम् (०२६-००२)
प्राप्नोति पुरुषो ब्रह्मन् (०२६-००३)
नारी वापुण्यसंक्षयात् (०२६-००३)
तन् ममाचक्ष्व विप्रर्षे (०२६-००३)
दुःखम् एभ्यो हि विच्युतिः (०२६-००३)
सत्यम् एतन् महाभाग (०२६-००४)
दुःखं प्राप्तस्य संक्षयः (०२६-००४)
ऐश्वर्याद् अथ वित्तस्य (०२६-००४)
बन्धुवर्गसुखस्य वा (०२६-००४)
तद् एतच् छ्रूयतां दाल्भ्य (०२६-००५)
यथा नेष्टात् परिच्युतिः (०२६-००५)
सर्गादेर् जायते सम्यग् (०२६-००५)
उपवासवतां सताम् (०२६-००५)
द्वादशर्क्षाणि विप्रर्षे (०२६-००६)
प्रतिमासं तु यानि वै (०२६-००६)
तन्नामान्य् अच्युतं तेषु (०२६-००६)
सम्यक् संपूजयेद् बुधः (०२६-००६)
पुष्पैर् धूपैस् तथाम्भोभिर् (०२६-००७)
अभीष्टैर् अपरैस् तथा (०२६-००७)
आदितः कृत्तिकां कृत्वा (०२६-००७)
कार्त्तिके मुनिपुङ्गव (०२६-००७)
नैवेद्यं कृसरं पूर्वम् (०२६-००८)
अन्नं मासचतुष्टयम् (०२६-००८)
निवेदयेत् कार्त्तिकादि (०२६-००८)
संयावं च ततः परम् (०२६-००८)
आषाढादौ च देवाय (०२६-००९)
पायसं वै निवेदयेत् (०२६-००९)
तेनैवान्नेन विप्रर्षे (०२६-००९)
ब्राह्मणान् भोजयेद् बुधः (०२६-००९)
पञ्चगव्यजलस्नातस् (०२६-०१०)
तस्यैव प्राशनाच् छुचिः (०२६-०१०)
नैवेद्यं स्वयम् अश्नीयान् (०२६-०१०)
नक्तं संपूजिते ऽच्युते (०२६-०१०)
एवं संवत्सरस्यान्ते (०२६-०११)
ततः सुप्तोत्थिते ऽच्युते (०२६-०११)
संयक् संपूज्य विप्रर्षे (०२६-०११)
तम् एव पुरुषोत्तमम् (०२६-०११)
प्रणम्य प्रार्थयेद् विद्वाञ् (०२६-०११)
शुचिः स्नातो यथाविधि (०२६-०११)
नमो नमस् ते ऽच्युत संक्षयो ऽस्तु (०२६-०१२)
पापस्य वृद्धिं समुपैतु पुण्यम् (०२६-०१२)
ऐश्वर्यवित्तादि सदाक्षयं मे (०२६-०१२)
ऽक्षया च मे संततिर् अच्युतास्तु (०२६-०१२)
यथाच्युतस् त्वं परतः परस्मात् (०२६-०१३)
स ब्रह्मभूतात् परतः परात्मन् (०२६-०१३)
तथाच्युतं मे कुरु वाञ्छितं यन् (०२६-०१३)
मया पदं पापहराप्रमेय (०२६-०१३)
अच्युतानन्त गोविन्द (०२६-०१४)
प्रसीद यद् अभीप्सितम् (०२६-०१४)

तद् अक्षयम् अमेयात्मन् (०२६-०१४)
कुरुष्व पुरुषोत्तम (०२६-०१४)
एवम् अन्ते समभ्यर्च्य (०२६-०१५)
प्रार्थयित्वा तथाशिषः (०२६-०१५)
यथावन् मुनिशार्दूल (०२६-०१५)
च्युतिं नाप्नोति मानवः (०२६-०१५)
संततेः स्वर्गवित्तादेर् (०२६-०१६)
ऐश्वर्यस्य तथा मुने (०२६-०१६)
यद् वाभिमतम् अत्यन्तं (०२६-०१६)
ततो न च्यवते नरः (०२६-०१६)
तस्मात् सर्वप्रयत्नेन (०२६-०१७)
मासनक्षत्रपूजने (०२६-०१७)
यतेताक्षयकामस् तु (०२६-०१७)
सदैव मुनिपुङ्गव (०२६-०१७)
अत्रापि श्रूयते सिद्धा (०२७-००१)
काचित् स्वर्गे महाव्रता (०२७-००१)
नारी तपोधना भूत्वा (०२७-००१)
प्रख्याता शाम्भरायणी (०२७-००१)
समस्तसंदेहहरा (०२७-००१)
सदा स्वर्गौकसां हि सा (०२७-००१)
कस्यचित् त्व् अथ कालस्य (०२७-००२)
देवराजः शतक्रतुः (०२७-००२)
पूर्वेन्द्रचरितं ब्रह्मन् (०२७-००२)
पप्रच्छेदं बृहस्पतिम् (०२७-००२)
पूर्वेन्द्रा परतः पूर्वे (०२७-००३)
ये बभूवुः सुरेश्वराः (०२७-००३)
तेषां चरितम् इच्छामि (०२७-००३)
श्रोतुम् आङ्गिरसां वर (०२७-००३)
एवम् उक्तस् तदा तेन (०२७-००४)
देवेन्द्रेणामलद्युतिः (०२७-००४)
प्राह धर्मभृतां श्रेष्ठः (०२७-००४)
परमर्षिर् बृहस्पतिः (०२७-००४)
नाहं चिरन्तनान् वेद्मि (०२७-००५)
देवराज सुरेश्वरान् (०२७-००५)
आत्मनः समकालीनं (०२७-००५)
माम् अवैहि सुरेश्वर (०२७-००५)
ततः पप्रच्छ देवेन्द्रः (०२७-००६)
को ऽस्माभिर् मुनिपुङ्गव (०२७-००६)
प्रष्टव्यो ऽत्र महाभाग (०२७-००६)
कृतादिवसतिर् दिवि (०२७-००६)
बृहस्पतिश् चिरं ध्यात्वा (०२७-००७)
पुनर् आह शचीपतिम् (०२७-००७)
तपस्विनीं महाभागां (०२७-००७)
स्मृत्वासौ शाम्भरायणीम् (०२७-००७)
न देवा न च गन्धर्वा (०२७-००८)
न चान्ये चिरसंस्थिताः (०२७-००८)
चिरन्तनानां चरितेष्व् (०२७-००८)
अभिज्ञा त्रिदशेश्वर (०२७-००८)
एकैव चिरकालज्ञा (०२७-००९)

धर्मज्ञा शक्र केवलम् (०२७-००९)
जानात्य् अखिलदेवेन्द्र- (०२७-००९)
चरितं शाम्भरायणी (०२७-००९)
इत्य् उक्तस् तेन देवेन्द्रः (०२७-०१०)
कौतूहलसमन्वितः (०२७-०१०)
ययौ यत्र महाभागा (०२७-०१०)
तापसी शाम्भरायणी (०२७-०१०)
सा तौ दृष्ट्वा समायातौ (०२७-०११)
देवराजबृहस्पती (०२७-०११)
सम्यग् अर्घ्येन संपूज्य (०२७-०११)
प्रणिपत्य शुभव्रता (०२७-०११)
नमो ऽस्तु देवराजाय (०२७-०१२)
तथैवाङ्गिरसे नमः (०२७-०१२)
यद् वां कार्यं महाभागौ (०२७-०१२)
सकलं तद् इहोच्यताम् (०२७-०१२)
आवाम् अभ्यागतौ प्रष्टुं (०२७-०१३)
त्वाम् अत्रातिविवेकिनीम् (०२७-०१३)
यच् च कार्यं महाभागे (०२७-०१३)
तत् पृष्टा कथयेह नौ (०२७-०१३)
यदि स्मरसि कल्याणि (०२७-०१४)
पूर्वेन्द्रचरितानि नौ (०२७-०१४)
तदाख्याहि महाभागे (०२७-०१४)
देवेन्द्रस्य कुतूहलात् (०२७-०१४)
यदि शक्यं मया कर्तुं (०२७-*(१६))
तत् करिष्ये विमृष्यतु (०२७-*(१६))
यो वै पूर्वः सुरेन्द्रस्य (०२७-०१५)
ततश् च प्रथमो हि यः (०२७-०१५)
तस्मात् पूर्वतरो यश् च (०२७-०१५)
तस्यापि प्रथमाश् च ये (०२७-०१५)
तेषां पूर्वतरा ये च (०२७-०१६)
वेद्मि तान् अखिलान् अहम् (०२७-०१६)
तेषां च चरितं कृत्स्नं (०२७-०१६)
जानाम्य् आङ्गिरसां वर (०२७-०१६)
मन्वन्तराण्य् अनेकानि (०२७-०१७)
सृष्टिं च त्रिदिवौकसाम् (०२७-०१७)
सप्तर्षीन् सुबहून् देव (०२७-०१७)
मनूनां च सुतान् नृप (०२७-०१७)
तत् पृच्छ त्वं वदाम्य् एषा (०२७-०१७)
पूर्वेन्द्रचरितं मुने (०२७-०१७)
एवम् उक्ते ततस् ताभ्यां (०२७-०१८)
पृष्टा सा शाम्भरायणी (०२७-०१८)
यथावद् आचष्ट तयोः (०२७-०१८)
पूर्वेन्द्रचरितं द्विज (०२७-०१८)
स्वायम्भुवे यस् तु मनौ (०२७-०१९)
मनौ स्वारोचिषे तु यः (०२७-०१९)
उत्तमे तामसे चैव (०२७-०१९)
रैवते चाक्षुषे तथा (०२७-०१९)
यो यो बभूव देवेन्द्रस् (०२७-०२०)
तस्य तस्य तपस्विनी (०२७-०२०)

तयोर् जगाद चरितं (०२७-०२०)
यथावच् छाम्भरायणी (०२७-०२०)
ततः कौतूहलपरो (०२७-०२१)
देवराट् तां तपस्विनीम् (०२७-०२१)
उवाच जानासि कथं (०२७-०२१)
त्वम् एतच् छाम्भरायणि (०२७-०२१)
सर्व एव हि देवेन्द्राः (०२७-०२२)
स्वर्गस्था ये मनीषिणः (०२७-०२२)
बभूवुर् एतच् चरितम् (०२७-०२२)
एतेषां वेद्मि तेन वै (०२७-०२२)
किं कृतं वद धर्मज्ञे (०२७-०२३)
त्वया येनेयम् अक्षया (०२७-०२३)
स्वर्लोके वसतिः प्राप्ता (०२७-०२३)
यथा नान्येन केनचित् (०२७-०२३)
अहो सर्वव्रतानां तद् (०२७-०२४)
उपोषितं महद् व्रतम् (०२७-०२४)
प्रधानतरम् अत्यर्थं (०२७-०२४)
स्वर्गसंवासदं मतम् (०२७-०२४)
चरितं च मया तेषां (०२७-*(१७))
श्रुतं दृष्टं तथैव च (०२७-*(१७))
एवम् उक्ता ततस् तेन (०२७-०२५)
देवेन्द्रेण यशस्विनी (०२७-०२५)
प्रत्युवाच महाभागा (०२७-०२५)
यथावच् छाम्भरायणी (०२७-०२५)
मासर्क्षेष्व् अच्युतो देवः (०२७-०२६)
प्रतिमासं सुरेश्वर (०२७-०२६)
यथोक्तव्रतया सम्यक् (०२७-०२६)
सप्त वर्षाणि पूजितः (०२७-०२६)
तस्येयं कर्मणो व्युष्टिर् (०२७-०२७)
अच्युताराधनस्य मे (०२७-०२७)
देवलोकाद् अभिमता (०२७-०२७)
देवराज यद् अच्युतिः (०२७-०२७)
स्वर्गं द्रव्यमयैश्वर्यं (०२७-०२८)
संततिं वापि यो ऽच्युताम् (०२७-०२८)
नरो वाञ्छति तेनेत्थं (०२७-०२८)
तोषणीयो ऽच्युतः प्रभुः (०२७-०२८)
एतत् ते पूर्वदेवेन्द्र- (०२७-०२९)
चरितं सकलं मया (०२७-०२९)
स्वर्गवासाक्षयत्वं च (०२७-०२९)
मासर्क्षाच्युतपूजनात् (०२७-०२९)
यथावत् कथितं देव (०२७-०३०)
पृच्छतस् त्रिदशेश्वर (०२७-०३०)
धर्मार्थकाममोक्षांस् तु (०२७-०३०)
वाञ्छतां विबुधाधिप (०२७-०३०)
विष्णोर् आराधनान् नान्यत् (०२७-०३०)
परमं सिद्धिकारणम् (०२७-०३०)
तस्यास् तद् वचनं श्रुत्वा (०२७-०३१)
देवराजबृहस्पती (०२७-०३१)
तां तथेत्य् ऊचतुः साध्वीं (०२७-०३१)

चेरतुश् चापि तद् व्रतम् (०२७-०३१)
तस्माद् दाल्भ्य प्रयत्नेन (०२७-०३२)
प्रतिमासं समाहितः (०२७-०३२)
मासर्क्षाच्युतपूजायां (०२७-०३२)
भवेथास् तन्मनाः सदा (०२७-०३२)
भगवन् प्राणिनः सर्वे (०२८-००१)
विषरोगाद्युपद्रवैः (०२८-००१)
दुष्टग्रहोपघातैश् च (०२८-००१)
सर्वकालम् उपद्रुताः (०२८-००१)
आभिचारुककृत्याभिः (०२८-००२)
स्पर्षरोगैश् च दारुणैः (०२८-००२)
सदा संपीड्यमानास् ते (०२८-००२)
तिष्ठन्ति मुनिसत्तम (०२८-००२)
येन कर्मविपाकेन (०२८-००३)
विषरोगाद्युपद्रवाः (०२८-००३)
न भवन्ति नृणां तन् मे (०२८-००३)
यथावद् वक्तुम् अर्हसि (०२८-००३)
व्रतोपवासैर् यैर् विष्णुर् (०२८-००४)
नान्यजन्मनि पूजितः (०२८-००४)
ते नरा मुनिशार्दूल (०२८-००४)
ग्रहरोगादिभागिनः (०२८-००४)
यैर् न तत्प्रवणं चित्तं (०२८-००५)
सर्वदैव नरैः कृतम् (०२८-००५)
विषग्रहज्वराणां ते (०२८-००५)
मनुष्या दाल्भ्य भाजनाः (०२८-००५)
आरोग्यं परमाम् ऋद्धिं (०२८-००६)
मनसा यद् यद् इच्छति (०२८-००६)
तत् तद् आप्नोत्य् असंदिग्धं (०२८-००६)
परत्राच्युततोषकृत् (०२८-००६)
नाधीन् प्राप्नोति न व्याधीन् (०२८-००७)
न विषग्रहबन्धनम् (०२८-००७)
कृत्यास्पर्शभयं वापि (०२८-००७)
तोषिते मधुसूदने (०२८-००७)
सर्वदुष्टशमस् तस्य (०२८-००८)
सौम्यास् तस्य सदा ग्रहाः (०२८-००८)
देवानाम् अप्रधृष्यो ऽसौ (०२८-००८)
तुष्टो यस्य जनार्दनः (०२८-००८)
यः समः सर्वभूतेषु (०२८-००९)
यथात्मनि तथापरे (०२८-००९)
उपवादादिना तेन (०२८-००९)
तोष्यते मधुसूदनः (०२८-००९)
तोषिते तत्र जायन्ते (०२८-०१०)
नराः पूर्णमनोरथाः (०२८-०१०)
अरोगाः सुखिनो भोग- (०२८-०१०)
भोक्तारो मुनिसत्तम (०२८-०१०)
न तेषां शत्रवो नैव (०२८-०११)
स्पर्शरोगाभिचारुकाः (०२८-०११)
ग्रहरोगादिकं वापि (०२८-०११)
पापकार्यं न जायते (०२८-०११)

अव्याहतानि कृष्णस्य (०२८-०१२)
चक्रादीन्य् आत्मयुधानि तम् (०२८-०१२)
रक्षन्ति सकलापदभ्यो (०२८-०१२)
येन विष्णुर् उपासितः (०२८-०१२)
अनाराधितगोविन्दा (०२८-०१३)
ये नरा दुःखभागिनः (०२८-०१३)
तेषां दुःखाभिभूतानां (०२८-०१३)
कर्तव्यं यद् दयालुभिः (०२८-०१३)
पश्यद्भिः सर्वभूतस्थं (०२८-०१४)
वासुदेवं महामुने (०२८-०१४)
समदृष्टिभिर् ईशेशं (०२८-०१४)
तन् मम ब्रूह्य् अशेषतः (०२८-०१४)
कुशमूलस्थितो ब्रह्मा (०२८-*(१८)।००२)
कुशमध्ये जनार्दनः (०२८-*(१८)।००२)
कुशाग्रे शंकरं विद्यात् (०२८-*(१८)।००३)
त्रयो देवा व्यवस्थिताः (०२८-*(१८)।००३)
गृहीत्वा च स मूलाग्रान् (०२८-*(१८)।००४)
कुशात्र् शुद्धान् उपस्पृशेत् (०२८-*(१८)।००४)
मार्जयेत् सर्वगात्राणि (०२८-*(१८)।००५)
कुशाग्रैर् दाल्भ्य शान्तिकृत् (०२८-*(१८)।००५)
शरीरे यस्य तिष्ठन्ति (०२८-*(१८)।००६)
कुशस्थजलबिन्दवः (०२८-*(१८)।००६)
नश्यन्ति तस्य पापानि (०२८-*(१८)।००७)
गरुडेनैव पन्नगाः (०२८-*(१८)।००७)
विष्णुभक्ता विशेषेण (०२८-*(१८)।००८)
॥॥चिद्गतमानसः (०२८-*(१८)।००८)
रोगग्रहविषार्तानां (०२८-*(१८)।००९)
कुर्याच् छान्तिम् इमां शुभाम् (०२८-*(१८)।००९)
नारसिंहं समभ्यर्च्य (०२८-*(१८)।०१०)
शुचौ देशे कुशासने (०२८-*(१८)।०१०)
मन्त्रैर् एतैर् यथा लिङ्गं (०२८-*(१८)।०११)
कुर्याद् दिग्बन्धम् आत्मनः (०२८-*(१८)।०११)
वाराहं नारसिंहं च (०२८-*(१८)।०१२)
वामनं विष्णुम् एव च (०२८-*(१८)।०१२)
ध्यात्वा समाहितो भूत्वा (०२८-*(१८)।०१३)
दिक्षु नामानि विन्यासेत् (०२८-*(१८)।०१३)
पूर्वे नारायणः पातु (०२८-*(१८)।०१४)
वारिजाक्षस् तु दक्षिणे (०२८-*(१८)।०१४)
प्रद्युम्नः पश्चिमस्यां तु (०२८-*(१८)।०१५)
वासुदेवस् तथोत्तरे (०२८-*(१८)।०१५)
ईशान्याम् अवताद् विष्णुर् (०२८-*(१८)।०१६)
आग्नेय्यां च जनार्दनः (०२८-*(१८)।०१६)
नैरृत्यां पद्मनाभश् च (०२८-*(१८)।०१७)
वायव्यां चैव माधवः (०२८-*(१८)।०१७)
ऊर्ध्वं गोवर्धनधरो (०२८-*(१८)।०१८)
अधरायां त्रिविक्रमः (०२८-*(१८)।०१८)
एताभ्यो दशदिग्भ्यस् तु (०२८-*(१८)।०१९)
सर्वतः पातु केशवः (०२८-*(१८)।०१९)
अङ्गुष्ठाग्रे तु गोविन्दं (०२८-*(१८)।०२०)

तर्जन्यांस् तु महीधरम् (०२८-*(१८)।०२०)
मध्यमायां हृषीकेशम् (०२८-*(१८)।०२१)
अनामिक्यां त्रिविक्रमम् (०२८-*(१८)।०२१)
कणिष्ठायां न्यसेद् विष्णुं (०२८-*(१८)।०२२)
करमध्ये तु माधवम् (०२८-*(१८)।०२२)
एवं न्यासं पुरा कृत्वा (०२८-*(१८)।०२३)
पश्चाद् अङ्गेषु विन्यसेत् (०२८-*(१८)।०२३)
शिखायां केशवं न्यस्य (०२८-*(१८)।०२४)
मूर्ध्नि नारायणं न्यसेत् (०२८-*(१८)।०२४)
चक्षुर्मध्ये न्यसेद् विष्णुं (०२८-*(१८)।०२५)
कर्णयोर् मधुसूदनम् (०२८-*(१८)।०२५)
त्रिविक्रमं कपालस्थं (०२८-*(१८)।०२६)
वामनं कर्णमूलयोः (०२८-*(१८)।०२६)
दामोदरं दन्तवक्त्रौ (०२८-*(१८)।०२७)
वाराहं चिबुके न्यसेत् (०२८-*(१८)।०२७)
उत्तरोष्ठे हृषीकेशं (०२८-*(१८)।०२८)
पद्मनाभं तथाधरे (०२८-*(१८)।०२८)
जिह्वायां वासुदेवं च (०२८-*(१८)।०२९)
ताल्वके गरुडध्वजम् (०२८-*(१८)।०२९)
वैकुण्ठं कन्ठमध्यस्थम् (०२८-*(१८)।०३०)
अनन्तं नासिकोपरि (०२८-*(१८)।०३०)
दक्षिणे तु भुजे विप्र (०२८-*(१८)।०३१)
विन्यसेत् पुरुषोत्तमम् (०२८-*(१८)।०३१)
वामभुजे महाभागं (०२८-*(१८)।०३२)
राघवं हृदि विन्यसेत् (०२८-*(१८)।०३२)
पीताम्बरं सर्वतनौ (०२८-*(१८)।०३३)
हरिं नाभौ तु विन्यसेत् (०२८-*(१८)।०३३)
करे तु दक्षिणे विप्र (०२८-*(१८)।०३४)
ततः संकर्षणं न्यसेत् (०२८-*(१८)।०३४)
वामे विप्र हरिं विद्यात् (०२८-*(१८)।०३५)
कटिमध्ये ऽपराजितम् (०२८-*(१८)।०३५)
पृष्ठे क्षितिधरं विद्याद् (०२८-*(१८)।०३६)
अच्युतं स्कन्धयोर् अपि (०२८-*(१८)।०३६)
माधवं बाहु कुक्षौ तु (०२८-*(१८)।०३७)
दक्षिणे योगशायिनम् (०२८-*(१८)।०३७)
स्वयंभुवं मेढ्रमध्ये (०२८-*(१८)।०३८)
ऊरुभ्यां तु गदाधरम् (०२८-*(१८)।०३८)
चक्रिणं जानुमध्ये तु (०२८-*(१८)।०३९)
जङ्घयोर् अच्युतं न्यसेत् (०२८-*(१८)।०३९)
गुल्पयोर् नरसिंहं च (०२८-*(१८)।०४०)
पादपृष्ठे ऽमितौजसम् (०२८-*(१८)।०४०)
श्रीधरं चाङ्गुलीषु स्यात् (०२८-*(१८)।०४१)
पद्माक्षं सर्वसन्धिषु (०२८-*(१८)।०४१)
रोमकूपे गुडाकेशं (०२८-*(१८)।०४२)
कृष्णं रक्तास्थिमज्जासु (०२८-*(१८)।०४२)
मनोबुद्ध्योर् अहंकारेष्व् (०२८-*(१८)।०४३)
एवं चित्ते जनार्दनम् (०२८-*(१८)।०४३)
नखेषु माधवं चैव (०२८-*(१८)।०४४)
न्यसेत् पादतले ऽच्युतम् (०२८-*(१८)।०४४)

एवं न्यासविधिं कृत्वा (०२८-*(१८)|०४५)
साक्षान् नारायणो भवेत् (०२८-*(१८)|०४५)
तनुर् विष्णुमयी तस्य (०२८-*(१८)|०४६)
यावत् किंचिन् न भाषते (०२८-*(१८)|०४६)
एवं न्यासं ततः कृत्वा (०२८-*(१८)|०४७)
यत् कार्यं शृणु तद् द्विज (०२८-*(१८)|०४७)
पादमूले तु देवस्य (०२८-*(१८)|०४८)
शङ्खं तत्रैव विन्यसेत् (०२८-*(१८)|०४८)
वनमालां तु विन्यस्य (०२८-*(१८)|०४९)
सर्वदेवाभिपूजिताम् (०२८-*(१८)|०४९)
गदां वक्षःस्थले चैव (०२८-*(१८)|०५०)
चक्रं चैव तु पृष्ठतः (०२८-*(१८)|०५०)
श्रीवत्साङ्गं शिरो न्यस्य (०२८-*(१८)|०५१)
पञ्चाङ्गकवचं न्यसेत् (०२८-*(१८)|०५१)
आपादामस्तके चैव (०२८-*(१८)|०५२)
विन्यसेत् पुरुषोत्तमम् (०२८-*(१८)|०५२)
ॐ अपामार्जनको न्यासः (०२८-*(१८)|०५३)
सर्वव्याधिविनाशनः (०२८-*(१८)|०५३)
विष्णुर् ऊर्ध्वम् अधो रक्षेद् (०२८-*(१८)|०५४)
वैकुण्ठो विदिशो दिशः (०२८-*(१८)|०५४)
पातु मां सर्वतो रामो (०२८-*(१८)|०५५)
धन्वी चक्री च केशवः (०२८-*(१८)|०५५)
पूजाकाले तु देवस्य (०२८-*(१८)|०५९)
जपकाले तथैव च (०२८-*(१८)|०५९)
होमारम्भेषु सर्वेषु (०२८-*(१८)|०६०)
त्रिसंध्यासु च नित्यशः (०२८-*(१८)|०६०)
आयुर् आरोग्यम् ऐश्वर्यं (०२८-*(१८)|०६१)
ज्ञानं वित्तं फलं भवेत् (०२८-*(१८)|०६१)
यद् यत् सुखकरं प्रोक्तं (०२८-*(१८)|०६२)
तत् सर्वं प्राप्नुयान् नरः (०२८-*(१८)|०६२)
अभयं सर्वभूतेभ्यो (०२८-*(१८)|०६३)
विष्णुलोकं च गच्छति (०२८-*(१८)|०६३)
अथ ध्यानं प्रवक्ष्यामि (०२८-*(१८)|०७७)
सर्वपापप्रणाशनम् (०२८-*(१८)|०७७)
वाराहरूपिणं देवं (०२८-*(१८)|०७८)
संस्मरत्य् अपराजितम् (०२८-*(१८)|०७८)
बृहत्तनुं बृहद्गात्रं (०२८-*(१८)|०७९)
बृहद्दंष्ट्रसुशोभनम् (०२८-*(१८)|०७९)
समस्तवेदवेदाङ्गं (०२८-*(१८)|०८०)
युक्ताङ्गं भूषणैर् युतम् (०२८-*(१८)|०८०)
उद्धृत्य भूमिं पातालाद् (०२८-*(१८)|०८१)
हस्ताभ्याम् उपगृह्णताम् (०२८-*(१८)|०८१)
आलिङ्ग्य भूमिं शिरसि (०२८-*(१८)|०८२)
मूर्ध्नि जिघ्रन्तम् आस्थितम् (०२८-*(१८)|०८२)
रत्नवैडूर्यमुख्याभिर् (०२८-*(१८)|०८३)
मुक्ताभिर् उपशोभितम् (०२८-*(१८)|०८३)
पीताम्बरधरं देवं (०२८-*(१८)|०८४)
शुक्लमाल्यानुलेपनम् (०२८-*(१८)|०८४)
त्रयस्त्रिंशकोटिदेवैः (०२८-*(१८)|०८५)

स्तूयमानं मुदानिशम् (०२८-*(१८)।०८५)
नृत्यद्भिर् अप्सरोभिश् च (०२८-*(१८)।०८६)
गीयमानं च किन्नरैः (०२८-*(१८)।०८६)
इत्थं ध्यात्वा महात्मानं (०२८-*(१८)।०८७)
जपेन् नित्यं महात्मनः (०२८-*(१८)।०८७)
सुवर्णमण्डपान्तस्थं (०२८-*(१८)।०८८)
पद्मं ध्यायेत् सकेसरम् (०२८-*(१८)।०८८)
सकर्णिकदलैर् इष्टैर् (०२८-*(१८)।०८९)
अष्टभिः परिशोभितम् (०२८-*(१८)।०८९)
करं करहितं देवं (०२८-*(१८)।०९०)
पूर्णचन्द्रासमप्रभम् (०२८-*(१८)।०९०)
तडित्समशटाशोभि (०२८-*(१८)।०९१)
कण्ठनालोपशोभितम् (०२८-*(१८)।०९१)
श्रीवत्साङ्कितवक्षःस्थं (०२८-*(१८)।०९२)
तीक्ष्णदंष्ट्रं त्रिलोचनम् (०२८-*(१८)।०९२)
जवाकुसुमसंकाशं (०२८-*(१८)।०९३)
रक्तहस्ततलान्वितम् (०२८-*(१८)।०९३)
पीतवस्त्रपरीधानं (०२८-*(१८)।०९४)
शुक्लयस्त्रोत्तरीयकम् (०२८-*(१८)।०९४)
करं करहितं देवं (०२८-*(१८)।०९५)
पूर्णचन्द्रासमप्रभम् (०२८-*(१८)।०९५)
कटिसूत्रेण हैमेन (०२८-*(१८)।०९६)
नूपुरेण विराजितम् (०२८-*(१८)।०९६)
वनमालादिशोभाढ्यं (०२८-*(१८)।०९७)
मुक्ताहारोपशोभितम् (०२८-*(१८)।०९७)
अनेकसूर्यसंकाशं (०२८-*(१८)।०९८)
मुकुटाटोपमस्तकम् (०२८-*(१८)।०९८)
शङ्खचक्रगृहीताभ्याम् (०२८-*(१८)।०९९)
उद्बाहुभ्यां विराजितम् (०२८-*(१८)।०९९)
पङ्कजाभं चतुर्हस्तं (०२८-*(१८)।१००)
तत्पत्राभसुलोचनम् (०२८-*(१८)।१००)
प्रातः सूर्यसमप्रख्य- (०२८-*(१८)।१०१)
कुण्डलाभ्यां विराजितम् (०२८-*(१८)।१०१)
केयूरकान्तिसस्यर्द्धि- (०२८-*(१८)।१०२)
मुक्तिकारत्नशोभितम् (०२८-*(१८)।१०२)
जानूपरिन्यस्तहस्तं (०२८-*(१८)।१०३)
वररत्ननखाङ्कुरम् (०२८-*(१८)।१०३)
जङ्घाभरणसस्यर्द्धि- (०२८-*(१८)।१०४)
विस्फुर्यत्कङ्कनत्विषम् (०२८-*(१८)।१०४)
मुक्ताफलाब्दसमहद्- (०२८-*(१८)।१०५)
दन्तपङ्क्तिविराजितम् (०२८-*(१८)।१०५)
चम्पकामुकुलप्रख्य- (०२८-*(१८)।१०६)
सुनासामुखपङ्कजम् (०२८-*(१८)।१०६)
अतिरक्तौष्ठवदनं (०२८-*(१८)।१०७)
व्यात्तास्यम् अतिभीषणम् (०२८-*(१८)।१०७)
वामाङ्कस्थं शिवभक्त- (०२८-*(१८)।१०८)
शान्तिदां सुनितम्बिनीम् (०२८-*(१८)।१०८)
अर्हणीयां सुजातोरुं (०२८-*(१८)।१०९)
सुनासां शुभलक्षणाम् (०२८-*(१८)।१०९)

सुभ्रूं सुकेशीं सुश्रोणीं (०२८-*(१८)।११०)
सुशुभां सुद्विजाननाम् (०२८-*(१८)।११०)
सुप्रतिष्ठां सुवदनां (०२८-*(१८)।१११)
चतुर्हस्तां विचिन्तयेत् (०२८-*(१८)।१११)
दुकूले चैव चार्वङ्गीं (०२८-*(१८)।११२)
हारिणीं सर्वकामदाम् (०२८-*(१८)।११२)
तप्तकञ्चनसंकाशां (०२८-*(१८)।११३)
सर्वाभरणभूषिताम् (०२८-*(१८)।११३)
सुवर्णकलशप्रख्य- (०२८-*(१८)।११४)
पीनोन्नतपयोधराम् (०२८-*(१८)।११४)
गृहीतपद्मयुगलं (०२८-*(१८)।११५)
उद्वाहुभ्यां तथान्ययोः (०२८-*(१८)।११५)
गृहीतमातुलङ्गाख्यं (०२८-*(१८)।११६)
जाम्बुनदकरान् तथा (०२८-*(१८)।११६)
एवं देवीं नृसिंहस्य (०२८-*(१८)।११७)
वामाङ्कोपरि संस्मरेत् (०२८-*(१८)।११७)
अतिविमलसुगात्रं रौप्यपात्रस्थम् अन्नं (०२८-*(१८)।११८)
सुललितदधिखण्डं पाणिना दक्षिणेन (०२८-*(१८)।११९)
कलशम् अमृतपूर्णं सव्यहस्ते दधानं (०२८-*(१८)।१२०)
तदतिसकलदुःखं वामनं भावयेद् यः (०२८-*(१८)।१२१)
अन्या भास्करसप्रभाभिर् अखिलैर् भाभिर् दिशो भासयन् (०२८-*(१८)।१२२)
भीमाक्षस्फुरदट्टहासविलसाद्दंष्ट्राग्रदीप्ताननः (०२८-*(१८)।१२३)
दोर्भिश् चक्रधरौ गदाब्जमुकुलौ त्रासांश् च पाशाङ्कुशौ (०२८-*(१८)।१२४)
बिभ्रत्पिङ्गशिरो ऽरुहोद्धतसटश् चक्रविधानो हरिः (०२८-*(१८)।१२५)
मनोभूतानीन्द्रियाणि (०२८-*(१८)।१३९)
गुणाः सत्त्वं रजस् तमः (०२८-*(१८)।१३९)
त्रैलोक्यस्येश्वरं सर्वम् (०२८-*(१८)।१४०)
अहंकारे प्रतिष्ठिताः (०२८-*(१८)।१४०)
ॐ नमः परमार्थाय (०२८-०१५)
पुरुषाय महात्मने (०२८-०१५)
अरूपबहुरूपाय (०२८-०१५)
व्यापिने परमात्मने (०२८-०१५)
नमस् ते देवदेवाय (०२८-*(१९))
सुरशूर नमो ऽस्तु ते (०२८-*(१९))
लोकाध्यक्ष जगत्पूज्य (०२८-*(१९))
परमात्मन् नमस् ते (!) (०२८-*(१९))
निष्कल्मषाय शुद्धाय (०२८-०१५)
सर्वपापहराय च (०२८-०१५)
नमस्कृत्वा प्रवक्ष्यामि (०२८-०१६,*(२०),*(२१))
यत् तत् सिध्यतु मे वचः (०२८-०१६,*(२०),*(२१))
वराहनरसिंहाय (०२८-०१७)
वामनाय महात्मने (०२८-०१७)
गोविन्दपद्मनाभाय (०२८-*(२०)।००१)
वामदेवाय भूपते (०२८-*(२०)।००१)
नारायणाय देवाय (०२८-*(२०)।००३)
अनन्ताय महात्मने (०२८-*(२०)।००३)
गरुडध्वजाय कृष्णाय (०२८-*(२०)।००५)
पीताम्बरधराय च (०२८-*(२०)।००५)
योगीश्वराय सिद्धाय (०२८-*(२०)।००७)

गुह्याय परमात्मने (०२८-*(२०)।००७)
जनार्दनाय कृष्णाय (०२८-*(२०)।००९)
उपेन्द्रश्रीधराय च (०२८-*(२०)।००९)
भक्तप्रियाय विधये (०२८-*(२०)।०११)
विष्वक्सेनाय शार्ङ्गिने (०२८-*(२०)।०११)
हिरण्यगर्भपतये (०२८-*(२०)।०१३)
हिरण्यकशिपुच्छिदे (०२८-*(२०)।०१३)
चक्रहस्ताय शूलाय (०२८-*(२०)।०१५)
तर्जन्यपत्राय धीमते (०२८-*(२०)।०१५)
आदित्याय उपेन्द्राय (०२८-*(२०)।०१७)
भूतानां जीवनाय च (०२८-*(२०)।०१७)
वासुदेवाय वन्द्याय (०२८-*(२०)।०१९)
वरदाय महात्मने (०२८-*(२०)।०१९)
विषूवृच्छ्रवसे तस्मै (०२८-*(२०)।०२१)
क्षीराम्बुनिछिशायिने (०२८-*(२०)।०२१)
अधोक्षजाय भद्राय (०२८-*(२०)।०२३)
श्रीधरायादिमूर्तये (०२८-*(२०)।०२३)
विश्वेशद्वारमूर्तिश् च (०२८-*(२०)।०२५)
मृत्युरायोहितो ऽस्ति सः (०२८-*(२०)।०२५)
नानारागांश् च दक्षांश् च (०२८-*(२०)।०२७)
विकटाय महाभीती (०२८-*(२०)।०२७)
जातुपतिं व्यग्रहस्तं (०२८-*(२०)।०२८)
वररत्ननखाकरम् (०२८-*(२०)।०२८)
नारायणाय विश्वाय (०२८-*(२०)।०३२)
विश्वेशायाम्बराय च (०२८-*(२०)।०३२)
दामोदराय देवाय (०२८-*(२०)।०३४)
अनन्ताय महात्मने (०२८-*(२०)।०३४)
त्रिविक्रमाय रामाय (०२८-०१७)
वैकुण्ठाय नराय च (०२८-०१७)
नमस्कृत्वा प्रवक्ष्यामि (०२८-०१८)
यत् तत् सिध्यतु मे वचः (०२८-०१८)
वराहनरसिंहेश (०२८-०१९)
वामनेश त्रिविक्रम (०२८-०१९)
हयग्रीवेश सर्वेश (०२८-०१९)
हृषीकेश हराशुभम् (०२८-०१९)
अपराजितचक्राद्यैश् (०२८-०२०)
चतुर्भिः परमायुधैः (०२८-०२०)
अखण्डितप्रभावैस् त्वं (०२८-०२०)
सर्वदुष्टहरो भव (०२८-०२०)
हरामुकस्य दुरितं (०२८-०२१)
दुष्कृतं दुरुपोषितम् (०२८-०२१)
मृत्युबन्धार्तिभयदं (०२८-०२१)
दुरिष्टस्य च यत् फलम् (०२८-०२१)
परापध्यानसहितं (०२८-०२२)
प्रयुक्तं चाभिचारुक (०२८-०२२)
गरस्पर्शमहायोग- (०२८-०२२)
प्रयोगजरयाजर (०२८-०२२)
ॐ नमो वासुदेवाय (०२८-०२३)
नमः क्षृणाय शार्ङ्गिणे (०२८-०२३)

नमः पुष्करनेत्राय (०२८-०२३)
केशवायादिचक्रिणे (०२८-०२३)
नमः कमलकिञ्जल्क- (०२८-०२४)
पीतनिर्मलवाससे (०२८-०२४)
महाहवरिपुस्कन्ध- (०२८-०२४)
घृष्टचक्राय चक्रिणे (०२८-०२४)
दंष्ट्रोद्धृतक्षितिधृते (०२८-०२५)
त्रयीमूर्तिमते नमः (०२८-०२५)
महायज्ञवराहाय (०२८-०२५)
शेषभोगोरुशायिने (०२८-०२५)
तप्तहाटककेशान्त (०२८-०२६)
ज्वलत्पावकलोचन (०२८-०२६)
वज्राधिकनखस्पर्श (०२८-०२६)
दिव्यसिंह नमो ऽस्तु ते (०२८-०२६)
कपिल हेमाश्वशीर्ष (०२८-*(२२))
अतिरिक्तविलोचन (०२८-*(२२))
विद्युत्स्फुरितदंष्ट्राग्र (०२८-*(२२))
दिव्यसिंह नमो ऽस्तु ते (०२८-*(२२))
काश्यपायातिह्रस्वाय (०२८-०२७)
ऋग्यजुःसामभूषित (०२८-०२७)
तुभ्यं वामनरूपाय (०२८-०२७)
सृजते गां नमो नमः (०२८-०२७)
वराहाशेषदुष्टानि (०२८-०२८)
सर्वपापहराणि वै (०२८-०२८)
मर्द मर्द महादंष्ट्र (०२८-०२८)
मर्द मर्द च तत्फलम् (०२८-०२८)
नरसिंह करालास्य (०२८-०२९)
दन्तप्रान्तानलोज्ज्वल (०२८-०२९)
भञ्ज भञ्ज निनादेन (०२८-०२९)
दुष्टान्य् अस्यार्तिनाशन (०२८-०२९)
ऋग्यजुःसामगर्भाभिर् (०२८-०३०)
वाग्भिर् वामनरूपधृक् (०२८-०३०)
प्रशमं सर्वदुःखानि (०२८-०३०)
नयत्व् अस्य जनार्दनः (०२८-०३०)
एकाहिकं द्व्याहिकं च (०२८-०३१)
तथा त्रिदिवसं ज्वरम् (०२८-०३१)
चातुर्थकं तथात्युग्रं (०२८-०३१)
तथैव सततज्वरम् (०२८-०३१)
दोषोत्थं संनिपातोत्थं (०२८-०३२)
तथैवागन्तुकं ज्वरम् (०२८-०३२)
शमं नयाशु गोविन्द (०२८-०३२)
छित्वा च्छित्वा तु वेदनाम् (०२८-०३२)
नेत्रदुःखं शिरोदुःखं (०२८-०३३)
दुःखं चोदरसंभवम् (०२८-०३३)
अनुच्छ्वासम् अतिश्वासं (०२८-०३३)
परितापं सवेपथुं (०२८-०३३)
गुदघ्राणांह्रिरोगांश् च (०२८-०३४)
कुष्ठरोगं तथा क्षयम् (०२८-०३४)
कामलादींस् तथा रोगान् (०२८-०३४)

प्रमेहांश् चातिदारुणान् (०२८-०३४)
भगंदरातिसारांश् च (०२८-०३५)
मुखरोगं सवल्गुलिम् (०२८-०३५)
अश्मरीमूत्रकृच्छ्रांश् च (०२८-०३५)
रोगान् अन्यांश् च दारुणान् (०२८-०३५)
ये वातप्रभवा रोगा (०२८-०३६)
ये च पित्तसमुद्भवाः (०२८-०३६)
कफोद्भवाश् च ये केचिद् (०२८-०३६)
ये चान्ये सांनिपातिकाः (०२८-०३६)
आगन्तवश् च ये रोगा (०२८-०३७)
लूताविस्फोटकादयः (०२८-०३७)
ते सर्वे प्रशमं यान्तु (०२८-०३७)
वासुदेवापमार्जिताः (०२८-०३७)
विलयं यान्तु ते सर्वे (०२८-०३८)
विष्णोर् उच्चारणेन च (०२८-०३८)
क्षयं गच्छन्तु चाशेषास् (०२८-०३८)
ते चक्राभिहता हरेः (०२८-०३८)
अच्युतानन्तगोविन्द- (०२८-०३९)
नामोच्चारणभीषिताः (०२८-०३९)
नश्यन्तु सकला रोगाः (०२८-०३९)
सत्यं सत्यं वदाम्य् अहम् (०२८-०३९)
स्थावरं जङ्गमं वापि (०२८-०४०)
कृत्रिमं वापि यद् विषम् (०२८-०४०)
दन्तोद्भवं नखभवम् (०२८-०४०)
आकाशप्रभवं विषम् (०२८-०४०)
लूतादिप्रभवं यच् च (०२८-०४१)
विषम् अत्यन्तदुःखदम् (०२८-०४१)
शमं नयतु तत् सर्वं (०२८-०४१)
कीर्तितो ऽस्य जनार्दनः (०२८-०४१)
ग्रहान् प्रेतग्रहांश् चैव (०२८-०४२)
तथा वै डाकिनीग्रहान् (०२८-०४२)
वेतालांश् च पिशाचांश् च (०२८-०४२)
गन्धर्वान् यक्षराक्षसान् (०२८-०४२)
शकुनीपूतनाद्यांश् च (०२८-०४३)
तथा वैनायकग्रहान् (०२८-०४३)
मुखमण्डिनिकां क्रूरां (०२८-०४३)
रेवतीं वृद्धरेवतीम् (०२८-०४३)
वृद्धिकाख्यान् ग्रहांश् चोग्रांस् (०२८-०४४)
तथा मातृग्रहान् अपि (०२८-०४४)
बालस्य विष्णोः चरितं (०२८-०४४)
हन्तु बालग्रहान् इमान् (०२८-०४४)
वृद्धानां ये ग्रहाः केचिद् (०२८-०४५)
ये च बालग्रहाः क्वचित् (०२८-०४५)
नरसिंहस्य ते दृष्ट्या (०२८-०४५)
दग्धा ये चापि यौवने (०२८-०४५)
सटाकरालवदनो (०२८-०४६)
नरसिंहो महारवः (०२८-०४६)
ग्रहान् अशेषान् निःशेषान् (०२८-०४६)
करोतु जगतो हितम् (०२८-०४६)

नरसिंह महासिंह (०२८-०४७)
ज्वालामालोज्ज्वलानन (०२८-०४७)
ग्रहान् अशेषान् सर्वेश (०२८-०४७)
खाद खादाग्निलोचन (०२८-०४७)
ये रोगा ये महोत्पाता (०२८-०४८)
यद् विषं ये महाग्रहाः (०२८-०४८)
यानि च क्रूरभूतानि (०२८-०४८)
ग्रहपीडाश् च दारुणाः (०२८-०४८)
शस्त्रक्षतेषु ये दोषा (०२८-०४८)
ज्वालागर्दभकादयः (०२८-०४८)
यानि चार्याणि भूतानि (०२८-*(२३))
प्राणिपीडाकराणि वै (०२८-*(२३))
तानि सर्वाणि सर्वात्मन् (०२८-०४९)
परमात्मञ् जनार्दन (०२८-०४९)
किंचिद् रूपं समास्थाय (०२८-०४९)
वासुदेव विनाशय (०२८-०४९)
क्षिस्वा सुदर्शनं चक्रं (०२८-०५०)
ज्वालामालाविभीषणम् (०२८-०५०)
सर्वदुष्टोपशमनं (०२८-०५०)
कुरु देववराच्युत (०२८-०५०)
सुदर्शन महाचक्र (०२८-*(२४)|००१)
गोविन्दस्य करायुध (०२८-*(२४)|००१)
ज्वलत्पावकसंकाश (०२८-*(२४)|००२)
सूर्यकोटिसमप्रभ (०२८-*(२४)|००२)
त्रैलोक्यरक्षकर्तृ त्वं (०२८-*(२४)|००३)
त्वं दुष्टदानवदारण (०२८-*(२४)|००३)
तीक्ष्णधार महावेग (०२८-*(२४)|००४)
छिन्धि च्छिन्धि महाज्वरम् (०२८-*(२४)|००४)
छिन्धि च्छिन्धि महाव्याधिं (०२८-*(२४)|००५)
छिन्धि च्छिन्धि महाग्रहान् (०२८-*(२४)|००५)
छिन्धि वातं च धूतं च (०२८-*(२४)|००६)
छिन्धि घोरं महाविषम् (०२८-*(२४)|००६)
रुजदाघं च शूलं च (०२८-*(२४)|००७)
निमिषज्वालगर्दभम् (०२८-*(२४)|००७)
सुदर्शन महाज्वाल (०२८-०५१)
छिन्धि च्छिन्धि ममारयः (०२८-०५१)
सर्वदुष्टानि रक्षांसि (०२८-०५१)
क्षपयातिविभीषण (०२८-०५१)
हां हां हूं हूं फट्कारेण (०२८-*(२५)|००१)
ठद्वयेन हतद्विषः (०२८-*(२५)|००१)
सुदर्शनस्य मन्त्रेण (०२८-*(२५)|००२)
ग्रहा यान्ति दिशो दिशः (०२८-*(२५)|००२)
त्रैलोक्यस्याभयं कर्तुम् (०२८-*(२५)|००९)
आज्ञापय जनार्दन (०२८-*(२५)|००९)
सर्वदुष्टानि रक्षांसि (०२८-*(२५)|०१०)
क्षयं यान्ति विभीषया (०२८-*(२५)|०१०)
प्राच्यां प्रतीच्यां च दिशि (०२८-०५२)
दक्षिणोत्तरतस् तथा (०२८-०५२)
रक्षां करोतु सर्वात्मा (०२८-०५२)

नरसिंहः स्वगर्जितैः (०२८-०५२)
भूम्यन्तरिक्षे च तथा (०२८-०५३)
पृष्ठतः पार्श्वतो ऽग्रतः (०२८-०५३)
व्याघ्रसिंहवराहेषु (०२८-*(२६))
अन्दिचोरभयेषु च (?) (०२८-*(२६))
रक्षां करोतु भगवान् (०२८-०५३)
बहुरूपी जनार्दनः (०२८-०५३)
यथा विष्णुॠ जगत् सर्वं (०२८-०५४)
सदेवासुरमानवम् (०२८-०५४)
तेन सत्येन दुष्टानि (०२८-०५४)
शमम् अस्य व्रजन्तु वै (०२८-०५४)
यथा विष्णौ स्मृते सम्यक् (०२८-०५५)
संक्षयं याति पातकम् (०२८-०५५)
सत्येन तेन सकलं (०२८-०५५)
दुष्टम् अस्य प्रशाम्यतु (०२८-०५५)
परमात्मा यथा विष्णुर् (०२८-०५६)
वेदान्तेष्व् अभिधीयते (०२८-०५६)
तेन सत्येन सकलं (०२८-०५६)
दुष्टम् अस्य प्रशाम्यतु (०२८-०५६)
यथा यज्ञेष्वरो विष्णुर् (०२८-०५७)
वेदेष्व् अपि तु गीयते (०२८-०५७)
तेन सत्येन सकलं (०२८-०५७)
यन् मयोक्तं तथास्तु तत् (०२८-०५७)
यथा यज्ञेश्वरो विष्णुर् (०२८-*(२७))
यज्ञान्ते अपि गीयते (०२८-*(२७))
तेन सत्येन सकलं (०२८-*(२७))
यन् मयोक्तं तथास्तु तत् (०२८-*(२७))
शान्तिर् अस्तु शिवं चास्तु (०२८-०५८)
प्रशाम्यत्व् असुखं च यत् (०२८-०५८)
वासुदेवशरीरोत्थैः (०२८-०५८)
कुशैर् निर्माजितं मया (०२८-०५८)
अपामार्जति गोविन्दो (०२८-०५९)
नरो नारायणस् तथा (०२८-०५९)
तवास्तु सर्वदुःखानां (०२८-०५९)
प्रशमो वचनाद् धरेः (०२८-०५९)
इदं शास्त्रं पठेद् यस् तु (०२८-*(२८))
सप्ताहन् नियतः शुचिः (०२८-*(२८))
शान्तिं समस्तरोगास् ते (०२८-०६०)
ग्रहाः सर्वे विषानि च (०२८-०६०)
भूतानि च प्रयान्त्व् ईशे (०२८-०६०)
संस्मृते मधुसूदने (०२८-०६०)
एतत् समस्तरोगेषु (०२८-०६१)
भूतग्रहभयेषु च (०२८-०६१)
अपमार्जनकं शस्तं (०२८-०६१)
विष्णुनामाभिमन्त्रितम् (०२८-०६१)
एते कुशा विष्णुशरीरसंभवा (०२८-०६२)
जनार्दनो ऽहं स्वयं एव चागतः (०२८-०६२)
हतं मया दुष्टम् अशेषम् अस्य (०२८-०६२)
स्वस्थो भवत्य् एष वचो यथा हरेः (०२८-०६२)

शान्तिर् अस्तु शिवं चास्तु (०२८-०६३)
दुष्टम् अस्य प्रशाम्यतु (०२८-०६३)
यद् अस्य दुरितं किंचित् (०२८-०६३)
तत् क्षिप्तं लवणार्णवे (०२८-०६३)
स्वास्थ्यम् अस्य सदैवास्तु (०२८-०६४)
हृषीकेशस्य कीर्तनात् (०२८-०६४)
यत एवागतं पापं (०२८-०६४)
तत्रैव प्रतिगच्छतु (०२८-०६४)
एतद् रोगादिपीडासु (०२८-०६५)
जन्तूनां हितम् इच्छता (०२८-०६५)
विष्णुभक्तेन कर्तव्यम् (०२८-०६५)
अपमार्जनकं परम् (०२८-०६५)
अनेन सर्वदुष्टानि (०२८-०६६)
प्रशमं यान्त्य् असंशयम् (०२८-०६६)
सर्वभूतहितार्थाय (०२८-०६६)
कुर्यात् तस्मात् सदैव हि (०२८-०६६)
सर्वापराधशमनम् (०२८-*(२९)।००१)
अपामार्जनकं परम् (०२८-*(२९)।००१)
एतत् स्तोत्रम् इदं पुण्यं (०२८-*(२९)।००२)
पठेद् आयुष्यवर्धनम् (०२८-*(२९)।००२)
विनाशाय च रोगाणाम् (०२८-*(२९)।००३)
अवमृत्युक्षयाय च (०२८-*(२९)।००३)
व्याघ्रापस्मारकुष्ठादि (०२८-*(२९)।००४)
पिशाचोरगराक्षसाः (०२८-*(२९)।००४)
तस्य पार्श्वं न गच्छन्ति (०२८-*(२९)।००५)
स्तोत्रम् एतद् यथा पठेत् (०२८-*(२९)।००५)
स्मरञ् जपन्न् इदं स्तोत्रं (०२८-*(२९)।००६)
सर्वव्याधिविनाशनम् (०२८-*(२९)।००६)
पठतां शृण्वतां नित्यं (०२८-*(२९)।००७)
विष्णुलोकं स गच्छति (०२८-*(२९)।००७)
सुरूपता मनुष्याणां (०२९-००१)
स्त्रीणां च द्विजसत्तम (०२९-००१)
कर्मणा जायते येन (०२९-००१)
तन् ममाख्यातुम् अर्हसि (०२९-००१)
सुरूपाणां सुगात्राणां (०२९-००२)
सुवेषाणां तथा मुने (०२९-००२)
न्यूनं तथाधिकं वापि (०२९-००२)
किंचिद् अङ्गं प्रजायते (०२९-००२)
समस्तैः शोभनैर् अङ्गैर् (०२९-००३)
नराः केचित् तथा द्विज (०२९-००३)
काणाः कुब्जाश् च जायन्ते (०२९-००३)
त्रुटितश्रवणास् तथा (०२९-००३)
नराणां योषितां चैव (०२९-००४)
समस्ताङ्गसुरूपता (०२९-००४)
कर्मणा येन भवति (०२९-००४)
तत् सर्वं कथयामल (०२९-००४)
लावण्यगतिवाक्यानि (०२९-००५)
सति रूपे महामते (०२९-००५)
प्रयान्ति चारुतां रूपं (०२९-००५)

तेनोक्तः परमो गुणः (०२९-००५)
वाक्यलावण्यसंस्कार- (०२९-००६)
विलासललिता गतिः (०२९-००६)
विडम्बना कुरूपाणां (०२९-००६)
स्त्रीपुंसाम् अभिजायते (०२९-००६)
रूपकारणभूताय (०२९-००७)
यतेत मतिमांस् ततः (०२९-००७)
कर्मणा तन् ममाचक्ष्व (०२९-००७)
कर्म यच् चारुरूपदम् (०२९-००७)
सम्यक् पृष्टं त्वया हीदम् (०२९-००८)
उपवासाश्रितं द्विज (०२९-००८)
कथयामि यथा प्रोक्तं (०२९-००८)
वसिष्ठेन महात्मना (०२९-००८)
वसिष्ठम् ऋषिम् आसीनं (०२९-००९)
सप्तर्षिप्रवरं पतिम् (०२९-००९)
पप्रच्छारुन्धती प्रश्नं (०२९-००९)
यद् एतद् भवता वयम् (०२९-००९)
तस्याः स परिपृच्छन्त्या (०२९-०१०)
जगाद मुनिसत्तमः (०२९-०१०)
यत् तच् छृणुष्व धर्मज्ञ (०२९-०१०)
ममेह वदतो ऽखिलम् (०२९-०१०)
श्रूयतां मम यत् पृष्टस् (०२९-०११)
त्वयाहं ब्रह्मवादिनि (०२९-०११)
सुरूपता नृणां येन (०२९-०११)
योषितां चोपजायते (०२९-०११)
अनभ्यर्च्य यथान्यायम् (०२९-०१२)
अनाराध्य च केशवम् (०२९-०१२)
रूपादिका गुणाः केन (०२९-०१२)
प्राप्यन्ते ऽन्येन कर्मणा (०२९-०१२)
तस्माद् आराधनीयो वै (०२९-०१३)
विष्णुर् एव यशस्विनि (०२९-०१३)
परत्र प्राप्तुकामेन (०२९-०१३)
रूपसंपत्सुतादिकम् (०२९-०१३)
यस् तु वाञ्छति धर्मज्ञे (०२९-०१४)
रूपं सर्वाङ्गशोभनम् (०२९-०१४)
नक्षत्रपुरुषस् तेन (०२९-०१४)
संपूज्यः पुरुषोत्तमः (०२९-०१४)
नक्षत्राङ्गं यथाहारः (०२९-०१५)
समुपोष्यति यो हरिम् (०२९-०१५)
सुरूपैर् अखिलाङ्गैश् च (०२९-०१५)
रूपवान् अभिजायते (०२९-०१५)
योषिता च परं रूपम् (०२९-०१६)
इच्छन्त्या जगतः पतिः (०२९-०१६)
स एवाराधनीयो ऽत्र (०२९-०१६)
नक्षत्राङ्गो जनार्दनः (०२९-०१६)
नक्षत्ररूपी भगवान् (०२९-०१७)
पूज्यते पुरुषोत्तमः (०२९-०१७)
मुने येन विधानेन (०२९-०१७)
तन् ममाख्यातुम् अर्हसि (०२९-०१७)

चैत्रमासं समारभ्य (०२९-०१८)
विष्णोः पादादिपूजनम् (०२९-०१८)
यथा कुर्वीत रूपार्थी (०२९-०१८)
तन् निशामय तत्त्वतः (०२९-०१८)
नक्षत्रम् एकम् एकं वै (०२९-०१९)
स्नातः सम्यग् उपोषितः (०२९-०१९)
नक्षत्रपुरुषस्याङ्गं (०२९-०१९)
पूजयेत् साध्वी चक्रिणः (०२९-०१९)
मूले पादौ तथा जङ्घे (०२९-०२०)
रोहिणीष्व् अर्चयेच् छुभे (०२९-०२०)
जानुनी चाश्विनीयोग (०२९-०२०)
आषाढे चोरुसंज्ञिते (०२९-०२०)
फाल्गुनीद्वितये गुह्यं (०२९-०२१)
कृत्तिकासु तथा कटिम् (०२९-०२१)
पार्श्वे भद्रपदायुग्मे (०२९-०२१)
द्वे कुक्षी रेवतीषु च (०२९-०२१)
अनुराध उरः पृष्ठं (०२९-०२२)
श्रविष्ठास्व् अभिपूजयेत् (०२९-०२२)
भुजयुग्मं विशाखासु (०२९-०२२)
हस्ते चैव करद्वयम् (०२९-०२२)
पुनर्वसाव् अङ्गुलींश् च (०२९-०२३)
आश्लेषासु तथा नखान् (०२९-०२३)
ज्येष्ठायां पूजयेद् ग्रीवं (०२९-०२३)
श्रवणे श्रवणे तथा (०२९-०२३)
पुष्ये मुखं तथा स्वातौ (०२९-०२४)
दशनान् अभिपूजयेत् (०२९-०२४)
हन्वौ शतभिषायोगे (०२९-०२४)
मघायोगे च नासिकाम् (०२९-०२४)
मृगोत्तमाङ्गे नयने (०२९-०२५)
पूजयेद् भक्तितः शुभे (०२९-०२५)
चित्रायोगे ललाटं च (०२९-०२५)
भरण्यां च तथा शिरः (०२९-०२५)
संपूजनीया विद्वद्भिश् (०२९-०२५)
चाद्रासु च शिरोरुहाः (०२९-०२५)
नक्षत्रयोगेष्व् एतेषु (०२९-०२६)
पूजितो जगतः पतिः (०२९-०२६)
नक्षत्रपुरुषाख्यो ऽयं (०२९-०२६)
यथावत् पुरुषोत्तमः (०२९-०२६)
पापापहारं कुरुते (०२९-०२७)
सम्यच् छ्रद्धावतां सताम् (०२९-०२७)
अङ्गोपाङ्गानि चैवास्य (०२९-०२७)
पापादीनि यशस्विनि (०२९-०२७)
सुरूपान्य् अभिजायन्ते (०२९-०२८)
सप्त जन्मान्तराणि वै (०२९-०२८)
सर्वाणि चैव भद्राणि (०२९-०२८)
शरीरारोग्यम् उत्तमम् (०२९-०२८)
संततिं मनसः प्रीतिं (०२९-०२९)
रूपं चातीवशोभनम् (०२९-०२९)
वाङ्माधूर्यं तथा कान्तिं (०२९-०२९)

यच् चान्यद् अभिवाञ्छितम् (०२९-०२९)
ददाति नक्षत्रपुमान् (०२९-०३०)
पूजितश् च जनार्दनः (०२९-०३०)
उपोष्य सम्यग् एतेषु (०२९-०३०)
क्रमेण र्क्षेषु शोभने (०२९-०३०)
संपूजनीयो भगवान् (०२९-०३१)
नक्षत्राङ्गो जनार्दनः (०२९-०३१)
गन्धपुष्पादिसंयुक्तं (०२९-*(३०))
पूजयित्वा यदाविधि (०२९-*(३०))
जानुभ्यां धरणीं गत्वा (०२९-*(३०))
इदं चोदाहरेत् ततः (०२९-*(३०))
स्वरूपम् आरोग्यम् अतीव वर्चसं (०२९-*(३०))
सुसंततिं त्व् अस्थितभक्तिम् अच्युताम् (०२९-*(३०))
अपि सर्वम् एतं प्रोतं (०२९-*(३०))
सूत्रे मणिगणा इव (०२९-*(३०))
एकपुरुष महापुरुष (०२९-*(३०))
ऋक्षपुरुष नमो ऽस्तु ते (०२९-*(३०))
प्रतिनक्षत्रयोगे च (०२९-०३१)
भोजनीया द्विजोत्तमाः (०२९-०३१)
नक्षत्रज्ञाय विप्राय (०२९-०३२)
दद्याद् दानं च शक्तितः (०२९-०३२)
पारिते च पुनर् दद्यात् (०२९-०३२)
स्त्रीपूंसां चारुहासिनि (०२९-०३२)
छत्त्रोपानद्युगं चैव (०२९-०३३)
सप्तधान्यं सकाञ्चनम् (०२९-०३३)
घृतपात्रं च धर्मज्ञे (०२९-०३३)
यच् चान्यद् अतिवल्लभम् (०२९-०३३)
स्त्री वा साध्वी सदा विष्णोर् (०२९-०३४)
आराधनपरायणा (०२९-०३४)
अनेनैव विधानेन (०२९-०३४)
संपूज्यैतद् अवाप्नुयात् (०२९-०३४)
सर्वकामान् अवाप्नोति (०३०-००१)
समाराध्य जनार्दनम् (०३०-००१)
प्रकारैर् बहुभिर् ब्रह्मन् (०३०-००१)
यान् यान् इच्छति चेतसा (०३०-००१)
नृणां स्त्रीणां च विप्रर्षे (०३०-००२)
नान्यच् छोकस्य कारणम् (०३०-००२)
अपत्याद् अधिकं किंचिद् (०३०-००२)
विद्यते ह्य् अत्र जन्मनि (०३०-००२)
अपुत्रता महद् दुःखम् (०३०-००३)
अतिदुःखं कुपुत्रता (०३०-००३)
अपुत्रः सर्वदुःखानां (०३०-००३)
हेतुभूतो मतो मम (०३०-००३)
धन्यास् ते ये सुतं प्राप्य (०३०-००४)
सर्वदुःखविवर्जितम् (०३०-००४)
शस्तं प्रशान्तं बलिनं (०३०-००४)
परां निर्वृतिम् आगताः (०३०-००४)
स्वकर्मनिरतं नित्यं (०३०-००५)
देवद्विजपरायणम् (०३०-००५)

शास्त्रज्ञं धर्मतत्त्वज्ञं (०३०-००५)
दीनानाथजनाश्रयम् (०३०-००५)
विनिर्जितारिं सर्वस्य (०३०-००६)
मनोहृदयनन्दनम् (०३०-००६)
देवानुकूलतायुक्तं (०३०-००६)
युक्तं सम्यग् गुणेन च (०३०-००६)
मित्रस्वजनसम्मान- (०३०-००७)
लब्धनिर्वाणम् उत्तमम् (०३०-००७)
यः प्राप्नोति सुतं तस्मान् (०३०-००७)
नान्यो धन्यतरो भुवि (०३०-००७)
सो ऽहम् इच्छामि तच् छ्रोतुं (०३०-००८)
त्वत्तः कर्म महामुने (०३०-००८)
येनेदृग्लक्षणः पुत्रः (०३०-००८)
प्राप्यते भुवि मानवैः (०३०-००८)
एवम् एतन् महाभाग (०३०-००९)
पित्रोः पुत्रसमुद्भवम् (०३०-००९)
दुःखं प्रयात्य् उपशमं (०३०-००९)
तेन येनेह केनचित् (०३०-००९)
अत्रापि श्रूयतां वृत्तं (०३०-०१०)
यत् पूर्वम् अभवन् मुने (०३०-०१०)
उत्पत्तौ कार्तवीर्यस्य (०३०-०१०)
हैहयस्य महात्मनः (०३०-०१०)
कृतवीर्यो महीपालो (०३०-०११)
हैहयानाम् अभूत् पुरा (०३०-०११)
तस्य शीलधना नाम (०३०-०११)
बभूव वरवर्णिनी (०३०-०११)
पत्नी सहस्रप्रवरा (०३०-०११)
महिषी शीलमण्डना (०३०-०११)
सा त्व् अपुत्रा महाभागा (०३०-०१२)
मैत्रेयीं पर्यपृच्छत (०३०-०१२)
गुणवत्पुत्रलाभाय (०३०-०१२)
कृतासनपरिग्रहाम् (०३०-०१२)
तया च पृष्टा वै सम्यग् (०३०-०१३)
मैत्रेयी ब्रह्मवादिनी (०३०-०१३)
कथयाम् आस परमं (०३०-०१३)
नाम्नानन्तव्रतं व्रतम् (०३०-०१३)
सर्वकामफलावाप्ति- (०३०-०१४)
कारकं पापनाशनम् (०३०-०१४)
तस्याः सा पुत्रलाभाय (०३०-०१४)
राजपुत्रास् तपस्विनी (०३०-०१४)
यो ऽयम् इच्छेन् नरः कामं (०३०-०१५)
नारी वा वरवर्णिनि (०३०-०१५)
स तं समाराध्य विभुं (०३०-०१५)
समाप्नोति जनार्दनम् (०३०-०१५)
मार्गशीर्षे मृगशिरो (०३०-०१६)
भीरु यस्मिन् दिने भवेत् (०३०-०१६)
तस्मिन् संप्राश्य गोमूत्रं (०३०-०१६)
स्नातो नियतमानसः (०३०-०१६)
पुष्पैर् धूपैस् तथा गन्धैर् (०३०-०१७)

उपहारैः स्वशक्तितः (०३०-०१७)
वामपादम् अनन्तस्य (०३०-०१७)
पूजयेद् वरवर्णिनि (०३०-०१७)
अनन्तः सर्वकामानाम् (०३०-०१८)
अनन्तं भगवान् फलम् (०३०-०१८)
ददात्व् अनन्तं च पुनस् (०३०-०१८)
तद् एवास्त्व् अन्यजन्मनि (०३०-०१८)
अनन्तपुण्योपचयं (०३०-०१९)
करोत्य् एतन् महाव्रतम् (०३०-०१९)
यथाभिलषितावाप्तिं (०३०-०१९)
कुर्वन् मा क्षयम् एतु च (०३०-०१९)
इत्य् उच्चार्याभिपूज्यैनं (०३०-०२०)
यथावद् विधिना नरः (०३०-०२०)
समाहितमना भूत्वा (०३०-०२०)
प्रणिपातपुरःसरम् (०३०-०२०)
विप्राय दक्षिणां दद्याद् (०३०-०२१)
अनन्तः प्रीयताम् इति (०३०-०२१)
समुच्चार्य ततो नक्तं (०३०-०२१)
भुञ्जीयात् तैलवर्जितम् (०३०-०२१)
ततश् च पौषे पुष्यर्क्षे (०३०-०२२)
तथैव भगवत्कटिम् (०३०-०२२)
वामाम् अभ्यर्चयेत् कृत्वा (०३०-०२२)
गोमूत्रप्राशनं बुधः (०३०-०२२)
अनन्तः सर्वकामानाम् (०३०-०२३)
इति चोच्चारयेद् बुधः (०३०-०२३)
भुञ्जीत च तथा विप्रं (०३०-०२३)
वाचयित्वा यथाविधि (०३०-०२३)
माघे मघासु तद्वच् च (०३०-०२४)
बाहुं देवस्य पूजयेत् (०३०-०२४)
स्कन्धं च फल्गुनीयोगे (०३०-०२४)
फाल्गुने मासि भामिनि (०३०-०२४)
चतुर्ष्व् एतेषु गोमूत्र- (०३०-०२५)
प्राशनं नृपनन्दिनि (०३०-०२५)
ब्राह्मणाय तथा दद्यात् (०३०-०२५,*(३१))
तिलान् कनकम् एव च (०३०-०२५,*(३१))
देवस्य दक्षिणस्कन्धं (०३०-०२६)
चैत्रे चित्रासु पूजयेत् (०३०-०२६)
तथैव प्राशनं चात्र (०३०-०२६)
पञ्चगव्यम् उदाहृतम् (०३०-०२६)
विप्रे वाचनके दद्याद् (०३०-०२७)
यावन् मासचतुष्टयम् (०३०-०२७)
वैशाखे च विशाखासु (०३०-०२७)
बाहुं संपूज्य दक्षिणम् (०३०-०२७)
तथैवोक्तयवान् दद्यात् (०३०-०२८)
तद्वन् नक्तं भुजिक्रिया (०३०-०२८)
कटिपूजां च ज्येष्ठासु (०३०-०२८)
ज्येष्ठमूले शुभव्रते (०३०-०२८)
आषाढासु तथाषाढे (०३०-०२९)
कुर्यात् पादार्चनं शुभे (०३०-०२९)

पदद्वयं च श्रवणे (०३०-०२९)
श्रावणे सुभ्रु पूजयेत् (०३०-०२९)
घृतं विप्राय दातव्यं (०३०-०३०)
प्राशनीयं तथा दधि (०३०-०३०)
कार्त्तिकान्तेषु मासेषु (०३०-०३०)
प्राशनं दानम् एव च (०३०-०३०)
एतद् एव समाख्यातं (०३०-०३०,*(३२))
देवं तद्वच् च पूजयेत् (०३०-०३०,*(३२))
गुह्यं प्रोष्ठपदायोगे (०३०-०३१)
मासि भाद्रपदे ऽर्चयेत् (०३०-०३१)
तद्वद् आश्वयुजे पूज्यं (०३०-०३१)
हृदयं चाश्विनीषु वै (०३०-०३१)
कुर्यात् समाहितमनाः (०३०-०३२)
स्नानप्राशनशौचवान् (०३०-०३२)
अनन्तशिरसः पूजां (०३०-०३२)
कार्त्तिके कृत्तिकासु च (०३०-०३२)
यस्मिन् यस्मिन् दिने पूजा (०३०-०३३)
तत्र तत्र तदा दिने (०३०-०३३)
नामानन्तस्य जप्तव्यं (०३०-०३३)
क्षुतप्रस्खलितादिषु (०३०-०३३)
घृतेनानन्तम् उद्दिश्य (०३०-०३४)
पूर्वमासचतुष्टयम् (०३०-०३४)
कुर्वीत होमं चैत्रादौ (०३०-०३४)
शालिना कुलनन्दिनि (०३०-०३४)
क्षीरेण श्रावणादौ तु (०३०-०३५)
होमं मासचतुष्टयम् (०३०-०३५)
शस्तं तु सर्वमासेषु (०३०-०३५)
हविष्यान्नं च भोजनम् (०३०-०३५)
एवं द्वादशभिर् मासैः (०३०-०३६)
पारणं त्रितयं शुभे (०३०-०३६)
पारिते समवाप्नोति (०३०-०३६)
सर्वान् एव मनोरथान् (०३०-०३६)
पुत्रार्थिभिर् वित्तकामैर् (०३०-०३७)
भृत्यदारान् अभीप्सुभिः (०३०-०३७)
प्रार्थयद्भिश् च कर्तव्यम् (०३०-०३७)
आरोग्यबलसंपदम् (०३०-०३७)
एतद् व्रतं महाभागे (०३०-०३८)
पुण्यं स्वस्त्ययनप्रदम् (०३०-०३८)
अनन्तव्रतसंज्ञं वै (०३०-०३८)
सर्वपापप्रणाशनम् (०३०-०३८)
तत् कुरुष्वैव देवि त्वं (०३०-०३९)
व्रतं शीलधने वरम् (०३०-०३९)
विशिष्टं सर्वलोकस्य (०३०-०३९)
यदि पुत्रम् अभीप्ससि (०३०-०३९)
इति शीलधना श्रुत्वा (०३०-०४०)
मैत्रेयीवचनं शुभम् (०३०-०४०)
चचारैतद् व्रतवरं (०३०-०४०)
सुसमाहितमानसा (०३०-०४०)
पुत्रार्थिन्यास् ततस् तस्या (०३०-०४१)

व्रतेनानेन सुव्रत (०३०-०४१)
विष्णुस् तुतोष तुष्टे च (०३०-०४१)
विष्णौ सा सुषुवे सुतम् (०३०-०४१)
तस्य वै जातमात्रस्य (०३०-०४२)
प्रववाव् अनिलः शिवः (०३०-०४२)
नीरजस्कम् अभूद् व्योम (०३०-०४२)
मुदं प्रापाखिलं जगत् (०३०-०४२)
देवदुन्दुभयो नेदुः (०३०-०४३)
पुष्पवृष्टिः पपात च (०३०-०४३)
प्रजगुर् दिवि गन्धर्वा (०३०-०४३)
ननृतुश् चाप्सरोगणाः (०३०-०४३)
धर्मे मनः समस्तस्य (०३०-०४३)
दाल्भ्य लोकस्य चाभवत् (०३०-०४३)
तस्य नाम पिता चक्रे (०३०-०४४)
तनयस्यार्जुनेति वै (०३०-०४४)
कृतवीर्यसुतत्वाच् च (०३०-०४४)
कार्तवीर्यो बभूव सः (०३०-०४४)
तेनापि भगवान् विष्णुर् (०३०-०४५)
दत्तात्रेयस्वरूपवान् (०३०-०४५)
आराधितो ऽतिमहता (०३०-०४५)
तपसा दाल्भ्य भूभृता (०३०-०४५)
तस्य तुष्टो जगन्नाथश् (०३०-०४६)
चक्रवर्तित्वम् उत्तमम् (०३०-०४६)
ददौ शौर्यबले चाति- (०३०-०४६)
सकलान्य् आयुधानि च (०३०-०४६)
स च वव्रे वरं देव (०३०-०४७)
वधस् त्वत्तो भवेद् इति (०३०-०४७)
पुरानुस्मरणं ज्ञानं (०३०-०४७)
भीतानां चार्तिनाशनम् (०३०-०४७)
स्मरणाद् उपकारित्वं (०३०-०४७)
जगतो ऽस्य जगत्पते (०३०-०४७)
तम् आह देवदेवेशः (०३०-०४८)
पुण्डरीकनिभेक्षणः (०३०-०४८)
सर्वम् एतन् महाभाग (०३०-०४८)
तव भूप भविष्यति (०३०-०४८)
यश् च प्रभाते रात्रौ च (०३०-०४९)
त्वां नरः कीर्तयिष्यति (०३०-०४९)
नमो ऽस्तु कार्तवीर्यायेत्य् (०३०-०४९)
अभिधास्यति चैव यः (०३०-०४९)
तिलप्रस्थप्रदानस्य (०३०-०४९)
स नरः पुण्यम् आप्स्यति (०३०-०४९)
अनष्टद्रव्यता चैव (०३०-०५०)
तव नामाभिकीर्तनैः (०३०-०५०)
भविष्यति महीपालेत्य् (०३०-०५०)
उक्त्वा तं प्रययौ हरिः (०३०-०५०)
स चापि वरम् आसाद्य (०३०-०५१)
प्रसन्नाद् गरुडध्वजात् (०३०-०५१)
पालयाम् आस भूपालः (०३०-०५१)
सप्तद्वीपां वसुंधराम् (०३०-०५१)

तेनेष्टं विविधैर् यज्ञैः (०३०-०५२)
समाप्तवरदक्षिणैः (०३०-०५२)
जित्वारिवर्गम् अखिलं (०३०-०५२)
धर्मतः पालिताः प्रजाः (०३०-०५२)
अनन्तव्रतमाहात्म्याद् (०३०-०५३)
आसाद्य तनयं च तम् (०३०-०५३)
पित्रोः पुत्रोद्भवं दुःखं (०३०-०५३)
नासीत् स्वल्पम् अपि द्विज (०३०-०५३)
एवम् एतत् समाख्यातम् (०३०-०५४)
अनन्ताख्यं व्रतं तव (०३०-०५४)
यच् चीर्त्वा राजपत्नी सा (०३०-०५४)
कार्तवीर्यम् असूयत (०३०-०५४)
यश् चैतच् छृणुयाज् जन्म (०३०-०५५)
कार्तवीर्यस्य मानवः (०३०-०५५)
स्त्री वा दुःखम् अपत्योत्थं (०३०-०५५)
सप्त जन्मानि नाश्नुते (०३०-०५५)
रूपसंपत् समाख्याता (०३१-००१)
स्त्रीपुंसां जायते शुभा (०३१-००१)
समुपोष्य जगन्नाथं (०३१-००१)
नक्षत्रपुरुषं हरिम् (०३१-००१)
वासोऽतिशोभनं चारु- (०३१-००२)
वस्त्राद्याभरणोज्ज्वलम् (०३१-००२)
गृहं सर्वगुणोपेतम् (०३१-००२)
अशेषोपस्करान्वितम् (०३१-००२)
कर्मणा येन विप्रर्षे (०३१-००३)
तोषितो मधुसूदनः (०३१-००३)
ददाति भगवान् कर्म (०३१-००३)
तन् नो विस्तरतो वद (०३१-००३)
यन् मां पृच्छसि दाल्भ्य त्वं (०३१-००४)
गृहोपस्करभूषणम् (०३१-००४)
नराणां जायते येन (०३१-००४)
तत् सर्वं कथयामि ते (०३१-००४)
नन्दा भद्रा जया रिक्ता (०३१-००५)
पूर्णा च द्विजसत्तम (०३१-००५)
तिथयो वै समाख्याताः (०३१-००५)
प्रतिपत्क्रमसंज्ञया (०३१-००५)
पञ्चमी दशमी चैव (०३१-००६)
तथा पञ्चदशी तिथिः (०३१-००६)
पूर्णा एताः समाख्याताष् (०३१-००६)
तिथयो मुनिसत्तम (०३१-००६)
मृदा धातुविकारैर् वा (०३१-००७)
वर्णकैर् गोमयेन वा (०३१-००७)
विष्णोर् आयतने तासु (०३१-००७)
यः करोत्य् उपलेपनम् (०३१-००७)
प्रवातावातगुणवद् (०३१-००८)
वर्षास्व् अतिमनोरमम् (०३१-००८)
अनुलिप्तं शुभाकारं (०३१-००८)
सुगृहं लभते मुने (०३१-००८)
पूर्णं धान्यहिरण्याद्यैर् (०३१-००९)

मणिमुक्ताफलोज्ज्वलम् (०३१-००९)
प्रत्यासन्नजलाभोगं (०३१-००९)
गृहम् आप्नोति शोभनम् (०३१-००९)
साम्नतस्वजनानां यत् (०३१-०१०)
सर्वेषाम् उत्तमोत्तमम् (०३१-०१०)
तद् आप्नोति गृहं ब्रह्मन्न् (०३१-०१०)
अनुलेपनकृन् नरः (०३१-०१०)
येनानुलिप्तं तिष्ठन्ति (०३१-०११)
विष्ण्वायतनभूतले (०३१-०११)
ब्राह्मणक्षत्रियविशः (०३१-०११)
शूद्राः साध्व्यस् तथा स्त्रियः (०३१-०११)
तस्य पूण्यफलं दाल्भ्य (०३१-०११)
श्रूयतां यत् प्रजायते (०३१-०११)
अप्सरोगणसंकीर्णं (०३१-०१२)
मुक्ताहारगणोज्ज्वलम् (०३१-०१२)
श्रेष्ठं सर्वविमानानां (०३१-०१२)
स्वर्गे धिष्ण्यम् अवाप्नुते (०३१-०१२)
यावत्यस् तिथयो लिप्तं (०३१-०१३)
दिव्याब्दांस् तावतो द्विज (०३१-०१३)
तस्मिन् विमाने स नरः (०३१-०१३)
स्त्री वा तिष्ठति सत्तम (०३१-०१३)
सुगन्धगन्धसद्वस्त्र- (०३१-०१४)
सर्वभूषणभूषितः (०३१-०१४)
गन्धर्वाप्सरसां संघैः (०३१-०१४)
पूज्यमानः स तिष्ठति (०३१-०१४)
लिप्तं च यावतो हस्तान् (०३१-०१५)
विष्णोर् आयतनं द्विज (०३१-०१५)
तावद्योजनविस्तीर्ण- (०३१-०१५)
स्वर्गस्थानाधिपो हि सः (०३१-०१५)
पूज्यमानः सुरगणैः (०३१-०१६)
शीतोष्णादिविवर्जितः (०३१-०१६)
मनोज्ञगात्रो विप्रेन्द्रस् (०३१-०१६)
तिष्ठत्य् अस्ताघसंहतिः (०३१-०१६)
च्युतस् तस्माद् इहागम्य (०३१-०१७)
विशिष्टे जायते कुले (०३१-०१७)
ततो ऽस्य सद्गृहवरं (०३१-०१७)
मर्त्यलोके ऽभिजायते (०३१-०१७)
न तत्र तावद् दारिद्र्यं (०३१-०१८)
नोपसर्गा न वा कलिः (०३१-०१८)
न चापि मृतनिष्क्रान्तिर् (०३१-०१८)
यावज् जीवत्य् असौ द्विज (०३१-०१८)
विष्णुः समस्तभूतानि (०३१-०१९)
ससर्जैतानि यानि वै (०३१-०१९)
तेषां मध्ये जगद्धातुर् (०३१-०१९)
अतीवेष्टा वसुंधरा (०३१-०१९)
कृते संमार्जने तस्यास् (०३१-०२०)
तथैवोपरिलेपने (०३१-०२०)
प्रयाति परमं तोषं (०३१-०२०)
वैष्णवीयं मही यतः (०३१-०२०)

ब्रह्मन् येन विधानेन (०३१-०२१)
देवागारोपलेपलम् (०३१-०२१)
कर्तव्यं पुरुषैः सम्यक् (०३१-०२१)
स्त्रीभिर् वा तद् उदीरय (०३१-०२१)
रिक्तायास् तु तिथेर् मध्ये (०३१-०२२)
कुर्यात् संकल्पम् आत्मनः (०३१-०२२)
उपलेपनकृद् विप्रो (०३१-०२२)
विष्णोर् आयतने भुवि (०३१-०२२)
द्वितीये ऽह्नि ततो देवं (०३१-०२३)
प्रणम्य यतमानसः (०३१-०२३)
धरणीपितरं विष्णुम् (०३१-०२३)
इदं वाक्यम् उदीरयेत् (०३१-०२३)
त्वं सर्वभूतप्रभवो जगत्पते (०३१-०२४)
त्वय्य् एतद् ईशेश जगत् प्रतिष्ठितम् (०३१-०२४)
त्वम् एव भूतानि यतस् ततो ऽहं (०३१-०२४)
त्वाम् पूजयाम्य् अद्य महीस्वरूपम् (०३१-०२४)
त्वं मही जगतां नाथ (०३१-०२५)
सर्वनाथ नमो ऽस्तु ते (०३१-०२५)
शुश्रूषितः प्रसीदेश (०३१-०२५)
भुवो लेपनकर्मणा (०३१-०२५)
इत्य् उच्चार्य क्षितौ क्षिस्वा (०३१-०२६)
प्रथमं धारनीतले (०३१-०२६)
पुष्पाणि वा द्विजश्रेष्ठ (०३१-०२६)
यः करोत्य् अनुलेपनम् (०३१-०२६)
न तस्य जायते भङ्गो (०३१-०२६)
गार्हस्थ्यस्य कदाचन (०३१-०२६)
या च नारी करोत्य् एवं (०३१-०२७)
यथावद् अनुलेपनम् (०३१-०२७)
नाप्नोति सा च वैधव्यं (०३१-०२७)
गृहभङ्गं कदाचन (०३१-०२७)
कृत्वोपलेपनं भूयः (०३१-०२८)
प्रणिपत्य जनार्दनम् (०३१-०२८)
स्नातो विष्णुं समभ्यचर्य (०३१-०२८)
इदं वाक्यम् उदीरयेत् (०३१-०२८)
प्रसीद भूधरानन्त (०३१-०२९)
मया यद् उपलेपनम् (०३१-०२९)
कृतं तेन समस्तं मे (०३१-०२९)
नाशम् अभ्येतु पातकम् (०३१-०२९)
एवं संपूज्य भुञ्जीयाद् (०३१-०३०)
अपराह्ने द्विजोत्तम (०३१-०३०)
स्वनुलिप्ते महाभागे (०३१-०३०)
भुक्त्वा लिम्पेच् च तत् पुनः (०३१-०३०)
पक्षे पक्षे त्रिरात्रं तु (०३१-०३१)
यः करोत्य् उपलेपनम् (०३१-०३१)
सर्वपापविनिर्मुक्तः (०३१-०३१)
स्वर्गं गच्छत्य् असंशयम् (०३१-०३१)
तत्क्षयात् स्वर्गलोके तु (०३१-०३२)
जातो गृहवरं यथा (०३१-०३२)
समाप्नोति यथाख्यातं (०३१-०३२)

तत् सर्वं तव सत्तम (०३१-०३२)
सर्वाभरणसंपूर्णं (०३१-०३३)
सर्वोपस्करधान्यवत् (०३१-०३३)
गोमहिष्यादिसंभोगं (०३१-०३३)
गृहम् आप्नोति मानवः (०३१-०३३)
तस्माद् अभीप्सता सम्यग् (०३१-०३४)
गार्हस्थ्यम् अविखण्डितम् (०३१-०३४)
विष्णोर् आयतने कार्यं (०३१-०३४)
सर्वदैवोपलेपनम् (०३१-०३४)
सप्तद्वीपवतीं कृत्स्नां (०३१-*(३३))
यथेन्द्रस् त्रिदिवं तथा (०३१-*(३३))
अल्पोपलेपनाद् यस्य (०३१-०३५)
मान्धाता सकलां महीम् (०३१-०३५)
अवाप विष्ण्वायतनं (०३१-०३५)
नोपलिम्पेत को हि तत् (०३१-०३५)
दीपं प्रयच्छति नरो (०३२-००१)
विष्णोर् आयतने हि यः (०३२-००१)
सदक्षिणस्य यज्ञस्य (०३२-००१)
फलं प्राप्नोत्य् असंशयम् (०३२-००१)
कार्त्तिके तु विशेषेण (०३२-००२)
कौमुदे मासि दीपकम् (०३२-००२)
दत्त्वा यत् फलम् आप्नोति (०३२-००२)
दाल्भ्य तत् केन लभ्यते (०३२-००२)
दाल्भ्यान्यद् अपि वक्ष्यामि (०३२-००३)
पुरावृत्तम् इदं शृणु (०३२-००३)
विदर्भराजतनया (०३२-००३)
ललिता यद् उवाच ह (०३२-००३)
विदर्भराट् चित्ररथो (०३२-००४)
बभूवास्त्रविशारदः (०३२-००४)
तस्य पुत्रशतं राज्ञो (०३२-००४)
जज्ञे पञ्चदशोत्तरम् (०३२-००४)
एकैव कन्या दाल्भ्यासील् (०३२-००५)
ललिता नामनामतः (०३२-००५)
सर्वलक्षणसंपूर्णा (०३२-००५)
भ्रातॄणां पितुर् एव च (०३२-००५)
समस्तभृत्यवर्गस्य (०३२-००६)
मातॄणां स्वजनस्य च (०३२-००६)
तथैव पौरवर्गस्य (०३२-००६)
यश् चान्यो ददृशे शुभाम् (०३२-००६)
तस्य तस्यातिचार्वङ्गी (०३२-००६)
बभूवेष्टा द्विजोत्तम (०३२-००६)
तां ददौ काशिराजाय (०३२-००७)
स पिता चारुवर्मने (०३२-००७)
उपयेमे च तां सुभ्रूं (०३२-००७)
चारुवर्मा महीपतिः (०३२-००७)
शतान्य् अन्यानि भार्याणां (०३२-००८)
त्रीण्य् आसंश् चारुवर्मणः (०३२-००८)
तासां मध्ये ऽग्रमहिषी (०३२-००८)
ललिता तस्य चाभवत् (०३२-००८)

सा च नित्यं जगद्धातुर् (०३२-००९)
देवदेवस्य चक्रिणः (०३२-००९)
दीपवर्तिपरा तद्वत् (०३२-००९)
तैलस्याहरणोद्यता (०३२-००९)
विष्णोर् आयतने तस्याः (०३२-०१०)
सहस्रं द्विजसत्तम (०३२-०१०)
दीपानां वै प्रजज्वाल (०३२-०१०)
दिवारात्रम् अतन्द्रितम् (०३२-०१०)
तस्या द्युतिपराभूतास् (०३२-०११)
तस्या लावण्यनिर्जिताः (०३२-०११)
सर्वाः सपत्न्यो ललितां (०३२-०११)
पप्रच्छुर् इदम् आदितः (०३२-०११)
ललिते वद भद्रं ते (०३२-०१२)
भद्रं ते ललिते वद (०३२-०१२)
कौतूहलपराः सर्वा (०३२-०१२)
यत् पृच्छामस् तद् उच्यताम् (०३२-०१२)
विषये सति वक्तव्यं (०३२-०१३)
यन् मया तद् इहोच्यताम् (०३२-०१३)
नाहं मत्सरिणी भद्रा (०३२-०१३)
न च रागादिदूषिता (०३२-०१३)
भवत्यो मम सर्वासां (०३२-०१४)
भवतीनाम् अहं तथा (०३२-०१४)
अपृथग्भर्तृसामन्या (०३२-०१४)
देवलोकाभिकामुकाः (०३२-०१४)
पूर्वं यूयम् अहं चैव (०३२-*(३४))
भवतीनां सधर्मिणी (०३२-*(३४))
न तथा पुष्पधूपेषु (०३२-०१५)
न तथा द्विजपूजने (०३२-०१५)
प्रयत्नं तव पश्यामो (०३२-०१५)
विष्णोर् आयतने शुभे (०३२-०१५)
यथाहनि तथा रात्रौ (०३२-०१६)
यथा रात्रौ तथाहनि (०३२-०१६)
तव दीपप्रदानाय (०३२-०१६)
यथा सुभ्रु सदोद्यमः (०३२-०१६)
तद् एतत् कथयास्माकं (०३२-०१७)
ललिते कौतुकं परम् (०३२-०१७)
मन्यामो दीपदानस्य (०३२-०१७)
भवत्या विदितं फलम् (०३२-०१७)
एवम् उक्ता ततस् ताभिर् (०३२-०१८)
ललिता ललितं वचः (०३२-०१८)
व्याजहार सपत्नीस् ता (०३२-०१८)
न किंचिद् अपि भामिनी (०३२-०१८)
पुनः पुनश् च सा ताभिर् (०३२-०१९)
बहुषो दाल्भ्य चोदिता (०३२-०१९)
दाक्षिण्यसारा ललिता (०३२-०१९)
कथायाम् आस भामिनी (०३२-०१९)
कौतुकं भवतीनां चेद् (०३२-०२०)
अतीवाल्पे ऽपि वस्तुनि (०३२-०२०)
तद् एषा कथयाम्य् एतद् (०३२-०२०)

यद् वृत्तं मम शोभनाः (०३२-०२०)
सौवीरराजस्य पुरा (०३२-०२१)
मैत्रेयो ऽभूत् पुरोहितः (०३२-०२१)
तेन चायतनं विष्णोः (०३२-०२१)
कारितं देविकातटे (०३२-०२१)
अहन्य् अहनि शुश्रूषां (०३२-०२२)
पुष्पधूपोपलेपनैः (०३२-०२२)
दीपदानादिभिश् चैव (०३२-०२२)
चक्रे तत्र स वै द्विजः (०३२-०२२)
कार्त्तिके दीपको ब्रह्मन् (०३२-०२३)
प्रदत्तस् तेन वै तदा (०३२-०२३)
आसीन् निर्वाणभूयिष्ठो (०३२-०२३)
देवार्चापुरतो निशि (०३२-०२३)
देवतायतने चासं (०३२-०२४)
तत्राहम् अपि मूषिका (०३२-०२४)
प्रदीपवर्तिहरणे (०३२-०२४)
कृतबुद्धिर् वराननाः (०३२-०२४)
गृहीता च मया वर्तिर् (०३२-०२५)
वृषदंशो ननाद च (०३२-०२५)
नष्टा चाहं तदा तस्य (०३२-०२५)
मार्जारस्य भयातुरा (०३२-०२५)
वर्तिप्रान्तेन नश्यन्त्या (०३२-०२६)
स दीपः प्रेरितो मया (०३२-०२६)
जज्वाल पूर्ववद् दीप्त्या (०३२-०२६)
तस्मिन्न् आयतने पुनः (०३२-०२६)
मृताहं च ततो जाता (०३२-०२७)
वैदर्भी राजकन्यका (०३२-०२७)
जातिस्मरा कान्तिमती (०३२-०२७)
भवतीनां समा गुणैः (०३२-०२७)
एष प्रभावो दीपस्य (०३२-०२८)
कार्त्तिके मासि शोभनाः (०३२-०२८)
दत्तस्य विष्ण्वायतने (०३२-०२८)
यस्येयं व्युष्टिर् उत्तमा (०३२-०२८)
असंकल्पितम् अप्य् अस्य (०३२-०२९)
प्रेरणं यत् कृतं मया (०३२-०२९)
विष्ण्वायतनदीपस्य (०३२-०२९)
यस्येदं भुज्यते फलम् (०३२-०२९)
लोभाभिभूता हर्तुं तं (०३२-०३०)
प्रदीपम् अहम् आगता (०३२-०३०)
अवशेनैव तद्वर्त्या (०३२-०३०)
प्रेरणं तत्र मे कृतम् (०३२-०३०)
ततो जातिस्मृतिर् जन्म (०३२-०३१)
मानुष्यं शोभनं वपुः (०३२-०३१)
वश्यः पतिः पृथिवीशः (०३२-०३१)
किं पुनर् दीपदायिनाम् (०३२-०३१)
एतस्मात् कारणाद् दीपान् (०३२-०३२)
अहम् एतान् अहर्निशम् (०३२-०३२)
प्रयच्छामि हरेर् धाम्नि (०३२-०३२)
ज्ञातम् अस्य हि यत् फलम् (०३२-०३२)

भवतीनाम् इदं सत्यं (०३२-०३३)
मयोक्तं केशवालये (०३२-०३३)
मूषिकत्वाद् अहं येन (०३२-०३३)
कर्मणा सिद्धिम् आगता (०३२-०३३)
एष प्रभावो दीपस्य (०३२-०३४)
कार्तिके मासि सत्तम (०३२-०३४)
विष्ण्वायतनदत्तस्य (०३२-०३४)
जगाद ललिता यथा (०३२-०३४)
दिने दिने जगन्नाथ (०३२-०३५)
केशवेति समाहितः (०३२-०३५)
ददाति कार्त्तिके यस् तु (०३२-०३५)
विष्ण्वायतनदीपकम् (०३२-०३५)
जातिस्मरत्वं प्रज्ञां च (०३२-०३६)
प्राकाश्यं सर्ववस्तुषु (०३२-०३६)
अव्याहतेन्द्रियत्वं च (०३२-०३६)
संप्राप्नोति न संशयः (०३२-०३६)
शेषकाले च चक्षुष्मान् (०३२-०३७)
मेधावी दीपदो नरः (०३२-०३७)
जायते नरकं वापि (०३२-०३७)
तमःसंज्ञं न पश्यति (०३२-०३७)
एकादशीं द्वादशीं वा (०३२-०३८)
प्रतिपक्षं च यो नरः (०३२-०३८)
दीपं ददाति कृष्णाय (०३२-०३८)
तस्यापि शृणु यत् फलम् (०३२-०३८)
सुवर्णमणिमुक्ताढ्यं (०३२-०३९)
मनोज्ञम् अतिशोभनम् (०३२-०३९)
दीपमालाकुलं दिव्यं (०३२-०३९)
विमानं सो ऽधिरोहति (०३२-०३९)
तस्माद् आयतने विष्णोर् (०३२-०४०)
दद्याद् दीपं द्विजोत्तम (०३२-०४०)
तांश् च दत्तान् न हिंसेत (०३२-०४०)
न च तैलवियोजितान् (०३२-०४०)
कुर्वीत दीपहर्ता तु (०३२-०४०)
मूको ऽन्धो जायते यतः (०३२-०४०)
जायते नरकं चापि (०३२-*(३५))
तपःसंज्ञं स पश्यति (०३२-*(३५))
अन्धे तामसि दुष्पारे (०३२-०४१)
नरके पतितान् किल (०३२-०४१)
विक्रोशमानान् क्षुत्क्षामात्र् (०३२-०४१)
जगाद यमकिंकरः (०३२-०४१)
विलापैर् अलम् अत्रापि (०३२-०४२)
किं वो विलपिते फलम् (०३२-०४२)
यदा प्रमादिभिः पूर्वम् (०३२-०४२)
आत्मात्यन्तम् उपेक्षितः (०३२-०४२)
पूर्वम् आलोचितं नैतत् (०३२-०४३)
किम् अप्य् अन्ते भविष्यति (०३२-०४३)
इदानीं यातनाभोगः (०३२-०४३)
किं विलापः करिष्यति (०३२-०४३)
देहो दिनानि स्वल्पानि (०३२-०४४)

विषयाश् चातिदुर्धराः (०३२-०४४)
एतत् को न विजानाति (०३२-०४४)
येन यूयं प्रमादिनः (०३२-०४४)
जन्तुजन्मसहस्रेभ्य (०३२-०४५)
एतस्मिन् मानुष्यो यदि (०३२-०४५)
तत्राप्य् अतिविमूढत्वात् (०३२-०४५)
किं भोगान् अभिधावति (०३२-०४५)
विरुद्धविषयास्वाद- (०३२-०४६)
मुदितैर् हसितं च यत् (०३२-०४६)
भवद्भिर् आगतं दुःखं (०३२-०४६)
विलापपरिणामिकम् (०३२-०४६)
अद्यकालिकया बुद्ध्या (०३२-०४७)
यद् आगामि न चिन्तितम् (०३२-०४७)
परितापाय तज् जातं (०३२-०४७)
दुःखं कर्मविपाकजम् (०३२-०४७)
स्वल्पम् आयुर् मनुष्याणां (०३२-०४८)
तदन्ते परतन्त्रता (०३२-०४८)
भुज्यते च कृतं पूर्वम् (०३२-०४८)
एतत् किं वो न चिन्तितम् (०३२-०४८)
यद् अभूत् परदारेषु (०३२-०४९)
प्रीतये ऽङ्गकुचादिकम् (०३२-०४९)
यातनादुःखरूपाय (०३२-०४९)
नरके च तद् आगतम् (०३२-०४९)
परदारमनोहारि (०३२-०५०)
यद् भवद्भिर् अगीयत (०३२-०५०)
हा मात इत्यादि रुतं (०३२-०५०)
तद् इदानीं विलप्यते (०३२-०५०)
संदिग्धपरलोकानाम् (०३२-०५१)
ऐहिके निहतात्मनाम् (०३२-०५१)
मृतानां स्वकृतं कर्म (०३२-०५१)
पश्चात्तापाय केवलम् (०३२-०५१)
मुहूर्तार्धसुखास्वाद- (०३२-०५२)
लुब्धानाम् अकृतात्मनाम् (०३२-०५२)
अनेकवर्षकोटिषु (०३२-०५२)
दुःखदं कर्म जायते (०३२-०५२)
हा मातस् तात तातेति (०३२-०५३)
भवद्भिः किं विलप्यते (०३२-०५३)
शुभाशुभं निजं कर्म (०३२-०५३)
तद् अद्य ह्य् अत्र भुज्यते (०३२-०५३)
पुत्रदारगृहक्षेत्र- (०३२-०५४)
हिताय सततोद्यताः (०३२-०५४)
न कुर्वन्ति कथं मूढाः (०३२-०५४)
स्वल्पम् अप्य् आत्मनो हितम् (०३२-०५४)
वञ्चितो ऽसौ मया लब्धम् (०३२-०५५)
इदम् अस्माद् उपायतः (०३२-०५५)
न वेत्ति कश्चिद् आत्मार्थं (०३२-०५६)
वेत्ति प्रक्रमतो नरः (०३२-०५६)
न वेत्ति सूर्यचन्द्रादीन् (०३२-०५७)
कालम् आत्मानम् एव च (०३२-०५७)

साक्षिभूतान् अशेषस्य (०३२-०५७)
शुभस्येहाशुभस्य च (०३२-०५७)
जन्मान्य् अन्यानि जायन्ते (०३२-०५८)
पुत्रदारादिदेहिनाम् (०३२-०५८)
तदर्थं यत् कृतं कर्म (०३२-०५८)
तस्य जन्मशतानि तत् (०३२-०५८)
अहो मोहस्य माहात्म्यं (०३२-०५९)
ममत्वं नरकेष्व् अपि (०३२-०५९)
क्रन्दते मातरं तातं (०३२-०५९)
पीड्यमानो ऽपि यत् स्वयम् (०३२-०५९)
एवम् आकृष्टचित्तानां (०३२-०६०)
विषयास्वादतर्षुलैः (०३२-०६०)
नृणां न जायते बुद्धिः (०३२-०६०)
परमार्थावलोकिनी (०३२-०६०)
तथा च विषयासक्तिं (०३२-०६०)
करोत्य् अविरतं मनः (०३२-०६०)
को ऽतिभारो हरेर् नाम्नि (०३२-०६१)
जिह्वायाः परिकीर्तने (०३२-०६१)
वर्तितैले ऽल्पमौल्ये ऽपि (०३२-०६२)
यद् अग्निर् लभ्यते मुधा (०३२-०६२)
अतो ऽधिकतरो लोभः (०३२-०६२)
को वश् चित्ते ऽभवत् तदा (०३२-०६२)
येनेयं तेषु हस्तेषु (०३२-०६३)
स्वातन्त्र्ये सति दीपकः (०३२-०६३)
महाफलो विष्णुगृहे (०३२-०६३)
न दत्तो नरकापहः (०३२-०६३)
न वो विलपिते किंचिद् (०३२-०६४)
इदानीं दृश्यते फलम् (०३२-०६४)
अस्वातन्त्र्ये विलपतां (०३२-०६४)
स्वातन्त्र्ये ऽतिप्रमादिनाम् (०३२-०६४)
अवश्यंपातिनः प्राणा (०३२-०६५)
भोक्ता जीवो ह्य् अहर्निशम् (०३२-०६५)
दत्तं च लभते भोक्ता (०३२-०६५)
समये विषयान् इति (०३२-०६५)
एतत् स्वातन्त्र्यवद्भिर् वो (०३२-०६६)
युक्तम् आसीत् परीक्षितुम् (०३२-०६६)
इदानीं किं विलापेन (०३२-०६६)
सहध्वं यद् उपागतम् (०३२-०६६)
यद्य् एतद् अनभीष्टं वो (०३२-०६७)
यद् दुःखं समुपस्थितम् (०३२-०६७)
तद् भूयो ऽपि मतिः पापे (०३२-०६७)
न कर्तव्या कथंचन (०३२-०६७)
कृते ऽपि पापके कर्मण्य् (०३२-०६८)
अज्ञानाद् अघनाशनम् (०३२-०६८)
कर्तव्यम् अव्यवस्थितं (०३२-०६८)
स्मरद्भिर् मधुसूदनम् (०३२-०६८)
नारकास् तद्वचः श्रुत्वा (०३२-०६९)
ताम् ऊचुर् अतिदुःखिताः (०३२-०६९)
क्षुत्क्षामकण्ठास् तृषया (०३२-०६९)

परिस्फुटिततालुकाः (०३२-०६९)
भो भो साधो कृतं कर्म (०३२-०७०)
यद् अस्माभिस् तद् उच्यताम् (०३२-०७०)
नरकस्थैर् विपाको ऽयं (०३२-०७०)
भुज्यते यस्य दारुणः (०३२-०७०)
युष्माभिर् यौवनोन्माद- (०३२-०७१)
मुदितैर् अविवेकिभिः (०३२-०७१)
द्यूतोद्योताय गोविन्द- (०३२-०७१)
गृहाद् दीपः पुरा हृतः (०३२-०७१)
तेनास्मिन् नरके घोरे (०३२-०७२)
क्षुत्तृष्णापरिपीडिताः (०३२-०७२)
भवन्तः पतितास् तीव्र- (०३२-०७२)
शीतवातविदारिताः (०३२-०७२)
एतत् ते दीपदानस्य (०३२-०७३)
प्रदीपहरणस्य च (०३२-०७३)
पुण्यं पापं च कथितं (०३२-०७३)
केशवायतने द्विज (०३२-०७३)
सर्वत्रैव हि दीपस्य (०३२-०७४)
प्रदानं द्विज शस्यते (०३२-०७४)
विशेषेण जगद्धातुः (०३२-०७४)
केशवस्य निवेशने (०३२-०७४)
ये ऽन्धा मूका निःश्रुता निर्विवेका (०३२-०७५)
हीनास् तैस् तैः साधनैर् विप्रवर्य (०३२-०७५)
तैस् तैर् दीपाः साधुलोकप्रदत्ता (०३२-०७५)
देवागाराद् अन्यतो विप्रणीताः (०३२-०७५)
आह्लादं चक्षुषः प्रीतिं (०३३-००१)
करोति मनसस् तथा (०३३-००१)
केषांचिद् दर्शनं ब्रह्मन् (०३३-००१)
मनुष्याणाम् अहर्निशम् (०३३-००१)
उद्वेजनीया भूतानाम् (०३३-००२)
अनिमित्तं तथापरे (०३३-००२)
वदन्ते विप्रियं नैव (०३३-००२)
प्रीतिं कुर्वन्ति मानवाः (०३३-००२)
एतद् यस्य फलं ब्रह्मन् (०३३-००३)
दानस्य तपसो ऽथवा (०३३-००३)
उपवासस्य वा तन् मे (०३३-००३)
यथावद् वक्तुम् अर्हसि (०३३-००३)
अप्रीतिदस्य विप्रर्षे (०३३-००४)
विपाको यस्य कर्मणः (०३३-००४)
मनुष्याणाम् अशेषं वै (०३३-००४)
तन् ममाचक्ष्व सत्तम (०३३-००४)
देवब्राह्मणवेदेषु (०३३-००५)
यज्ञेषु च नराधमैः (०३३-००५)
यैर् जुगुप्सा कृता दाल्भ्य (०३३-००५)
मनसाप्य् अतिमानिभिः (०३३-००५)
तेषां संदर्शनात् सर्वो (०३३-००६)
न सुखं विन्दते द्विज (०३३-००६)
वदन्त्य् अप्य् अनुकूलानि (०३३-००६)
न तेषु प्रीयते जनः (०३३-००६)

स्पर्शाद् उद्विजते लोकः (०३३-००७)
कटु तेषां च दर्शनम् (०३३-००७)
संभाषणं च निन्दा वै (०३३-००७)
कृता वेदद्विजातिके (०३३-००७)
तस्मान् न निन्दां वेदादौ (०३३-००८)
न जुगुप्सां च पण्डितः (०३३-००८)
यज्ञादौ च नरः कुर्याद् (०३३-००८)
य इच्छेच् छ्रेय आत्मनः (०३३-००८)
यैस् तु प्रीतिः समस्तेषु (०३३-००९)
वेददेवद्विजातिषु (०३३-००९)
यज्ञादिके चैव कृता (०३३-००९)
दाल्भ्य तद्दर्शनं नृणाम् (०३३-००९)
आह्लादश् चक्षुषः प्रीतिर् (०३३-०१०)
मनसो निर्वृतिः परा (०३३-०१०)
संभाषणे तथाह्लादः (०३३-०१०)
सर्वलोकस्य जायते (०३३-०१०)
स्तुताः प्रशस्ताः संप्रीत्या (०३३-०११)
पूजिता बहुमानतः (०३३-०११)
श्रेयः परं प्रयच्छन्ति (०३३-०११)
देवा वेदा मखा द्विजाः (०३३-०११)
लोकद्वये ऽपि चाप्रीतिं (०३३-०१२)
पशुपुत्रधनक्षयम् (०३३-०१२)
कुर्वन्ति द्विजशार्दूल (०३३-०१२)
एत एव विनिन्दिताः (०३३-०१२)
एत एव समाख्याताः (०३३-०१३)
स्तवादिग्रहणे गुणाह् (०३३-०१३)
निन्दायाः श्रवणे दोष (०३३-०१३)
एतेषाम् एवम् एव हि (०३३-०१३)
तस्मात् स्तव्याः प्रशंस्याश् च (०३३-०१४)
देवा वेदा द्विजातयः (०३३-०१४)
यज्ञाश् च मनसाप्य् एषां (०३३-०१४)
न निन्दाम् आचरेद् बुधः (०३३-०१४)
अनायासेन भगवन् (०३४-००१)
दानेनान्येन केनचित् (०३४-००१)
पापं प्रशमम् आयाति (०३४-००१)
येन तद् वक्तुम् अर्हसि (०३४-००१)
शृणु दाल्भ्य महापुण्यां (०३४-००२)
द्वादशीं पापनाशनीम् (०३४-००२)
याम् उपोष्य परं पुण्यं (०३४-००२)
प्राप्नुते श्रद्धयान्वितः (०३४-००२)
माघमासे तु संप्राप्त (०३४-००३)
आषाढार्क्षं भवेद् यदि (०३४-००३)
मूलं वा कृष्णपक्षस्य (०३४-००३)
द्वादश्यां नियतस् तदा (०३४-००३)
गृह्णीयात् पुण्यफलदं (०३४-००४)
विधानं तस्य मे शृणु (०३४-००४)
देवदेवं समभ्यर्च्य (०३४-००४)
सुस्नातः प्रयतः शुचिः (०३४-००४)
कृष्णनाम्ना च संस्तूय (०३४-००५)

एकादश्यां महामते (०३४-००५)
उपोषितो द्वितीये ऽह्नि (०३४-००५)
पुनः संपूज्य केशवम् (०३४-००५)
संस्तूय नाम्ना च ततः (०३४-००६)
कृष्णाख्येन पुनः पुनः (०३४-००६)
दद्यात् तिलांस् तु विप्राय (०३४-००६)
कृष्णो मे प्रीयताम् इति (०३४-००६)
स्नानप्राशनयोः शस्तास् (०३४-००६)
तथा कृष्णतिला मुने (०३४-००६)
तिलप्ररोहे जायन्ते (०३४-००७)
यावत्संख्यास् तिला द्विज (०३४-००७)
तावद्वर्षसहस्राणि (०३४-००७)
स्वर्गलोके महीयते (०३४-००७)
जातश् चेहाप्य् अरोगो ऽसौ (०३४-००८)
नरो जन्मनि जन्मनि (०३४-००८)
नान्धो न बधिरश् चेह (०३४-००८)
न कुष्ठी न जुगुप्सितः (०३४-००८)
भवत्य् एताम् उषित्वा तु (०३४-००८)
तिलाख्यां द्वादशीं नरः (०३४-००८)
विष्णोः प्रीणनम् अत्रोक्तं (०३४-००९)
समाप्ते वर्षपारणे (०३४-००९)
पूजां च कुर्याद् विप्राय (०३४-००९)
भूयो दद्यात् तथा तिलान् (०३४-००९)
अनेन दाल्भ्य विधिना (०३४-०१०)
तिलदानाद् असंशयम् (०३४-०१०)
मुच्यते पातकैः सर्वैर् (०३४-०१०)
निरायासेन मानवः (०३४-०१०)
उद्भूतपुलकः सर्वान् (०३४-*(३६))
निरायासेन मानवः (०३४-*(३६))
दानविधिस् तथा श्रद्धा (०३४-०११)
सर्वपातकशान्तये (०३४-०११)
नार्थः प्रभूतो नायासः (०३४-०११)
शारीरो मुनिसत्तम (०३४-०११)
अनन्तस्याप्रमेयस्य (०३५-००१)
व्यापिनः परमात्मनः (०३५-००१)
नाम्नां नक्षत्रभेदेन (०३५-००१)
तिथिभेदेन वा द्विज (०३५-००१)
दानभेदेन चाख्यातो (०३५-००२)
विभिन्नफलदस् त्वया (०३५-००२)
विशेषः क्षेत्रभेदेन (०३५-००२)
कथ्यतां यदि विद्यते (०३५-००२)
यथ र्क्षतिथिभेदेन (०३५-००३)
तेषाम् एव पुनः पुनः (०३५-००३)
विशेषः कथितो नाम्नां (०३५-००३)
विशेषफलदायकः (०३५-००३)
तथा क्षेत्रविशेषेण (०३५-००३)
भेदं नामकृतं वद (०३५-००३)
शृणु दाल्भ्य यथाख्यातम् (०३५-००४)
अर्जुनाय महात्मने (०३५-००४)

प्रणिपातप्रसन्नेन (०३५-००४)
विष्णुना प्रभविष्णुना (०३५-००४)
कृते भारावतरणे (०३५-००५)
निवृत्ते भारते रणे (०३५-००५)
आगम्य शिबिरं विष्णू (०३५-००५)
रथस्थः प्राह फाल्गुनम् (०३५-००५)
इषुधीगाण्डिवं चैव (०३५-००६)
समादाय त्वरान्वितः (०३५-००६)
अवतीर्य रथाद् वीर (०३५-००६)
दूरे तिष्टःअ धनंजय (०३५-००६)
अवरोक्ष्याम्य् अहं पश्चाद् (०३५-००७)
अवतीर्णे ततस् त्वयि (०३५-००७)
एतत् कुरु महाबाहो (०३५-००७)
मा विलम्बस्व फाल्गुन (०३५-००७)
एवम् उक्तस् तथा चक्रे (०३५-००८)
वाक्यं पार्थो गदाधृतः (०३५-००८)
अवारोहत् ततः पश्चात् (०३५-००८)
स्वयम् एव जनार्दनः (०३५-००८)
अवतीर्णे जगन्नाथे (०३५-००९)
स्वसमुत्थेन वह्निना (०३५-००९)
जज्वाल स रथः सद्यो (०३५-००९)
भस्मीभूतश् च तत्क्षणात् (०३५-००९)
सोपस्करपताको ऽथ (०३५-००९)
सध्वजः सह वाजिभिः (०३५-००९)
सच्छत्त्रो वह्निना सद्यो (०३५-०१०)
रथो भस्मलवीकृतः (०३५-०१०)
वह्निना च यथा काष्ठं (०३५-०१०)
सद्यो भस्मलवीकृतम् (०३५-०१०)
तद् अद्भुतं महद् दृष्ट्वा (०३५-०११)
पार्थः पप्रच्छ केशवम् (०३५-०११)
हृष्टरोमा द्विजश्रेष्ठ (०३५-०११)
भयविस्मयगद्गदः (०३५-०११)
आश्चर्यं पुरुषव्याघ्र (०३५-०१२)
किम् एतन् मधुसूदन (०३५-०१२)
विनाग्निना रथो ऽयं मे (०३५-०१२)
दग्धस् तृणचयो यथा (०३५-०१२)
भीष्मद्रोणकृपादीनां (०३५-०१३)
कर्णादीनां च फाल्गुन (०३५-०१३)
दग्धो ऽस्त्रैर् विविधैर् एष (०३५-०१३)
पूर्वम् एव रथस् तव (०३५-०१३)
मदधिष्ठितत्वात् कौन्तेय (०३५-०१४)
न शीर्णो ऽयं तदाभवत् (०३५-०१४)
प्रत्यहन् निशि चक्रेण (०३५-०१४)
मया न्यस्तेन रक्षितः (०३५-०१४)
सो ऽयं दग्धो महाबाहो (०३५-०१५)
त्वय्य् अद्य कृतकर्मणि (०३५-०१५)
मयावतारिते चक्रे (०३५-०१५)
मा पार्थ कुरु विस्मयम् (०३५-०१५)
कं भवन्तम् अहं विद्याम् (०३५-०१६)

अतिमानुषचेष्टितम् (०३५-०१६)
कर्मणात्यद्भुतेनाग्निर् (०३५-०१६)
धूमेनैवेह सूचितः (०३५-०१६)
पूर्वम् एव यथाख्यातं (०३५-०१७)
रणारम्भे तवार्जुन (०३५-०१७)
कालो ऽस्मि लोकनाशाय (०३५-०१७)
प्रवृत्तो ऽहं यथाधुना (०३५-०१७)
तन् मया साधितं कार्यं (०३५-०१८)
त्रिदशानां तथा भुवः (०३५-०१८)
भारावतरणार्थाय (०३५-०१८)
मम जन्म महीतले (०३५-०१८)
एवम् उक्तो ऽर्जुनः सम्यक् (०३५-०१९)
प्रणिपत्य जनार्दनम् (०३५-०१९)
तुष्टाव वाग्भिर् इष्टाभिर् (०३५-०१९)
उद्भूतपुलकस् ततः (०३५-०१९)
नमो ऽस्तु ते चक्रधरोग्ररूप (०३५-०२०)
नमो ऽस्तु ते शार्ङ्गधरारुणाक्ष (०३५-०२०)
नमो ऽस्तु ते ऽभ्युद्यतखड्ग रौद्र (०३५-०२०)
नमो ऽस्तु विभ्रान्तगदान्तकारिन् (०३५-०२०)
भयेन सन्नो ऽस्मि सवेपथेन (०३५-०२१)
नाङ्गानि मे देव वशं प्रयान्ति (०३५-०२१)
वाचः समुच्चारयतः स्खलन्ति (०३५-०२१)
केशा हृषीकेश समुच्छ्वसन्ति (०३५-०२१)
कालो भवान् कालकरालकर्मा (०३५-०२२)
येनैतद् एवं क्षयम् अक्षयात्मन् (०३५-०२२)
क्षत्रं समुद्भूतरुषा समस्तम् (०३५-०२२)
नीतं भुवो भारविरेचनाय (०३५-०२२)
प्रसीद कर्तर् जय लोकनाथ (०३५-०२३)
प्रसीद सर्वस्य च पालनाय (०३५-०२३)
स्थितौ समस्तस्य च कालरूप (०३५-०२३)
कृतोद्यमेशान जयाव्ययात्मन् (०३५-०२३)
न मे दृग् एषा तव रूपम् एतद् (०३५-०२४)
द्रष्टुं समर्था क्षुभितो ऽस्मि चान्तः (०३५-०२४)
पूर्वस्वभावस्थितविग्रहो ऽपि (०३५-०२४)
संलक्ष्यसे ऽत्यन्तम् असौम्यरूप (०३५-०२४)
स्मरामि रूपं तव विश्वरूपं (०३५-०२५)
यद् दर्शितं पूर्वम् अभून् ममैव (०३५-०२५)
यस्मिन् मया विश्वम् अशेषम् आसीद् (०३५-०२५)
दृष्टं सयक्षोरगदेवदैत्यम् (०३५-०२५)
सा मे स्मृतिर् दर्शनभाषनादि- (०३५-०२६)
प्रकुर्वतो नाथ गता प्रणाशम् (०३५-०२६)
कालो ऽहम् अस्मीत्य् उदिते त्वया तु (०३५-०२६)
समागतेयं पुनर् अप्य् अनन्त (०३५-०२६)
कर्ता भवान् कारणम् अप्य् अशेषम् (०३५-०२७)
कार्यं च निष्कारण कर्तृरूप (०३५-०२७)
आदौ स्थितौ संहरणे च देव (०३५-०२७)
विश्वस्य विश्वं स्वयम् एव च त्वम् (०३५-०२७)
ब्रह्मा भवान् विश्वसृग् आदिकाले (०३५-०२८)
विश्वस्य रूपो ऽसि तथा विसृष्टौ (०३५-०२८)

विष्णुः स्थितौ पालनबद्धकक्षो (०३५-०२८)
रुद्रो भवान् संहरणे प्रजानाम् (०३५-०२८)
एभिस् त्रिभिर् नाथ विभूतिभेदैर् (०३५-०२९)
यश् चिन्त्यते कारणम् आत्मनो ऽपि (०३५-०२९)
वेदान्तवेदोदितम् अस्ति विष्णोः (०३५-०२९)
पदं ध्रुवं तत् परमं त्वम् एव (०३५-०२९)
यन् निर्गुणं सर्वविकल्पहीनम् (०३५-०३०)
अनन्तम् अस्थूलम् अरूपगन्धम् (०३५-०३०)
परं पदं वेदविदो वदन्ति (०३५-०३०)
त्वम् एव तच् छब्दरसादिहीनम् (०३५-०३०)
यथा हि मूले विटपी महाद्रुमः (०३५-०३१)
प्रतिष्ठितस्कन्धवरोग्रशाखः (०३५-०३१)
तथा समस्तामरमर्त्यतिर्यग्- (०३५-०३१)
व्योमादिशब्दादिमयं त्वयीदम् (०३५-०३१)
मुञ्चामि यावत् परमायुधानि (०३५-०३२)
वैरिष्व् अनन्ताहवदुर्मदेषु (०३५-०३२)
दृष्ट्वा हि तावत् सहसा पतन्तो (०३५-०३२)
नूनं तवैवाच्युत स प्रभावः (०३५-०३२)
हता हतास् ते भवतो दृशैव (०३५-०३३)
मया पुनः केशव शस्त्रपूगैः (०३५-०३३)
काह् कर्णभीष्मप्रमुखान् विजेतुं (०३५-०३३)
युष्मत्प्रसादेन विना समर्थः (०३५-०३३)
त्रिशूलपाणिर् मम यः पुरस्तान् (०३५-०३४)
निषूदयन् वैरिबलं जगाम (०३५-०३४)
ज्ञातं मया सांप्रतम् एतद् ईश (०३५-०३४)
तव प्रसादस्य हि सा विभूतिः (०३५-०३४)
यमेन्द्रवित्तेशजलेशवह्नि- (०३५-०३५)
सूर्यात्मको यश् च ममास्त्रपूगः (०३५-०३५)
नाशाय नाभूत् पतितो ऽपि काये (०३५-०३५)
त्वत्संनिधानस्य हि सो ऽनुभावः (०३५-०३५)
बाल्ये भवान् यानि चकार देव (०३५-०३६)
कर्माण्य् असह्यानि सुरासुराणाम् (०३५-०३६)
तैर् एव जानीम न यत् परं त्वां (०३५-०३६)
दोषः स निर्दोषो मनुष्यतायाः (०३५-०३६)
तालोच्छ्रिताग्रं गुरुभारसारम् (०३५-०३७)
आयामविस्तारवद् अद्यजातः (०३५-०३७)
पादाग्रविक्षेपविभिन्नभाण्डं (०३५-०३७)
चिक्षेप को ऽन्यः शकटं यथा त्वम् (०३५-०३७)
अन्येन केनाच्युत पूतनायाः (०३५-०३८)
प्राणैः समं पीतम् असृग्विमिश्रम् (०३५-०३८)
त्वया यथा स्तन्यम् अतीवबाल्ये (०३५-०३८)
गोष्ठे च भग्नौ यमलार्जुनौ तौ (०३५-०३८)
विषानलोष्णाम्बुनिपातभीमम् (०३५-०३९)
आस्फोट्य को वा भुवि मनुषो ऽन्यः (०३५-०३९)
ननर्त पादाब्जनिपीडितस्य (०३५-०३९)
फणं समारुह्य च कालियस्य (०३५-०३९)
सुरेशसंदेशविरोधवत्सु (०३५-०४०)
वर्षत्सु मेघेषु गवान् निमित्तम् (०३५-०४०)
दिनानि सप्तास्ति च कस्य शक्तिर् (०३५-०४०)

गोवर्धनं धारयितुं करेण (०३५-०४०)
प्रलम्बचाणूरमुखान् निहत्य (०३५-०४१)
कंसासुरं यस्य बिभेति शक्रः (०३५-०४१)
तम् अष्टवर्षो निजघान को ऽन्यो (०३५-०४१)
निरायोधो नाथ मनुष्यजन्मा (०३५-०४१)
बाणार्थम् अभ्युद्यतम् उग्रशूलं (०३५-०४२)
निर्जित्य संख्ये त्रिपुरारिम् एकः (०३५-०४२)
सकार्तिकेयज्वरम् अस्त्रबाहुं (०३५-०४२)
करोति को बाणम् अनच्युतो ऽन्यः (०३५-०४२)
कः पारिजातं सुरसुन्दरीणां (०३५-०४३)
सदोपभोग्यं विजितेन्द्रसैन्यः (०३५-०४३)
स्वर्गान् महीम् उच्छ्रितवीर्यधैर्यः (०३५-०४३)
समानयाम् आस यथा प्रभो त्वम् (०३५-०४३)
हत्वा हयग्रीवम् उदारवीर्य (०३५-०४४)
निशुम्भशुम्भौ नरकं च को ऽन्यः (०३५-०४४)
जग्राह कन्यापुरम् आत्मनो ऽर्थं (०३५-०४४)
प्राग्ज्योतिषाख्ये नगरे महात्मन् (०३५-०४४)
स्थितौ स्थितस् त्वं परिपासि विश्वं (०३५-०४५)
तैस् तैर् उपायैर् अविनीतभीतैः (०३५-०४५)
मैत्री न येषां विनयाय तांस् तान् (०३५-०४५)
सर्वान् भवान् संहरते ऽव्ययात्मन् (०३५-०४५)
हिताय तेषां कपिलादिरूपिणा (०३५-०४६)
त्वयानुशस्ता बहवो ऽनुजीवाः (०३५-०४६)
येषां न मैत्री हृदि ते न नेया (०३५-०४६)
विश्वोपकारी वध एव तेषाम् (०३५-०४६)
इत्थं भवान् दुष्टवधेन नूनं (०३५-०४७)
विश्वोपकाराय विभो प्रवृत्तः (०३५-०४७)
स्थितौ स्थितं पालनम् एव विष्णुः (०३५-०४७)
करोति हन्त्य् अन्तगतो ऽन्तरुद्रः (०३५-०४७)
एतानि चान्यानि च दुष्कराणि (०३५-०४८)
दृष्टानि कर्माणि तथापि सत्यम् (०३५-०४८)
मन्यामहे त्वां जगतः प्रसूतिं (०३५-०४८)
किं कुर्म माया तव मोहनीयम् (०३५-०४८)
त्वं सर्वम् एतत् त्वयि सर्वम् एतत् (०३५-०४९)
त्वत्तस् तथैतत् तव चैतद् ईश (०३५-०४९)
एतत् स्वरूपं तव सर्वभूतं (०३५-०४९)
विभूतिभेदैर् बहुभिः स्थितस्य (०३५-०४९)
प्रसीद कृष्णाच्युत वासुदेव (०३५-०५०)
जनार्दनानन्त नृसिंह विष्णो (०३५-०५०)
मनुष्यसामान्यधिया यदीश (०३५-०५०)
दृष्टो मया तत् क्षमस्वादिदेव (०३५-०५०)
न वेद्मि सद्भावम् अहं तवाद्य (०३५-०५१)
सद्भावभूतस्य चराचरस्य (०३५-०५१)
यो वै भवान् को ऽपि नतो ऽस्मि तस्मै (०३५-०५१)
मनुष्यरूपाय चतुर्भुजाय (०३५-०५१)
देवदेव जगन्नाथ (०३५-०५२)
सर्वपापहरो भव (०३५-०५२)
हेतुमात्रस् त्व् अहं तत्र (०३५-०५२)
त्वयैतद् उपसंहृतम् (०३५-०५२)

प्रसीदेश हृषीकेश (०३५-०५३)
अक्षौहिण्या दशाष्ट च (०३५-०५३)
त्वया ग्रस्ता भुवो भूत्यै (०३५-०५३)
हेतुभूता हि मद्विधाः (०३५-०५३)
वयम् अन्ये च गोविन्द (०३५-०५४)
नराः क्रीडनकास् तव (०३५-०५४)
मद्विधैः करणैर् देव (०३५-०५४)
करोषि स्थितिपालनम् (०३५-०५४)
यद् अत्र सद् असद् वापि (०३५-०५५)
किंचिद् उच्चारितं मया (०३५-०५५)
भक्तिमान् इति तत् सर्वं (०३५-०५५)
क्षन्तव्यं मम केशव (०३५-०५५)
एवं स्तुतस् ततः प्राह (०३६-००१)
प्रीतिमांस् तं जनार्दनः (०३६-००१)
परिष्वज्य महाबाहुं (०३६-००१)
समाश्वास्य च फाल्गुनम् (०३६-००१)
प्रवाच भगवान् देवः (०३६-*(३७))
प्रहृष्टेनान्तरात्मना (०३६-*(३७))
यस् त्वां वेत्ति स मां वेत्ति (०३६-००२)
यस् त्वाम् अनु स माम् अनु (०३६-००२)
अभेदेनात्मना वेद्मी (०३६-००२)
त्वाम् अहं पाण्डुनन्दन (०३६-००२)
ममांशत्वं महाबाहो (०३६-००३)
जगतः पालनेच्छया (०३६-००३)
भुवो भारावतारार्थं (०३६-००३)
पृथक् पार्थ मया कृतम् (०३६-००३)
देवदैत्योरगा यक्षा (०३६-००४)
गन्धर्वाः किंनराप्सराः (०३६-००४)
राक्षसाश् च पिशाचाश् च (०३६-००४)
पशुपक्षिसरीसृपाः (०३६-००४)
वृक्षगुल्मादयः शैलाः (०३६-००५)
सर्वभूतानि चार्जुन (०३६-००५)
ममैवांशानि भूतानि (०३६-००५)
विद्धि सर्वाण्य् अरिंदम (०३६-००५)
भगवन् सर्वभूतात्मन् (०३६-००६)
सर्वभूतेषु वै भवान् (०३६-००६)
परमात्मस्वरूपेण (०३६-००६)
स्थितं वेद्मि तद् अव्ययम् (०३६-००६)
क्षेत्रेषु येषु येषु त्वं (०३६-००७)
चिन्तनीयो मयाच्युत (०३६-००७)
चेतसः प्रणिधानार्थं (०३६-००७)
तन् ममाख्यातुम् अर्हसि (०३६-००७)
यत्र यत्र च यन् नाम (०३६-००८)
प्रीतये भवतः स्तुतौ (०३६-००८)
प्रसादसुमुखो नाथ (०३६-००८)
तन् ममाशेषतो वद (०३६-००८)
सर्वगः सर्वभूतो ऽहं (०३६-००९)
न हि किंचिद् मया विना (०३६-००९)
चराचरे जगत्य् अस्मिन् (०३६-००९)

विद्यते कुरुसत्तम (०३६-००९)
तथापि येषु स्थानेषु (०३६-०१०)
चिन्तनीयो ऽहम् अर्जुन (०३६-०१०)
स्तोतव्यो नामभिर् यैस् तु (०३६-०१०)
श्रूयतां तद् वदामि ते (०३६-०१०)
पुष्करे पुण्डरीकाक्षं (०३६-०११)
गयायां च गदाधरम् (०३६-०११)
लोहदण्डे तथा विष्णुं (०३६-०११)
स्तुवंस् तरति दुष्कृतम् (०३६-०११)
क्ष्वामाच्ये कुमारं (०३६-*(३८))
नेपाले लोकभावनम् (०३६-*(३८))
राघवं चित्रकूटे तु (०३६-०१२)
प्रभासे दैत्यसूदनम् (०३६-०१२)
वृन्दावने च गोविन्दं (०३६-०१२)
मा स्तुवन् पुण्यभाग् भवेत् (०३६-०१२)
मन्दोदपाने वैकुण्ठं (०३६-*(३९))
माहन्त्रे चाच्युतं विभुम् (०३६-*(३९))
जयं जयन्त्यां तद्वच् च (०३६-०१३)
जयन्तं हस्तिनापुरे (०३६-०१३)
वाराहं कर्दमाले तु (०३६-०१३)
काश्मीरे चक्रपाणिनम् (०३६-०१३)
जनार्दनं च कुब्जाम्रे (०३६-०१४)
मथुरायां च केशवम् (०३६-०१४)
कुब्जके श्रीधरं तद्वद् (०३६-०१४)
गङ्गाद्वारे सुरोत्तमम् (०३६-०१४)
शालग्रामे महायोगिं (०३६-०१५)
हरिं गोवर्धनाचले (०३६-०१५)
पिण्डारके चतुर्बाहुं (०३६-०१५)
शङ्खोद्धारे च शङ्खिनम् (०३६-०१५)
वामनं च कुरुक्षेत्रे (०३६-०१६)
यमुनायां त्रिविक्रमम् (०३६-०१६)
वनमालं च किष्किन्धायां (०३६-*(४०))
देवं रैवतके द्विज (०३६-*(४०))
काशीजले महायोगं (०३६-*(४०))
देवं चामिततेजसम् (०३६-*(४०))
वैशाखयूपे अजितं (०३६-*(४०))
विरजायां विप्रक्षयम् (०३६-*(४०))
विश्वेश्वरं तथा शोणे (०३६-०१६)
कपिलं पूर्वसागरे (०३६-०१६)
श्वेतद्वीपपतिं चापि (०३६-०१७)
गङ्गासागरसंगमे (०३६-०१७)
भूधरं देविकानद्यां (०३६-०१७)
प्रयागे चैव माधवम् (०३६-०१७)
नरनारायणाख्यं च (०३६-०१८)
तथा बदरिकाश्रमे (०३६-०१८)
समुद्रे दक्षिणे स्तव्यं (०३६-०१८)
पद्मनाभेति फाल्गुन (०३६-०१८)
द्वारकायां तथा कृष्णं (०३६-०१९)
स्तुवंस् तरति दुर्गतिम् (०३६-०१९)

रामं नाम महेन्द्राद्रौ (०३६-०१९)
हृषीकेशं तथार्बुदे (०३६-०१९)
अश्वतीर्थे हयग्रीवं (०३६-०२०)
विश्वरूपं हिमाचले (०३६-०२०)
नृसिंहं कृतसौचे च (०३६-०२०)
विपाशायां द्विजप्रियम् (०३६-०२०)
नैमिषे यज्ञपुरुषं (०३६-०२१)
जम्बूमार्गे तथाच्युतम् (०३६-०२१)
अनन्तं सैन्धवारण्ये (०३६-०२१)
दण्डके शाङ्गधारिणम् (०३६-०२१)
उत्पलावर्तके शौरिं (०३६-०२२)
नर्मदायां श्रियः पतिम् (०३६-०२२)
दामोदरं रैवतके (०३६-०२२)
नन्दायां जलशायिनम् (०३६-०२२)
सर्वयोगेश्वरं चैव (०३६-०२३)
सिन्धुसागरसंगमे (०३६-०२३)
सह्याद्रौ देवदेवेशं (०३६-०२३)
वैकुण्ठं मागधे वने (०३६-०२३)
सर्वपापहरं विन्ध्ये (०३६-०२४)
उड्रेषु पुरुषोत्तमम् (०३६-०२४)
हृदये चापि कौन्तेय (०३६-०२४)
परमात्मानम् आत्मनः (०३६-०२४)
वटे वटे वैश्रवणं (०३६-०२५)
चत्वरे चत्वरे शिवम् (०३६-०२५)
पर्वते पर्वते रामं (०३६-०२५)
सर्वत्र मधुसूदनम् (०३६-०२५)
नरं भूमौ तथा व्योम्नि (०३६-०२६)
कौन्तेय गरुडध्वजम् (०३६-०२६)
वासुदेवं च सर्वत्र (०३६-०२६)
संस्मरञ् ज्योतिषां पतिम् (०३६-०२६)
अर्चयन् प्रणमंस् तु त्वं (०३६-०२७)
संस्मरंश् च धनंजय (०३६-०२७)
एतेष्व् एतानि नामानि (०३६-०२७)
नरः पापैः प्रमुच्यते (०३६-०२७)
स्थानेष्व् एतेषु मन्नाम्नाम् (०३६-०२८)
एतेषां प्रीणनं नरः (०३६-०२८)
द्विजानां प्रीणनं कृत्वा (०३६-०२८)
स्वर्गलोके ऽभिजायते (०३६-०२८)
नामान्य् एतानि कौन्तेय (०३६-०२९)
स्थानान्य् एतानि चात्मवान् (०३६-०२९)
जयं वै पञ्चपञ्चाशत् (०३६-०२९)
त्रिसन्ध्यं मत्परायणः (०३६-०२९)
त्रीणि जन्मानि यत् पापम् (०३६-०३०)
अवस्थात्रितये कृतम् (०३६-०३०)
तत् क्षालयत्य् असंदिग्धं (०३६-०३०)
जायते च सतां कुले (०३६-०३०)
द्विष्कालं वा जपन्न् एव (०३६-०३१)
दिवारात्रौ च यत् कृतम् (०३६-०३१)
तस्माद् विमुच्यते पापात् (०३६-०३१)

सद्भावपरमो नरः (०३६-०३१)
जप्यान्य् एतानि कौन्तेय (०३६-०३२)
सकृच्छ्रद्धासमन्वितम् (०३६-०३२)
मोचयन्ते नरं पापाद् (०३६-०३२)
यत् तत्रैव दिने कृतम् (०३६-०३२)
धन्यं यशस्यम् आयुष्यं (०३६-०३३)
जयं कुरु कुलोद्वह (०३६-०३३)
ग्रहानुकूलतां चैव (०३६-०३३)
करोत्य् आशु न संशयः (०३६-०३३)
उपोषितो मत्परमः (०३६-०३४)
स्थानेष्व् एतेषु मानवः (०३६-०३४)
कृतायतनवासश् च (०३६-०३४)
प्राप्नोत्य् अभिमतं फलम् (०३६-०३४)
उत्क्रान्तिर् अप्य् अशेषेषु (०३६-०३५)
स्थानेष्व् एतेषु शस्यते (०३६-०३५)
अन्यस्थानाच् छतगुणम् (०३६-०३५)
एतेष्व् अनशनादिकम् (०३६-०३५)
यस् तु मत्परमः कालं (०३६-०३६)
करोत्य् एतेषु मानवः (०३६-०३६)
देवानाम् अपि पूज्यो ऽसौ (०३६-०३६)
मम लोके महीयते (०३६-०३६)
यन् न तापाय वै पुंसां (०३७-००१)
भवत्य् आमुष्मिकं कृतम् (०३७-००१)
तापाय यच् च भवति (०३७-००१)
तद् आचक्ष्व महामुने (०३७-००१)
उपवासप्रभावं च (०३७-००२)
कृष्णाराधनकाङ्क्षिणः (०३७-००२)
कथयेह मम ब्रह्मन् (०३७-००२)
न च तृप्यामि कथ्यते (०३७-००२)
श्रूयतां दाल्भ्य यत् पृष्टाः (०३७-००३)
कौतुकाद् भवता वयम् (०३७-००३)
आमुष्मिकं न तापाय (०३७-००३)
यच् च तापाय जायते (०३७-००३)
उपोषितप्रभावं च (०३७-००४)
कृष्णाराधनकाङ्क्षिणः (०३७-००४)
कथयामि यथावृत्तं (०३७-००४)
पूर्वम् एव महामते (०३७-००४)
वैदिशं नाम नगरं (०३७-००५)
प्रख्यातम् इह सत्तम (०३७-००५)
तत्र वैश्यो ऽभवत् पूर्वं (०३७-००५)
वीरभद्र इति श्रुतः (०३७-००५)
भार्याजामातृदुहितृ- (०३७-००६)
पुत्रपौत्रस्नुषान्वितः (०३७-००६)
प्रभूतभृत्यवर्गश् च (०३७-००६)
बहुव्यापारकारकः (०३७-००६)
पुत्रपौत्रादिभरण- (०३७-००७)
व्यासक्तमतिर् एव च (०३७-००७)
परलोकं प्रति मतिस् (०३७-००७)
तस्य चात्यन्तदुर्मुखा (०३७-००७)

चकारानुदिनं सो ऽथ (०३७-००८)
न्यायान्यायैर् धनार्जनम् (०३७-००८)
सर्वत्रान्यत्र निःस्नेहः (०३७-००८)
परस्वे चातितर्षुलः (०३७-००८)
न जुहोत्य् उदिते काले (०३७-००९)
न ददात्य् अतितृष्णया (०३७-००९)
बभूव चोद्यमस् तस्य (०३७-००९)
पुत्रादिभरणे परः (०३७-००९)
नित्यनैमित्तिकानां च (०३७-०१०)
हानिं चक्रे स्वकर्मणाम् (०३७-०१०)
तृष्णाभिभूतो विप्रर्षे (०३७-०१०)
स्ववर्गभरणाधृतः (०३७-०१०)
कालेन गच्छता सो ऽथ (०३७-०११)
मृतो विन्ध्याटवीतटे (०३७-०११)
यातनादेहभृत् प्रेतो (०३७-०११)
ग्रीष्मकाले ऽभवन् मुने (०३७-०११)
तं ददर्श महाभागो (०३७-०१२)
दिव्यज्ञानसमन्वितः (०३७-०१२)
वेदवेदान्तविद् विद्वान् (०३७-०१२)
पिपीतो नाम वै द्विजः (०३७-०१२)
भास्करस्यांशुभिर् दीप्तैर् (०३७-०१३)
दह्यन्तम् अनिवारणैः (०३७-०१३)
प्रतप्तवालुकामध्ये (०३७-०१३)
तृषा चात्यन्तपीडितम् (०३७-०१३)
क्षुत्क्षामकण्ठं शुष्कास्यं (०३७-०१४)
स्तब्धोद्वृत्तविलोचनम् (०३७-०१४)
निष्क्रान्तजिह्वम् अङ्गेषु (०३७-०१४)
विस्फोटैः सर्वतश् चितम् (०३७-०१४)
निश्वासायासखेदेन (०३७-०१५)
विरलास्यम् अनादरम् (०३७-०१५)
श्रान्तं मक्षिकयाकीर्णं (०३७-*(४१))
दुर्दग्धं चातिदारुणम् (०३७-*(४१))
निजेन कर्मणा बद्धम् (०३७-०१५)
असमर्थं पलायने (०३७-०१५)
तं तादृशम् अथो दृष्ट्वा (०३७-०१६)
गार्दभेयो महामुनिः (०३७-०१६)
पिपीतः प्राह विप्रर्षिः (०३७-०१६)
कारुण्यस्तिमितं वचः (०३७-०१६)
जानन्न् अपि तथा प्राप्तं (०३७-०१७)
तदनुष्ठानजं फलम् (०३७-०१७)
जन्तोस् तस्योपकाराय (०३७-०१७)
सर्वतो ह्लादयन्न् इव (०३७-०१७)
अधः सूर्यांशुभिस् तप्तैर् (०३७-०१८)
बहुभिर् यानपांसुभिः (०३७-०१८)
उपर्य् अर्ककरैर् उग्रैस् (०३७-०१८)
तृषा चार्तस् तथा क्षुधा (०३७-०१८)
अन्यैस् तथाधिभिर् घोरैर् (०३७-०१९)
अविषह्यैर् अवारणैः (०३७-०१९)
कथयेह यथातत्त्वम् (०३७-०१९)

एकाकी दह्यसे कथम् (०३७-०१९)
तस्यैतद् वचनं श्रुत्वा (०३७-०२०)
पिपीतस्य सवेदनम् (०३७-०२०)
यातनास्थ उवाचेदं (०३७-०२०)
कृच्छ्राद् उच्छ्वास्य मस्तकम् (०३७-०२०)
ब्रह्मन् नालोचितं पूर्वं (०३७-०२१)
कथम् अन्ते भविष्यति (०३७-०२१)
अशाश्वते शाश्वतधीस् (०३७-०२१)
तेन दह्यामि दुर्मतिः (०३७-०२१)
धनापणगृहक्षेत्र- (०३७-०२२)
पुत्रदारहिते रतः (०३७-०२२)
नात्मनो ऽहं हितारम्भी (०३७-०२२)
तेन दह्यामि दुर्मतिः (०३७-०२२)
इदं करिष्ये कृत्वेदं (०३७-०२३)
करिष्याम्य् अपरं त्व् इदम् (०३७-०२३)
इतीच्छाशतसरो ऽहं (०३७-०२३)
तेन दह्यामि दुर्मतिः (०३७-०२३)
जुहोमि यदि तन् नास्ति (०३७-०२४)
ददामि यदि सीदति (०३७-०२४)
कुटुम्बम् इति मूढो ऽहम् (०३७-०२४)
तेन दह्यामि दुर्मतिः (०३७-०२४)
शीतोष्णवर्षाभिभवं (०३७-०२५)
लोभात् सोड्ःअं मयाशुभम् (०३७-०२५)
तद् एव हि न धर्मार्थं (०३७-०२५)
तेन दह्यामि दुर्मतिः (०३७-०२५)
पितृदेवमनुष्याणाम् (०३७-०२६)
अदत्त्वापोषिता हि ये (०३७-०२६)
ते ऽन्यत्र क्वापि वर्तन्ते (०३७-०२६)
दह्याम्य् एको ऽत्र दुर्मतिः (०३७-०२६)
पुत्रभृत्यकलत्रेषु (०३७-०२७)
मम त्व् आदृतमानसः (०३७-०२७)
कृत्वा कर्माण्य् असाधूनि (०३७-०२७)
दह्याम्य् एको ऽत्र दुर्मतिः (०३७-०२७)
मृते मयि धने तस्मिन्न् (०३७-०२८)
अन्यायोपार्जिते मया (०३७-०२८)
नूनं ममेति वर्तन्ते (०३७-०२८)
दह्याम्य् एको ऽत्र दुर्मतिः (०३७-०२८)
न हि नः पूजिता गेहान् (०३७-०२९)
निर्गता द्विजसत्तमाः (०३७-०२९)
स्ववर्गहितकामस्य (०३७-०२९)
तेन दह्याम्य् अहर्निशम् (०३७-०२९)
यन् मे न पूजिता देवाः (०३७-०३०)
कुटुम्बं पोषीतं परम् (०३७-०३०)
एकाकी तेन दह्यामि (०३७-०३०)
ये पुष्टास् ते ऽन्यतो गताः (०३७-०३०)
नित्यनैमित्तिकं कर्म (०३७-०३१)
कृते येषां न म कृतम् (०३७-०३१)
एकाकी तेन दह्यामि (०३७-०३१)
तैर् मन्ये क्वापि रम्यते (०३७-०३१)

यन् मे परिजनस्यार्थे (०३७-०३२)
कृतं कर्म शुभाशुभम् (०३७-०३२)
एकाकी तेन दह्यामि (०३७-०३२)
गतास् ते फलभोगिनः (०३७-०३२)
दाराः पुत्राश् च भृत्याश् च (०३७-०३३)
पापव्याप्त्या मयैधिताः (०३७-०३३)
एकाकी तेन दह्यामि (०३७-०३३)
गतास् ते फलभोगिनः (०३७-०३३)
पुत्रदारादिभृत्यार्थे (०३७-०३४)
मयान्यायार्थसंचयाः (०३७-०३४)
कृतास् तेनात्र दह्यामि (०३७-०३४)
भुञ्जते ऽप्य् अन्यतो गताः (०३७-०३४)
कृतं पापं मया भुक्तम् (०३७-०३५)
अन्यैस् तत्कर्मसंचितम् (०३७-०३५)
दह्याम्य् एको ऽहम् अत्यन्तं (०३७-०३५)
त्यक्तस् तैः फलभोगिभिः (०३७-०३५)
यन् ममत्वाभिभूतेन (०३७-०३६)
मया धनम् उपार्जितम् (०३७-०३६)
अन्यस्य ते ऽद्य कस्यापि (०३७-०३६)
केवलं मम दुष्कृतम् (०३७-०३६)
अन्तर्दुःखेन दग्धो ऽन्तर् (०३७-०३७)
बहिर् दह्यामि भानुना (०३७-०३७)
नान्तर्दुःखं न वा भानुः (०३७-०३७)
पापम् एव द्विधा स्थितम् (०३७-०३७)
कंचित् कर्मसमुद्धारं (०३७-०३८)
पश्यस्य् असुखसागरात् (०३७-०३८)
मम येनाहम् आह्लादम् (०३७-०३८)
आप्नुयां मुनिसत्तम (०३७-०३८)
अल्पकालिकम् उद्धारं (०३७-०३९)
तव पश्याम्य् असंशयम् (०३७-०३९)
प्रक्षीणप्रायम् एतत् ते (०३७-०३९)
सुकृतं चास्ति ते परम् (०३७-०३९)
अतीते दशमे जन्मन्य् (०३७-०४०)
अच्युताराधनेच्छया (०३७-०४०)
सुकर्मजयदां भद्र (०३७-०४०)
द्वादशीं त्वम् उपोषितः (०३७-०४०)
तव तस्याः प्रभावेण (०३७-०४१)
पापम् अत्यन्तदुर्जयम् (०३७-०४१)
अल्पैर् अहोभिः संक्षीणं (०३७-०४१)
नवपात्रे यथा जलम् (०३७-०४१)
यद् अन्यः क्षपयेद् वर्षैस् (०३७-०४२)
तद् दिनैर् भवतः क्षयम् (०३७-०४२)
गतं पापम् अयं तस्याः (०३७-०४२)
प्रभावो ऽत्यन्तदुर्लभः (०३७-०४२)
शमं पापस्य कुरुते (०३७-०४३)
जयं सुकृतकर्मणः (०३७-०४३)
सत्कर्मजयदा ह्य् एषा (०३७-०४३)
ततो वै द्वादशी स्मृता (०३७-०४३)
यच् चैतद् वेदनार्तेन (०३७-०४४)

भवता परिदेवितम् (०३७-०४४)
तत् तथा नात्र संदेहो (०३७-०४४)
ममता पापहेतुकी (०३७-०४४)
पापम् अत्र कृतं प्रेत्य (०३७-०४५)
भद्र तापाय जायते (०३७-०४५)
आह्लादाय तथा पुण्यम् (०३७-०४५)
इह पुण्यकृतां नृणाम् (०३७-०४५)
वीरभद्रं समाश्वास्य (०३७-०४६)
ययाव् इत्थं महामुनिः (०३७-०४६)
सो ऽप्य् अल्पेनैव कालेन (०३७-०४६)
ततो मोक्षम् अवाप्तवान् (०३७-०४६)
एवं दाल्भ्य परे लोके (०३७-०४७)
यद् अत्रासुकृतं कृतम् (०३७-०४७)
तत् तापाय सुखायोक्तं (०३७-०४७)
यद् अत्रैव शुभं कृतम् (०३७-०४७)
उपवासप्रभावश् च (०३७-०४८)
कथितस् ते महामुने (०३७-०४८)
येनाल्पैर् एव दिवसैर् (०३७-०४८)
भूरि पापं क्षयं गतम् (०३७-०४८)
तस्मान् नरेण पुण्याय (०३७-०४९)
पतितव्यं न पातके (०३७-०४९)
उपवासाश् च कर्तव्याः (०३७-०४९)
सदैवात्महितैषिणा (०३७-०४९)
संसारासारतां ज्ञात्वा (०३८-००१)
विषयांश् चातितर्षुलान् (०३८-००१)
कर्तव्यं यन् महाभाग (०३८-००१)
पुरुषेण तद् उच्यताम् (०३८-००१)
संसारासारतां ज्ञात्वा (०३८-००२)
विषयांश् चातितर्षुलान् (०३८-००२)
गृद्धिस् तेष्व् एव संत्याज्या (०३८-००२)
तत्त्यागो गुणवान् नृणाम् (०३८-००२)
येषाम् अब्दसहस्राणां (०३८-००३)
सहस्रैर् अपि नो नरः (०३८-००३)
भोगात् तृप्तिं समाप्नोति (०३८-००३)
कस् तैर् भोगैर् विरज्यते (०३८-००३)
यावतो वाञ्छते भोगान् (०३८-००४)
अहन्य् अहनि मानवः (०३८-००४)
तेषां सहस्रभागे ऽपि (०३८-००४)
दाल्भ्य प्राप्तिं न विन्दति (०३८-००४)
अथ चेत् तन् अवाप्नोति (०३८-००५)
सहस्रगुणितान् नरः (०३८-००५)
तथाप्य् अतृप्त एवान्तम् (०३८-००५)
अन्तकाले गमिष्यति (०३८-००५)
तृप्तये ये न संप्राप्ताः (०३८-००६)
प्राप्यन्ते ये न वाञ्छिताः (०३८-००६)
बुद्धिमान् इन्द्रियार्थेषु (०३८-००६)
तेष्व् असङ्गी सदा भवेत् (०३८-००६)
येषां तृप्तिर् न भोगेन (०३८-००७)
त्यागश् चैवोपकारकः (०३८-००७)

उपोषितविधानेन (०३८-००७)
भोगान्त्यागस् ततो वरः (०३८-००७)
कृच्छ्रचान्द्रायणादीनि (०३८-००८)
नरैस् तस्मान् मुमुक्षुभिः (०३८-००८)
निष्कामैर् दाल्भ्य कार्याणि (०३८-००८)
फलाय च फलेप्सुभिः (०३८-००८)
अत्राप्य् उदाहरन्तीमं (०३८-००९)
मुनयो मुनिसत्तम (०३८-००९)
दस्राभ्यां सह संवादम् (०३८-००९)
ऐलस्य च महात्मनः (०३८-००९)
ऐलः पुरूरवाः पूर्वं (०३८-०१०)
बभूव मनुजेश्वरः (०३८-०१०)
चकमे यं महाभागम् (०३८-०१०)
उर्वशी सुरसुन्दरी (०३८-०१०)
संत्यज्य त्रिदशावासं (०३८-०११)
रूपौदार्यगुणान्वितम् (०३८-०११)
भेजे तम् उर्वशी दाल्भ्य (०३८-०११)
बुधस्य तनयं नृपम् (०३८-०११)
नासत्यदस्रौ रूपेण (०३८-०१२)
देवानाम् अधिकौ ततः (०३८-०१२)
उर्वशीलोभनं तस्य (०३८-०१२)
रूपं द्रष्टुं समुत्सुकौ (०३८-०१२)
प्रतिष्ठानं पुरं तस्य (०३८-०१३)
बुधपुत्रस्य धीमतः (०३८-०१३)
जग्मतुः सुमहाभागौ (०३८-०१३)
तस्य द्वास्थम् अथोचतुः (०३८-०१३)
क्षत्तो ऽस्मद्वचनाद् ऐलं (०३८-०१४)
ब्रूहि त्वं वसुधाधिपम् (०३८-०१४)
द्रष्टुं तवाश्विनौ प्राप्तौ (०३८-०१४)
रूपसंपद्गुणं ग्र्प (०३८-०१४)
तदेह्य् अत्र महाभाग (०३८-०१४)
इहास्मान् संप्रवेशय (०३८-०१४)
आश्चर्यभूतं लोकेषु (०३८-०१५)
उर्वशीलोभनं वपुः (०३८-०१५)
तत् कौतुकं न कुरुते (०३८-०१५)
कस्य पार्थिवपुङ्गव (०३८-०१५)
आवां समागतौ तस्मात् (०३८-*(४२))
त्वां द्रष्टुं मनुजोत्तम (०३८-*(४२))
द्वास्थस् तथेति ताव् आह (०३८-०१६)
प्रविवेश च सत्वरम् (०३८-०१६)
आचचक्षे च तद् राज्ञे (०३८-०१६)
नासत्यवचनं द्विज (०३८-०१६)
तच् छ्रुत्वा वचनं राजा (०३८-०१७)
द्वास्थम् आह मुहूर्तकम् (०३८-०१७)
विलम्ब्यतां महाभागौ (०३८-०१७)
तौ ब्रूहि वचनान् मम (०३८-०१७)
व्यायामतैलसंसर्ग- (०३८-०१८)
मलिनो न विभूषितः (०३८-०१८)
प्रसाधनं च कृत्वाहं (०३८-०१८)

निष्क्रमामि त्वरान्वितः (०३८-०१८)
निष्क्रम्य स ततो द्वास्थो (०३८-०१९)
यथोक्तं भूभृतखिलम् (०३८-०१९)
समाचष्ट ततो दाल्भ्य (०३८-०१९)
तौ च भूयस् तम् ऊचतुः (०३८-०१९)
अप्रसाधितम् एवाशु (०३८-०२०)
भवन्तं वसुधाधिप (०३८-०२०)
पश्यावस् तव भूयो ऽपि (०३८-०२०)
त्वां द्रक्ष्यावः प्रसाधितम् (०३८-०२०)
इत्य् उक्तो निर्गतस् तूर्णं (०३८-०२१)
भवनाद् अवनीपतिः (०३८-०२१)
तैलाभ्यक्ततनुर् दाल्भ्य (०३८-०२१)
व्यायामपरिधानधृक् (०३८-०२१)
स प्रणामं तयोः कृत्वा (०३८-०२२)
किंचिन् नतशिरा नृपः (०३८-०२२)
प्रोवाच यन् मया कार्यं (०३८-०२२)
भवतोस् तद् इहोच्यताम् (०३८-०२२)
सप्तद्वीपवती पृथ्वी (०३८-०२३)
पुत्रदारबलं धनम् (०३८-०२३)
यच् चान्यद् अपि तत् सर्वं (०३८-०२३)
युवयोर् मे निवेदितम् (०३८-०२३)
इत्य् उदाहृतम् आकर्ण्य (०३८-०२४)
नृपतेर् अश्विनाव् अपि (०३८-०२४)
अङ्गोपाङ्गादिकं सर्वं (०३८-०२४)
शनकैस् ताव् अपश्यताम् (०३८-०२४)
शिरोललाटबाहुं स- (०३८-०२५)
नयनादिविलोकनम् (०३८-०२५)
कृत्वा च तं महीपालम् (०३८-०२५)
ऊचतुस् ताव् इदं सुरौ (०३८-०२५)
प्रविश्य स्नाहि भूपाल (०३८-०२६)
यथार्थैश् च विभूषणैः (०३८-०२६)
विभूषितं तु भूयस् त्वां (०३८-०२६)
द्रक्ष्यावो ऽवां नरेश्वर (०३८-०२६)
तथेति चोक्त्वा स नृपः (०३८-०२७)
प्रविवेश महामुने (०३८-०२७)
चक्रे च सकलं सम्यक् (०३८-०२७)
स्नात्वा देहप्रसाधनम् (०३८-०२७)
स्नातो ऽनुलिप्तः स्रग्धारी (०३८-०२८)
सुवस्त्रः सुविभूषितः (०३८-०२८)
नासत्यदस्रयोः पार्श्वम् (०३८-०२८)
इयाय वसुधाधिपः (०३८-०२८)
भूयो ऽपि तौ यथा पूर्वम् (०३८-०२९)
अङ्गोपाङ्गविलोकनम् (०३८-०२९)
चक्रतुर् नृपतेस् तस्य (०३८-०२९)
स्मितभिन्नौष्ठसंपुटौ (०३८-०२९)
तौ सहासौ समालक्ष्य (०३८-०३०)
स तदा वसुधाधिपः (०३८-०३०)
हासस्य कारणं देव- (०३८-०३०)
भिषजौ ताव् अपृच्छत (०३८-०३०)

पृच्छन्तं न ततो दाल्भ्य (०३८-०३१)
नृपतिं हास्यकारणम् (०३८-०३१)
यद् ऊचतुर् महाभागौ (०३८-०३१)
तच् छृणुष्व वदामि ते (०३८-०३१)
शृणु भूपाल सकलं (०३८-०३२)
हासकारणम् आवयोः (०३८-०३२)
युष्मद्दर्शनसंभूतं (०३८-०३२)
क्षणापचयहेतुकम् (०३८-०३२)
अस्नातस्याभवद् भूप (०३८-०३३)
यादृशी ते सुरूपता (०३८-०३३)
सांप्रतं तादृशी नेयं (०३८-०३३)
भूषितस्यापि भूषणैः (०३८-०३३)
स्नातः स्रग्दामधारी त्वं (०३८-०३४)
स्वनुलिप्तः सुभूषितः (०३८-०३४)
तथाप्य् अस्नात एव प्राच् (०३८-०३४)
शोभनो ऽभून् न सांप्रतम् (०३८-०३४)
किंतु तत्कारणं येन (०३८-०३५)
व्यायाममलिनाम्बरः (०३८-०३५)
शोभनो ऽहम् अभूत् पूर्वम् (०३८-०३५)
इदानीं न विभूषितः (०३८-०३५)
दिव्येन चक्षुषा भूप (०३८-०३६)
कालस्यास्य च तस्य च (०३८-०३६)
वयःपरिणतिं सूक्ष्मां (०३८-०३६)
पश्यावो ऽपचयप्रदाम् (०३८-०३६)
यथा हि नाडिका पूर्णा (०३८-०३७)
गलत्य् अविरतं नृप (०३८-०३७)
नृणां परिणतस् तद्वच् (०३८-०३७)
शरीरग्रहणाद् अनु (०३८-०३७)
जन्मतो ऽनन्तरं बाल्यं (०३८-०३८)
पौगण्डत्वं ततः परम् (०३८-०३८)
यौवनं मध्यदेहित्वं (०३८-०३८)
वार्द्धकं च जरा नृणाम् (०३८-०३८)
स्थूलदृष्ट्या तु पश्यन्ति (०३८-०३८)
न तु ते सूक्ष्मदर्शिनः (०३८-०३८)
निमेषशतभागस्य (०३८-०३९)
सहस्रांशः क्षणो नृप (०३८-०३९)
तस्याप्य् अयुतभागांशो (०३८-०३९)
भवत्य् अपचयो नृणाम् (०३८-०३९)
सूक्ष्मातिसूक्ष्मापचयी (०३८-०४०)
भवत्य् एष पुमान् नृप (०३८-०४०)
परिणामं क्रमाद् याति (०३८-०४०)
तृप्तिं वारि पिबन्न् इव (०३८-०४०)
तद् अहर् जातबाल्यस्य (०३८-०४१)
बालस्यापचयो हि सः (०३८-०४१)
प्रतिक्षणांशया वृद्धिर् (०३८-०४१)
बालत्वं हीयते तया (०३८-०४१)
पौगण्डे यौवने चैव (०३८-०४२)
वार्द्धके च महामते (०३८-०४२)
हानिक्रमः स एवोक्तो (०३८-०४२)

यो बाल्ये कथितस् तव (०३८-०४२)
कान्तिर् या नृप बालस्य (०३८-०४३)
पोगण्डस्य हि सा कुतः (०३८-०४३)
तत्कान्तिसौकुमार्याद्यैः (०३८-०४३)
शून्यम् एव हि यौवनम् (०३८-०४३)
कान्त्यादिसंपदो हानिः (०३८-०४४)
परमा नृप वार्द्धके (०३८-०४४)
तत्राप्य् अनुक्षणं हानिर् (०३८-०४४)
हानिर् आ मृत्युतो नृप (०३८-०४४)
एवं प्रतिक्षणांशांशो (०३८-०४५)
नृणाम् अपचयप्रदः (०३८-०४५)
कुर्वतः किमु कालस् ते (०३८-०४५)
महास्नानप्रसाधनम् (०३८-०४५)
अस्मद्दृष्टो भवान् यावत् (०३८-०४६)
प्रविष्टो निजमन्दिरम् (०३८-०४६)
तावद् धानिम् अनुप्राप्तः (०३८-०४६)
किमु यामार्धसंस्थितः (०३८-०४६)
यादृशो ऽद्य भवांस् तादृक् (०३८-०४७)
त्वं न रूपी नरेश्वर (०३८-०४७)
परश्वः शस्तनं नैव (०३८-०४७)
चतुर्थे ऽह्नि च तन्मयः (०३८-०३७)
एवं समस्तभूतानि (०३८-०४८)
स्थावराणि चराणि च (०३८-०४८)
प्रतिक्षणांशापचयं (०३८-०४८)
प्राप्नुवन्ति महीतले (०३८-०४८)
तस्मान् न कौतुकं कार्यं (०३८-०४९)
भवता तु नरेश्वर (०३८-०४९)
यत् ते रूपम् अभूत् पूर्वम् (०३८-०४९)
अप्रसाधितशोभनम् (०३८-०४९)
राजा पुरूरवा भूयः (०३८-०५०)
श्रुत्वा वाक्यम् इदं तयोः (०३८-०५०)
चिन्तयित्वा वचः प्राह (०३८-०५०)
संवेगोत्कम्पिमानसः (०३८-०५०)
अहो भवद्भ्यां कथितम् (०३८-०५१)
अनवस्थितसंस्थितम् (०३८-०५१)
स्वरूपं जगतो देवौ (०३८-०५१)
येन त्रस्तो ऽस्मि सांप्रतम् (०३८-०५१)
अज्ञानतिमिरान्धानां (०३८-०५२)
मद्विधानां भवद्विधाः (०३८-०५२)
प्रदीपभूताः संदेहो (०३८-०५२)
विद्यते नात्र कश्चन (०३८-०५२)
सदापचयदोषेण (०३८-०५३)
दुष्टकायैः सुरोत्तमौ (०३८-०५३)
यत् कार्यं पुरुषैस् तच् च (०३८-०५३)
कथ्यतां हितकाम्यया (०३८-०५३)
अतिमूढो ऽध्रुवे काये (०३८-०५४)
सदापचयधर्मिणि (०३८-०५४)
नरस् तदुपभोग्यानि (०३८-०५४)
ध्रुवाणि परिमार्गति (०३८-०५४)

आसनं शयनं यानं (०३८-०५५)
परिधानं गृहादिकम् (०३८-०५५)
वाञ्छत्य् अहो ऽतिमोहेन (०३८-०५५)
सुस्थिरं स्वयम् अस्थिरः (०३८-०५५)
मूढो ऽध्रुवं ध्रुवमतिः (०३८-०५६,*(४३))
किम् आत्मानं न बुध्यते (०३८-०५६,*(४३))
बाल्यात् पौगण्डतां गत्वा (०३८-०५६)
यः पुनर् यौवनं गतः (०३८-०५६)
भुवः शैलं समारूढः (०३८-०५७)
समारूढस् ततो द्रुमम् (०३८-०५७)
आरोहणं स किम् अन्यद् (०३८-०५७)
ऋक्षभीतः करिष्यति (०३८-०५७)
बाल्यात् पौगण्डतां यातो (०३८-०५८)
यौवनाद् वृद्धतां गतः (०३८-०५८)
वयोऽवस्था ततः कान्या (०३८-०५८)
यद् भोगाय स्थिरेच्छकः (०३८-०५८)
तस्माद् एतन् मनुष्येण (०३८-०५९)
विचार्यात्महितैषिणा (०३८-०५९)
श्रेयस्य् आमुष्मिके यत्नः (०३८-०५९)
कर्तव्यो ऽहर्निशं नृप (०३८-०५९)
भोगेष्व् असक्तिः सततं (०३८-०६०)
तथैवात्मावलोकनम् (०३८-०६०)
श्रेयः परं मनुष्याणां (०३८-०६०)
कपिलः प्राह पार्थिवः (०३८-०६०)
सर्वत्र समदर्शित्वं (०३८-०६१)
निर्ममत्वम् असङ्गिता (०३८-०६१)
श्रेयः परं मनुष्याणां (०३८-०६१)
प्राह पञ्चशिखो मुनिः (०३८-०६१)
आगर्भजन्मबाल्यादि- (०३८-०६२)
वयोऽवस्थादिवेदनम् (०३८-०६२)
श्रेयः परं मनुष्याणाम् (०३८-०६२)
अङ्गारिष्ठो ऽब्रवीन् नृपः (०३८-०६२)
अध्यात्मिकादिदुःखानाम् (०३८-०६३)
अत्यन्तादिप्रतिक्रिया (०३८-०६३)
श्रेयः परं मनुष्याणां (०३८-०६३)
जनको ह्य् आह मोक्षवित् (०३८-०६३)
अभिन्नयोर् भेदकरः (०३८-०६४)
प्रत्ययो यः परात्मनोः (०३८-०६४)
हिरण्यगर्भस् तच्छान्तिं (०३८-०६४)
श्रेयः परमम् अब्रवीत् (०३८-०६४)
कर्तव्यम् इति यत् कर्म (०३८-०६५)
ऋग्यजुःसामसंज्ञितम् (०३८-०६५)
क्रियते तत् परं श्रेयो (०३८-०६५)
जैगीषव्यो ऽब्रवीन् मुनिः (०३८-०६५)
हानिं सर्वविधित्सानाम् (०३८-०६६)
आत्मनः सुखहेतुकीम् (०३८-०६६)
श्रेयः परं मनुष्याणां (०३८-०६६)
देवलो ऽप्य् आह तत्त्ववित् (०३८-०६६)
यद् यत् त्यजति कामानां (०३८-०६७)

तत् सुखस्याभिपूर्यते (०३८-०६७)
एतद् एव परं श्रेयो (०३८-०६७)
विज्ञानं हितकामिनाम् (०३८-०६७)
कामानुसारी पुरुषः (०३८-०६८)
कामान् अनु विनश्यति (०३८-०६८)
अश्रेयसं परं चैतद् (०३८-०६८)
यद् भूपालातिकामिता (०३८-०६८)
एवं विज्ञाततत्त्वार्थः (०३८-०६९)
सनको योगिनां वरः (०३८-०६९)
नरेन्द्र प्राह विप्राणां (०३८-०६९)
परमार्थपरंपरम् (०३८-०६९)
क्रियाकलापफलदम् (०३८-०७०)
ऋग्यजुःसामसंज्ञितम् (०३८-०७०)
अमुष्मिन् मध्यमं श्रेयः (०३८-०७०)
प्राहुः सप्त र्षयो नृप (०३८-०७०)
इहैव फलदं काम्यं (०३८-०७१)
कर्म यत् क्रियते नरैः (०३८-०७१)
तद् आहुर् अपरं श्रेयो (०३८-०७१)
ऋचीकच्यवनादयः (०३८-०७१)
द्वे कर्मणी नरश्रेष्ठ (०३८-०७२)
ब्रह्मणा समुदाहृते (०३८-०७२)
प्रवृत्ताख्यं निवृत्तं च (०३८-०७२)
स्वर्गमुक्तिफले हि ते (०३८-०७२)
प्रवृत्तम् अपि मोक्षाय (०३८-०७३)
कर्म पार्थिव जायते (०३८-०७३)
कर्म स्वरूपतो भ्रष्टम् (०३८-०७३)
अनाकाङ्क्ष्य फलं कृतम् (०३८-०७३)
सामान्यं चापरं श्रेयः (०३८-०७४)
सर्ववर्णाश्रमेषु यत् (०३८-०७४)
तच् छृणुष्व महीपाल (०३८-०७४)
वदतो मम तत्त्वतः (०३८-०७४)
सत्यं वक्तव्यं नित्यं मैत्रेण भाव्यं (०३८-०७५)
कार्यं च त्याज्यं नित्यम् आयासकारि (०३८-०७५)
लोके ऽमुष्मिन् यद् धितं च तथास्मिंस् (०३८-०७५)
तस्मिन्न् आत्मा योजनीयो ऽनुधीरैः (०३८-०७५)
तीर्थस्नानैः सोपवासैर् अजस्रं (०३८-०७६)
पात्रे दानैर् होमजापैश् च नित्यम् (०३८-०७६)
शुद्धिर् नेयो देवताभ्यर्चनैश् च (०३८-०७६)
शुद्धो ऽप्य् आत्मा सङ्गदोषाद् अशुद्धः (०३८-०७६)
शुद्धं वस्त्रं सङ्गदोषाद् अशुद्धं (०३८-०७७)
भूयः शुद्धिं शोध्यमानं पर्याति (०३८-०७७)
एतज् ज्ञात्वा न प्रमादो मनुष्यैः (०३८-०७७)
शुद्धे ह्य् आत्मन्य् आत्मविद्भिर् विधेयः (०३८-०७७)
इत्य् उक्त्वा तौ नरेन्द्रं तौ (०३८-०७८)
तेन चार्घ्यादिना पृथक् (०३८-०७८)
सम्यक् संपूजितौ यातौ (०३८-०७८)
नाक पृष्ठम् अथाश्विनौ (०३८-०७८)
स चाप्य् अनित्यताम् एवम् (०३८-०७९)
अवगम्य नरेश्वरः (०३८-०७९)

निष्कामो ऽनुदिनम् एव (०३८-०७९)
अवगम्य नरेश्वरः (०३८-०७९)
निष्कामो ऽनुदिनं यज्ञैर् (०३८-०७९)
इयाज पुरुषोत्तमम् (०३८-०७९)
भोगासङ्गि मनो दाल्भ्य (०३८-०८०)
यदासीत् तस्य भूपतेः (०३८-०८०)
तद् एव भगवद्ध्यान- (०३८-०८०)
परं चक्रे महामुने (०३८-०८०)
तत्याजार्थेषु ममताम् (०३८-०८१)
अहंकारं तथात्मनि (०३८-०८१)
समतां सर्वभूतेषु (०३८-०८१)
संप्राप पृथिवीपतिः (०३८-०८१)
यस्यात्मन्य् अपि विप्रर्षे (०३८-०८२)
नाहंमानो ऽस्ति कुत्रचित् (०३८-०८२)
मदावलेपो पूपादौ (०३८-०८२)
तस्य स्याद् इति का कथा (०३८-०८२)
एवं दाल्भ्य मनुष्येण (०३८-०८३)
समताम् अनुतिष्ठता (०३८-०८३)
सर्वभोगेषु संत्याज्यो (०३८-०८३)
ध्येयश् च पुरुषोत्तमः (०३८-०८३)
कुत्र तिष्ठति गोविन्दो (०३८-०८४)
बाह्यनिवृतचेतसि (०३८-०८४)
तस्मान् निःसङ्गचित्तेन (०३८-०८४)
शक्यश् चिन्तयितुं हरिः (०३८-०८४)
प्रीतिद्वेषादयस् त्यक्त्वा (०३८-०८५)
महर्षे यस्य चेतसा (०३८-०८५)
प्रियातिथिस् तद्धृदये (०३८-०८५)
विष्णुर् मोक्षफलप्रदः (०३८-०८५)
कार्यारम्भेषु सर्वेषु (०३९-००१)
दुःस्वप्नेषु च सत्तम (०३९-००१)
अमङ्गल्येषु सर्वेषु (०३९-००१)
यज् जप्तव्यं तद् उच्यताम् (०३९-००१)
येनारम्भाश् च सिध्यन्ति (०३९-००२)
दुःस्वप्नं चोपशाम्यति (०३९-००२)
अमङ्गलानां सर्वेषां (०३९-००२)
प्रतिघातश् च जायते (०३९-००२)
जनार्दनं भूतपतिं जगद्गुरुं (०३९-००३)
स्मरन् मनुष्यः सततं महामुने (०३९-००३)
दुष्टान्य् अशेषाण्य् अपहन्ति साधयत्य् (०३९-००३)
अशेषकार्याणि तथा यदीच्छति (०३९-००३)
शृणुष्व चान्यद् वदतो ममाखिलं (०३९-००४)
वदामि यत् ते द्विजवर्य मङ्गलम् (०३९-००४)
सर्वार्थसिद्धिं प्रददाति यः सदा (०३९-००४)
निहन्त्य् अशेषाणि च पातकानि (०३९-००४)
प्रतिष्ठितं यत्र जगच् चराचरं (०३९-००५)
जगच् च यो यो जगतश् च हेतुः (०३९-००५)
जगच् च पात्य् अत्ति च यः स सर्वदा (०३९-००५)
ममास्तु मङ्गल्यविवृद्धये हरिः (०३९-५-४४)
व्योमाम्बुवाय्वग्निमहीस्वरूपैर् (०३९-००६)

विस्तारवान् यो ऽणुतरो ऽणुभागात् (०३९-००६)
स स्थूलसूक्ष्मः सततेश्वरेश्वरो (०३९-००६)
यस्मात् परस्तात् पुरुषाद् अनन्ताद् (०३९-००७)
अनादिमध्याद् अखिलं न किंचित् (०३९-००७)
स हेतुहेतुः परमेश्वरेश्वरो (०३९-००७)
हिरण्यगर्भाच्युतरुद्ररूपी (०३९-००८)
सृजत्य् अशेषं परिपाति हन्ति (०३९-००८)
गुणाश्रयी यो भगवान् स सर्वदा (०३९-००८)
परः सुराणां परमो ऽसुराणां (०३९-००९)
परो मुनीनां परमो यतीनाम् (०३९-००९)
परः समस्तस्य च यः स देवो (०३९-००९)
ध्यातो यतीनाम् अपकल्मषैर् यो (०३९-०१०)
ददाति मुक्तिं परमेश्वरेश्वरः (०३९-०१०)
मनोभिर् आद्यः पुरुषः स सर्वदा (०३९-०१०)
सुरेन्द्रवैवस्वतवित्तपाम्बुप- (०३९-०११)
स्वरूपरूपी परिपाति यो जगत् (०३९-०११)
स शुद्धसत्त्वः परमेश्वरेश्वरो (०३९-०११)
यन्नामकीर्तनतो विमुच्यते (०३९-०१२)
अनेकजन्मार्जितपापसंचयैः (०३९-०१२)
पापेन्धनाग्निः स सदैव निर्मलो (०३९-०१२)
येनोद्धृतेयं धरणी रसातलाद् (०३९-०१३)
अशेषसत्त्वस्थितिकारणाद् इदम् (०३९-०१३)
बिभर्ति विश्वं जगतः स मूलवान् (०३९-०१३)
पादेषु वेदा जठरे चराचरं (०३९-०१४)
रोमस्व् अशेषा मुनयो मुखे मखाः (०३९-०१४)
यस्येश्वरेशस्य स सर्वदा प्रभुर् (०३९-०१४)
समस्तयज्ञाङ्गमयं वपुर् विभोर् (०३९-०१५)
यस्याङ्गम् ईशेश्वरसंस्तुतस्य (०३९-०१५)
वराहरूपो भगवान् स सर्वदा (०३९-०१५)
विक्षोभ्य सर्वोदधितोयसंपदं (०३९-०१६)
दधार धात्रीं जगतश् च योद्भवः (०३९-०१६)
यज्ञेश्वरो यज्ञपुमान् स सर्वदा (०३९-०१६)
पातालमूलेश्वरभोगिसंहतौ (०३९-०१७)
विन्यस्य पादौ पृथिवीं च बिभ्रतः (०३९-०१७)
यस्योपमानं न बभूव सो ऽच्युतो (०३९-०१७)
विघर्घरं यस्य च बृंहतो मुहुः (०३९-०१८)
सनन्दनाद्यैर् जनलोकसंस्थितैः (०३९-०१८)
श्रुतं जयेत्युक्तिपरैः स सर्वदा (०३९-०१८)
एकार्णवाद् यस्य महीयसो महीम् (०३९-०१९)
आदाय वेगेन समुत्पतिष्यतः (०३९-०१९)
नुतं वपुर् योगिवरैः स सर्वदा (०३९-०१९)
हतो हिरण्याक्षमहासुरः पुरा (०३९-०२०)
पुराणपुंसा परमेण येन (०३९-०२०)
वराहरूपः स पतिः प्रजापतेर् (०३९-०२०)
दंष्ट्राकरालं सुरभीतिनाशनं (०३९-०२१)
कृत्वा वपुर् दिव्यनृसिंहरूपिणं (०३९-०२१)
त्रातं जगद् येन स सर्वदा प्रभुर् (०३९-०२१)
दैत्येन्द्रवक्षःस्थलदारदारुणैः (०३९-०२२)
करोरुहैः शत्रुरुजानुकारिभिः (०३९-०२२)

चिच्छेद लोकस्य भयानि चाव्ययो (०३९-०२२)
दन्तान्तदीप्तिद्युतिनिर्मलाणि (०३९-०२३)
चकार सर्वाणि दिशं मुखानि (०३९-०२३)
निनादवित्रासितदानवो ह्य् असौ (०३९-०२३)
यन्नामसंकीर्तनतो महाभयाद् (०३९-०२४)
विमोक्षम् आप्नोति न संशयं नरः (०३९-०२४)
समस्तलोकार्तिहरो नृकेसरी (०३९-०२४)
सटाकलापभ्रमणानिलहताः (०३९-०२५)
स्फुटन्ति यस्याम्बुधराः समन्ततः (०३९-०२५)
स दिव्यसिंहः स्फुरिताकुलेक्षणो (०३९-०२५)
यदीक्षणज्योतिषि रश्मिमण्डलं (०३९-०२६)
प्रलीनम् एव न रराज भास्वतः (०३९-०२६)
कुतः शशाङ्कस्य स सिंहरूपधृङ् (०३९-०२६)
द्रवन्ति दैत्याः प्रणमन्ति देवता (०३९-०२७)
नश्यन्ति रक्षांस्य् अपयान्ति चारयः (०३९-०२७)
यत्कीर्तनात् सो ऽद्भुतरूपकेसरी (०३९-०२७)
अशेषदेवेशनरेश्वरेश्वरैः (०३९-०२८)
सदा स्तुतं यच् चरितं महाद्भुतम् (०३९-०२८)
स सर्वलोकार्तिहरो महाहरिर् (०३९-०२८)
ऋक्कारितं यो यजुषातिशान्तिमत् (०३९-०२९)
सामध्वनिध्वस्तसमस्तपातकम् (०३९-०२९)
चक्रे जगद् वामनकः स सर्वदा (०३९-०२९)
यत्पादविन्यासपवित्रतां मही (०३९-०३०)
ययौ वियद् ऋग्यजुषाम् उदीरणात् (०३९-०३०)
स वामनो दिव्यशरीरधृक् सदा (०३९-०३०)
यस्मिन् प्रयाते सुरभूभृतो ऽध्वरं (०३९-०३१)
ननाम खेदाद् अवनिः ससागरा (०३९-०३१)
स वामनः सर्वजगन्मयः सदा (०३९-०३१)
महाद्युतौ दैत्यपतेर् महाध्वरं (०३९-०३२)
यस्मिन् प्रविष्टे क्षुभितं महासुरैः (०३९-०३२)
स वामनो ऽन्तस्थितसप्तलोकधृङ् (०३९-०३२)
समस्तदेवेष्टिमयं महाद्युतिर् (०३९-०३३)
दधार यो रूपम् अतीन्द्रियं प्रभुः (०३९-०३३)
त्रिविक्रमाक्रान्तजगत्त्रयः सदा (०३९-०३३)
सङ्घैः सुराणां दिवि भूतले स्थितैस् (०३९-०३४)
तथा मनुष्यैर् गगने स सर्वदा (०३९-०३४)
स्तुतः क्रमाद् यः प्रददे स सर्वदा (०३९-०३४)
क्रान्त्वा धरित्रीं गगनं तथा दिवं (०३९-०३५)
मरुत्पतेर् यः प्रददौ त्रिविष्टपम् (०३९-०३५)
स देवदेवो भुवनेश्वरेश्वरो (०३९-०३५)
अनुग्रहं चापि बलेर् अनुत्तमं (०३९-०३६)
चकार यश् चेन्द्रपदोपलक्षणं (०३९-०३६)
सुरांश् च यज्ञस्य भुजः स सर्वदा (०३९-०३६)
रसातलाद् येन पुरा समाहृताः (०३९-०३७)
समस्तवेदा वरवाजिरूपिणा (०३९-०३७)
स कैटभारिर् मधुसूदनो महान् (०३९-०३७)
निःक्षत्रियां यश् च चकार मेदिनीम् (०३९-०३८)
अनेकशो बाहुवनं तथाछिनत् (०३९-०३८)
यः कार्तवीर्यस्य स भार्गवोत्तमो (०३९-०३८)

निहत्य वालिं च कपीश्वरं हि यो (०३९-०३९)
निबध्य सेतुं जलधौ दशाननम् (०३९-०३९)
जघान चान्यान् रजनीचरान् असौ (०३९-०३९)
चिक्षेप बालः शकटं बभञ्ज यो (०३९-०४०)
यमलार्जुनौ कंसम् अरिं जघान (०३९-०४०)
ममर्द चाणूरमुखं स सर्वदा (०३९-०४०)
प्रातः सहस्रांशुमरीचिनिर्मलं (०३९-०४१)
करेण बिभ्रद् भगवान् सुदर्शनम् (०३९-०४१)
कौमोदकीं चापि गदाम् अनुत्तमां (०३९-०४१)
हिमेन्दुकुन्दस्फटिकाभ्रकोमलं (०३९-०४२)
मुखानिलापूरितम् ईश्वरेश्वरः (०३९-०४२)
मध्याह्नकाले च स शङ्खम् उत्तमम् (०३९-०४२)
तथापराह्णे प्रविकासिपङ्कजं (०३९-०४३)
वक्षःस्थलेन श्रियम् उद्वहद् विभुः (०३९-०४३)
विस्तारिपद्मोत्पलपत्रलोचनो (०३९-०४३)
सर्वेषु कालेषु समस्तदेशेष्व् (०३९-०४४)
अशेषकार्येषु तथेश्वरेश्वरः (०३९-०४४)
सर्वैः स्वरूपैर् भगवान् अनादिमान् (०३९-०४४)
एतत् पठन् दाल्भ्य समस्तपापैर् (०३९-०४५)
विमुच्यते विष्णुपरो मनुष्यः (०३९-०४५)
सिध्यन्ति कार्याणि तथास्य सर्वाण्य् (०३९-०४५)
अर्थान् अवाप्नोति तथा यथेष्टम् (०३९-०४५)
दुःस्वप्नं प्रशमम् उपैति पठ्यमाने (०३९-०४६)
स्तोत्रे ऽस्मिञ् श्रवणविधौ सदोत्थितस्य (०३९-०४६)
प्रारम्भो द्रुतम् उपयाति सिद्धिम् ईशः (०३९-०४६)
पापानि क्षपयति चास्य वासुदेवः (०३९-०४६)
मङ्गल्यं परमम् इदं सदार्थसिद्धिं (०३९-०४७)
निर्विघ्न त्व् अधिकफलं सदा ददाति (०३९-०४७)
किं लोके तद् इह परत्र चास्ति पुंसाम् (०३९-०४७)
यद् विष्णुप्रवणधिया न दाल्भ्य साध्यम् (०३९-०४७)
देवेन्द्रस् त्रिभुवनम् अर्थम् एकपिङ्गः (०३९-०४८)
सर्वर्द्धिं त्रिभुवनगां च कार्तवीर्यः (०३९-०४८)
वैदेहः परमपदं प्रसाद्य विष्णुं (०३९-०४८)
संप्राप्तः सकलफलप्रदो हि विष्णुः (०३९-०४८)
सर्वारम्भेषु दाल्भ्यैतद् (०३९-०४९)
दुःस्वप्नेषु च पण्डितः (०३९-०४९)
जपेद् एकमतिर् विष्णौ (०३९-०४९)
तथामङ्गल्यदर्शने (०३९-०४९)
शमं प्रयान्ति दुष्टानि (०३९-०५०)
ग्रहपीडाश् च दारुणाः (०३९-०५०)
कर्मारम्भाश् च सिध्यन्ति (०३९-०५०)
पुण्यम् आप्नोति चोत्तमम् (०३९-०५०)
हरिर् ददाति भद्राणि (०३९-०५१)
मङ्गल्यस्तुतिसंस्तुतः (०३९-०५१)
करोत्य् अखिलरूपैश् च (०३९-०५१)
रक्षाम् अक्षतशक्तिधृक् (०३९-०५१)
कुर्वीत किं पुमान् स्थानं (०४०-००१)
कः पुमान् ब्रह्मणो बलम् (०४०-००१)
ब्रह्मणश् च कथं भेदो (०४०-००१)

ज्ञेयो ऽभिन्नफलप्रदः (०४०-००१)
स्वकर्मणा धनं लब्ध्वा (०४०-००२)
नित्यनैमित्तिकाः क्रियाः (०४०-००२)
कुर्वीत शुद्धिम् आस्थाय (०४०-००२)
स्वेच्छया च तथा परः (०४०-००२)
त्यक्त्वा रागादिकान् दोषान् (०४०-००३)
समः सर्वत्र वै भवेत् (०४०-००३)
सर्वत्र मैत्रीं कुर्वीत (०४०-००३)
दद्याद् इष्टानि चार्थिनाम् (०४०-००३)
कुर्याद् दीनेषु करुणां (०४०-००४)
दुःशीलान् परिवर्जयेत् (०४०-००४)
मुदितां धर्मशीलेषु (०४०-००४)
भावनां मुनिसत्तम (०४०-००४)
एकत्र वा जगन्नाथे (०४०-००५)
भावनां पुरुषोत्तमे (०४०-००५)
निःशेषार्थमलापेतां (०४०-००४)
शुद्धां कुर्वीत पण्डितः (०४०-००५)
शरीरबाह्यतां शश्वद् (०४०-००६)
धिंसां कुर्वीत न क्वचित् (०४०-००६)
निन्दावमानम् अन्येषां (०४०-००६)
यच् चान्यद् उपघातकम् (०४०-००६)
शरीरवाङ्मनःशुद्धिं (०४०-००७)
कुर्वीत च सदात्मनः (०४०-००७)
भूतानाम् उपकारश् च (०४०-००७)
तपोभिश् चात्मकर्षणम् (०४०-००७)
एष धर्मः समासेन (०४०-००८)
दाल्भ्याख्यातो मया तव (०४०-००८)
अधर्मश् चायम् एवोक्तो (०४०-००८)
विपरीतो मनीषिभिः (०४०-००८)
एते यत्र गुणाः पूर्वं (०४०-००९)
कथिता ज्ञानसंयुताः (०४०-००९)
ब्रह्मणः साश्रयः शुद्ध (०४०-००९)
उपचारात् तद् एव सः (०४०-००९)
एकस्यैव सतस् तस्य (०४०-०१०)
ब्रह्मणो द्विजसत्तम (०४०-०१०)
नाम्नां बहुत्वं लोकानाम् (०४०-०१०)
उपकारकरं शृणु (०४०-०१०)
निमित्तशक्तयो नाम्नो (०४०-०११)
भेदतस् तदुदीरणात् (०४०-०११)
विभिन्नान्य् एव साध्यन्ते (०४०-०११)
फलानि कुरुनन्दन (०४०-०११)
यच्छक्ति नाम तत् तस्य (०४०-०१२)
तत् तस्मिन्न् एव वस्तुनि (०४०-०१२)
साधकं पुरुषव्याघ्र (०४०-०१२)
सौम्यक्रूरेषु वस्तुषु (०४०-०१२)
वासुदेवाच्युतानन्त- (०४०-०१३)
सत्याज्यपुरुषोत्तमैः (०४०-०१३)
परमात्मेश्वराद्यैश् च (०४०-०१३)
स्तुतो नामभिर् अव्ययः (०४०-०१३)

निमित्तभावं भगवान् (०४०-०१४)
विमुक्तेर् यात्य् अधोक्षजः (०४०-०१४)
तथान्यकार्यसंसिद्धौ (०४०-०१४)
यद् यत् तत् तन् निशामय (०४०-०१४)
धनकृद् धर्मकृद् धर्मी (०४०-०१५)
धर्मात्मा विश्वकृच् छुचिः (०४०-०१५)
शुचिषद् विष्णुर् अब्जाक्षः (०४०-०१५)
पुष्कराक्षो ह्य् अधोक्षयः (०४०-०१५)
शुचिश्रवाः शिपिविष्टो (०४०-०१५)
यज्ञेशो यज्ञभावनः (०४०-०१५)
नाम्नाम् इत्य् एवम् आदीनां (०४०-०१६)
समुच्चारणतो नरः (०४०-०१६)
धर्मं महान्तम् आप्नोति (०४०-०१६)
पापबन्धक्षयं तथा (०४०-०१६)
तथार्थप्राप्तये ब्रह्मन् (०४०-०१७)
देवनामानि मे शृणु (०४०-०१७)
येषां समुच्चारणतो (०४०-०१७)
वित्तम् आप्नोति भक्तिमान् (०४०-०१७)
श्रीदः श्रीशः श्रीनिवासः (०४०-०१८)
श्रीधरः श्रीनिकेतनः (०४०-०१८)
श्रियः पतिः श्रीपरमः (०४०-०१८)
श्रीमाञ् श्रीवत्सलाञ्च्छनः (०४०-०१८)
नृसिंहो दुष्टदामनो (०४०-०१९)
जयो विष्णुस् त्रिविक्रमः (०४०-०१९)
स्तुतः प्रयच्छते चार्थम् (०४०-०१९)
एवम् आदिभिर् अच्युतः (०४०-०१९)
काम्यः कामप्रदः कान्तः (०४०-०२०)
कामपालस् तथा हरिः (०४०-०२०)
आनन्दो माधवश् चैव (०४०-०२०)
कामसंसिद्धये नृप (०४०-०२०)
रामः परशुरामश् च (०४०-०२१)
नृसिंहो विष्णुर् एव च (०४०-०२१)
विक्रमश् चैवम् आदीनि (०४०-०२१)
जप्यान्य् अरिजिगीषुभिः (०४०-०२१)
विद्याम् अभ्यसता नित्यं (०४०-०२२)
जप्तव्यः पुरुषोत्तमः (०४०-०२२)
दामोदरं बन्धगतो (०४०-०२२)
नित्यम् एव जपन् नरः (०४०-०२२)
केशवं पुण्डरीकाक्षं (०४०-०२३)
पुष्कराक्षं तथा जपेत् (०४०-०२३)
नेत्रबाधासु सर्वासु (०४०-०२३)
हृषीकेशं भयेषु च (०४०-०२३)
अच्युतं चामृतं चैव (०४०-०२४)
जपेद् औषधकर्मणि (०४०-०२४)
भ्राजिष्णुम् अग्निहानौ च (०४०-०२४)
जपेद् आलम्बने स्थितम् (०४०-०२४)
संग्रामाभिमुखं गच्छन् (०४०-०२५)
संस्मरेद् अपराजितम् (०४०-०२५)
पातालनरसिंहं च (०४०-०२५)

जलप्रतरणे स्मरेत् (०४०-०२५)
चक्रिणं गदिनं चैव (०४०-०२६)
शार्ङ्गिनं खड्गिनं तथा (०४०-०२६)
क्षेमार्थं प्रसवन् राजन् (०४०-०२६)
दिक्षु प्राच्यादिषु स्मरेत् (०४०-०२६)
अजितं चाधिकं चैव (०४०-०२७)
सर्वं सर्वश्वरं तथा (०४०-०२७)
संस्मरेत् पुरुषो भक्त्या (०४०-०२७)
व्यवहारेषु सर्वदा (०४०-०२७)
नारायणं सर्वकालं (०४०-०२८)
क्षुतप्रस्खलितादिषु (०४०-०२८)
ग्रहनक्षत्रपीडासु (०४०-०२८)
देवबाधाटवीषु च (०४०-०२८)
अस्युवैरिनिरोधेषु (०४०-०२९)
व्याघ्रसिंहादिसंकटे (०४०-०२९)
अन्धकारे च तीव्रे च (०४०-०२९)
नरसिंहम् अनुस्मरेत् (०४०-०२९)
तरत्य् अखिलदुर्गाणि (०४०-०२९)
तापार्तो जलशायिनम् (०४०-०२९)
गरुडध्वजानुस्मरणाद् (०४०-०३०)
आपद्भ्यो मुच्यते नरः (०४०-०३०)
ज्वरदुष्टशिरोरोग- (०४०-०३०,*(४४))
विषवीर्यं प्रशाम्यति (०४०-०३०,*(४४))
स्नाने देवार्चने होमे (०४०-०३१)
प्रणिपाते प्रदक्षिणे (०४०-०३१)
कीर्तयेद् भगवन्नाम (०४०-०३१)
वासुदेवेति तत्परः (०४०-०३१)
स्थगने वित्तधान्यादेर् (०४०-०३२)
अपध्याने च दुष्टजे (०४०-०३२)
कुर्वीत तन्मना भूत्वा (०४०-०३२)
अनन्ताच्युतकीर्तनम् (०४०-०३२)
नारायणं शार्ङ्गधरं (०४०-०३३)
श्रीधरं पुरुषोत्तमम् (०४०-०३३)
वामनं खड्गिनं चैव (०४०-०३३)
दुःस्वप्नेषु च संस्मरेत् (०४०-०३३)
एकार्णवाहिपर्यङ्क- (०४०-०३४)
शायिनं च नरः स्मरेत् (०४०-०३४)
वाय्वग्नीगृहदाहाय (०४०-०३४)
प्रवृद्धाव् उपलक्ष्य च (०४०-०३४)
विद्यार्थी मोहविभ्रान्ति- (०४०-०३५)
वेगाघूर्णितमानसः (०४०-०३५)
मनुष्यो मुनिशार्दूल (०४०-०३५)
सदाश्वशिरसं स्मरेत् (०४०-०३५)
बलभद्रं समृद्ध्यर्थी (०४०-०३६)
सीरकर्मणि कीर्तयेत् (०४०-०३६)
जगत्सूतिम् अपत्यार्थी (०४०-०३६)
स्तुवन् भक्त्या न सीदति (०४०-०३६)
जप्तव्यं सुप्रजाख्यं तु (०४०-०३७)
देवदेवस्य सत्तम (०४०-०३७)

दम्पत्योर् आत्मसंबन्धे (०४०-०३७)
विवाहाख्ये पुनः पुनः (०४०-०३७)
श्रीशं सर्वाभ्युदयिके (०४०-०३८)
कर्मणि संप्रकीर्तयेत् (०४०-०३८)
अरिष्टान्तेष्व् अशेषेषु (०४०-०३८)
विशोकं च सदा जपेत् (०४०-०३८)
मरुत्प्रतापाग्निजल- (०४०-०३९)
बन्धनादिषु मृत्युषु (०४०-०३९)
स्वातन्त्र्यपरतन्त्रेषु (०४०-०३९)
वासुदेवं जपेद् बुधः (०४०-०३९)
सर्वार्थशक्तियुक्तस्य (०४०-०४०)
देवदेवस्य चक्रिणः (०४०-०४०)
यद् वाभिरोचते नाम (०४०-०४०)
तत् सर्वार्थेषु कीर्तयेत् (०४०-०४०)
सर्वार्थसिद्धिम् आप्नोति (०४०-०४१)
नाम्नाम् एकार्थता यतः (०४०-०४१)
सर्वाण्य् एतानि नामानि (०४०-०४१)
परस्य ब्रह्मणो ऽनघ (०४०-०४१)
एवम् एतानि नामानि (०४०-०४२)
देवदेवस्य कीर्तयेत् (०४०-०४२)
यं यं कामम् अभिध्यायेत् (०४०-०४२)
तं तम् आप्नोत्य् असंशयम् (०४०-०४२)
सर्वान् कामान् अवाप्नोति (०४०-०४२)
समाराध्य जगद्गुरुम् (०४०-०४२)
तन्मयत्वेन गोविन्दम् (०४०-०४३)
इत्य् एतद् दाल्भ्य नान्यथा (०४०-०४३)
तन्मयो वाञ्छितान् कामान् (०४०-०४३)
यद् अवाप्नोति मानवः (०४०-०४३)
निमित्तशक्तिः सा तस्य (०४०-०४४)
न भेदो दाल्भ्य मानसः (०४०-०४४)
वाङ्मनःकायिकं द्वेषं (०४०-०४४)
यच् च कुर्वन् प्रयात्य् अधः (०४०-०४४)
स्वरूपशक्तिः सा तस्य (०४०-०४५)
मतिभेदकृतं न तद् (०४०-०४५)
स शाक्तो निर्गुणः शुद्धो (०४०-०४५)
ब्रह्मभूतो जगद्गुरुः (०४०-०४५)
कर्मभिर् नामभिर् जीवो (०४०-०४६)
दृश्यते दाल्भ्य नैकधा (०४०-०४६)
यथा च गङ्गासलिलं (०४०-०४६)
सितम् अत्यन्तनिर्मलम् (०४०-०४६)
एकस्वरूपम् अध्यात्मं (०४०-०४७)
पुण्यापुण्यविभेदिभिः (०४०-०४७)
भ्रान्तिज्ञानान्वितैर् मिश्रं (०४०-०४७)
सितासितविचेष्टितैः (०४०-०४७)
दृश्यते नैकधा दाल्भ्य (०४०-०४७)
प्राणिभिर् भिन्नबुद्धिभिः (०४०-०४७)
तापार्तास् तापशमनम् (०४०-०४८)
अतिप्रीत्यतिशीतलम् (०४०-०४८)
कफदोषान्वितैर् नाति- (०४०-०४८)

प्रीतियुक्तैर् निरंशुभिः (०४०-०४८)
स्त्रीयोग्यम् एतन् नेतीति (०४०-०४९)
प्रीत्यप्रीतिसमन्वितैः (०४०-०४९)
मध्यस्थबुद्ध्या चैवान्ये (०४०-०४९)
नातिशीतातितापिभिः (०४०-०४९)
पवित्रम् इत्य् एतद् इति (०४०-०५०)
पुण्यबुद्ध्या तथापरैः (०४०-०५०)
मृष्टम् एतद् इतीत्य् अन्यैर् (०४०-०५०)
मत्स्याढ्यम् इति चापरैः (०४०-०५०)
तुल्यबुद्ध्यापि चैवान्यैर् (०४०-०५१)
हेयबुद्ध्या तथापरैः (०४०-०५१)
नातिवेगातिवेगं च (०४०-०५१)
हृष्टोद्विग्नैस् तथापरैः (०४०-०५१)
किम् एतेनेति चैवान्यैः (०४०-०५२)
परदाराभिलाषिभिः (०४०-०५२)
दाल्भ्य संदृश्यते चान्यैर् (०४०-०५२)
जन्तुभिर् भायकातरैः (०४०-०५२)
तद् एव पूयं पश्यन्ति (०४०-०५२)
प्रेताद्या हृतिपापिनः (०४०-०५२)
एतैश् चान्यैश् च बहुभिर् (०४०-०५३)
विशेषैर् बहुजन्तुभिः (०४०-०५३)
विशेषवत् कर्मभेदाद् (०४०-०५३)
एकम् एव हि दृश्यते (०४०-०५३)
नैते गङ्गाम्भसो भेदाः (०४०-०५४)
प्रीत्यप्रीतिप्रदायिनः (०४०-०५४)
प्राणिनां चेतसो भेदाद् (०४०-०५४)
दाल्भ्यैते कर्मयोनयः (०४०-०५४)
समस्तकर्मणा दाल्भ्य (०४०-०५५)
संक्षये भयम् एत्य् असौ (०४०-०५५)
विशेषकारणाभावाद् (०४०-०५५)
विशेषाभाव एव हि (०४०-०५५)
विष्णवाख्यम् एवं तद् ब्रह्म (०४०-०५६)
शुद्धम् अत्यन्तनिर्मलम् (०४०-०५६)
अभेदं बहुधा भिन्नं (०४०-०५६)
दृश्यते कर्मभेदिभिः (०४०-०५६)
योगिभिर् दृश्यते शुद्धं (०४०-०५७)
रागाद्युपशमामलैः (०४०-०५७)
रागिभिर् विषयाकारं (०४०-०५७)
तद् एव ब्रह्म दृश्यते (०४०-०५७)
कर्ममार्गाश्रितैः कर्म- (०४०-०५८)
भोक्तृत्वे च तथेष्यते (०४०-०५८)
किम् अप्य् अस्तीति चैवान्यैर् (०४०-०५८)
अविवेकिभिर् उच्यते (०४०-०५८)
सर्वम् एतत् तद् एवेति (०४०-०५९)
वदन्त्य् अद्वैतवादिनः (०४०-०५९)
प्रत्यक्षं दृश्यम् एवेति (०४०-०५९)
वदन्त्य् अन्ये दुरुक्तिभिः (०४०-०५९)
वदन्त्य् अन्ये तद् एवाहं (०४०-०६०)
नास्तीत्य् अन्ये वदन्ति तत् (०४०-०६०)

तिर्यङ्मनुष्यदेवाख्यं (०४०-०६०)
तद् अन्यैर् अभिधीयते (०४०-०६०)
वन्द्यबुद्ध्या तु तत् कैश्चिद् (०४०-०६१)
ध्येयबुद्ध्या तथापरैः (०४०-०६१)
गम्यबुद्ध्या तथान्यैश् च (०४०-०६१)
लभ्यबुद्ध्या च जन्तुभिः (०४०-०६१)
गृह्यते तत् परं ब्रह्म (०४०-०६२)
रिपुबुद्ध्या तथापरैः (०४०-०६२)
आत्मपुत्रसुहृद्भर्तृ- (०४०-०६२,*(४५))
परबुद्ध्या तथापरैः (०४०-*(४५))
परबुद्ध्या च नैकधा (०४०-०६२)
प्राणिभिः कर्मवैषम्य- (०४०-०६३)
भिन्नबुद्धिभिर् अव्ययम् (०४०-०६३)
तद् ब्रह्म गृह्यते दाल्भ्य (०४०-०६३)
परमार्थं निबोध मे (०४०-०६३)
भूतेन्द्रियान्तःकरण- (०४०-०६४)
प्रधानपुरुषात्मकम् (०४०-०६४)
अपरं ब्रह्मणो रूपं (०४०-०६४)
परं दाल्भ्य निशामय (०४०-०६४)
अहेयम् अक्षरं शुद्धम् (०४०-०६५)
असंभूतिनिरञ्जनम् (०४०-०६५)
विष्ण्वाख्यं परमं ब्रह्म (०४०-०६५)
यद् वै पश्यन्ति सूरयः (०४०-०६५)
यथैतद् भवता प्रोक्तं (०४१-००१)
धर्मार्थादेस् तु साधनम् (०४१-००१)
पत्नी नृणां मुनिश्रेष्ठ (०४१-००१)
योषितस् च तथा नरः (०४१-००१)
तच् छ्रोतुम् इच्छे विप्रर्षे (०४१-००२)
विधवा स्त्री न जायते (०४१-००२)
उपोषीतेन येनाग्र्या (०४१-००२)
पत्न्या च रहितो नरः (०४१-००२)
अशून्यशयना नाम (०४१-००३)
द्वितीयां शृणु तां मम (०४१-००३)
याम् उपोष्य न वैधव्यं (०४१-००३)
प्रयाति स्त्री द्विजोत्तम (०४१-००३)
पत्नीवियुक्तश् च नरो (०४१-००४)
न कदाचित् प्रजायते (०४१-००४)
शेते जगत्पतिः कृष्णः (०४१-००४)
श्रिया सार्धं यदा द्विज (०४१-००४)
अशून्यशयना नाम (०४१-००५)
तदा ग्राह्या हि सा तिथिः (०४१-००५)
कृष्णपक्षद्वितीयायां (०४१-००५)
श्रावणे द्विजसत्तम (०४१-००५)
इदम् उच्चारयेन् नाम (०४१-००६)
प्रणम्य जगतः पतिम् (०४१-००६)
श्रीवत्सधारिणं श्रीशं (०४१-००६)
भक्त्याभ्यर्च्य श्रिया सह (०४१-००६)
श्रीवत्सधारिञ् श्रीकान्त (०४१-००७)
श्रीधाम श्रीपते ऽच्युत (०४१-००७)

गार्हस्थ्यं मा प्रणाशं मे (०४१-००७)
यातु धर्मार्थकामदम् (०४१-००७)
अग्नयो मा प्रणश्यन्तु (०४१-००८)
मा प्रणश्यन्तु देवताः (०४१-००८)
पितरो मा प्रणश्यन्तु (०४१-००८)
मत्तो दाम्पत्यभेदतः (०४१-००८)
लक्ष्म्या प्रयुज्यते देव (०४१-००९)
न कदाचिद् यथा भवान् (०४१-००९)
तथा कलत्रसंबन्धो (०४१-००९)
देव मा मे विभिद्यताम् (०४१-००९)
लक्ष्म्या न शून्यं वरद (०४१-०१०)
यथा ते शयनं सदा (०४१-०१०)
शय्या ममाप्य् अशून्यास्तु (०४१-०१०)
तथैव मधुसूदन (०४१-०१०)
एवं प्रसाद्य पूजां च (०४१-०११)
कृत्वा लक्ष्म्यास् तथा हरेः (०४१-०११)
फलानि दद्याच् छय्यायाम् (०४१-०११)
अभीष्टानि जगत्पतेः (०४१-०११)
नक्तं प्रणम्यायतने (०४१-०१२)
हविर् भुञ्जीत वाग्यतः (०४१-०१२)
ब्राह्मणाय द्वितीये ऽह्नि (०४१-०१२)
शक्त्या दद्याच् च दक्षिणाम् (०४१-०१२)
एवं करोति यः सम्यग् (०४१-०१३)
नरो मासचतुष्टयम् (०४१-०१३)
तस्य जन्मत्रयं दाल्भ्य (०४१-०१३)
गृहभङ्गो न जायते (०४१-०१३)
अशून्यशयनश् चासौ (०४१-०१४)
धर्मकर्मार्थसाधकः (०४१-०१४)
भवत्य् अव्याहतैश्वर्यः (०४१-०१४)
पुरुषो नात्र संशयः (०४१-०१४)
नारी च दाल्भ्य धर्मज्ञा (०४१-०१५)
व्रतम् एतद् यथाविधि (०४१-०१५)
या करोति न सा शोच्या (०४१-०१५)
बन्धुवर्गस्य जायते (०४१-०१५)
वैधव्यं दुर्भगत्वं वा (०४१-०१६)
भर्तृत्यागं च सत्तम (०४१-०१६)
नाप्नोति जन्मत्रितयम् (०४१-०१६)
एतच् चीर्त्वा पतिव्रता (०४१-०१६)
उपवासाश्रितं सम्यग् (०४२-००१)
लोकद्वयफलप्रदम् (०४२-००१)
कथितं भवता सर्वं (०४२-००१)
यत् पृष्टो ऽसि मया द्विज (०४२-००१)
अन्यद् इच्छाम्य् अहं श्रोतुं (०४२-००२)
तद् भवान् प्रब्रवीतु मे (०४२-००२)
संसारहेतुं मुक्तिं च (०४२-००२)
संसारान् मुनिसत्तम (०४२-००२)
अविद्याप्रभवं कर्म (०४२-००३)
हेतुभूतं द्विजोत्तम (०४२-००३)
संसारस्यास्य तन्मुक्तिः (०४२-००३)

संक्षेपाच् छ्रूयतां मम (०४२-००३)
स्वजातिविहितं कर्म (०४२-००४)
लोभद्वेषविवर्जितम् (०४२-००४)
कुर्वतः क्षीयते पूर्वं (०४२-००४)
मन्युबन्धश् च नेष्यते (०४२-००४)
अपूर्वसंभवाभवात् (०४२-००५)
क्षयं यात्य् आदिकर्मणि (०४२-००५)
दाल्भ्य संसारविच्छेदः (०४२-००५)
कारणाभावसंभवः (०४२-००५)
भवत्य् असंशयं चान्यच् (०४२-००६)
श्रूयताम् अत्र कारणम् (०४२-००६)
संसारान् मुच्यते दाल्भ्य (०४२-००६)
समासाद् वदतो मम (०४२-००६)
गृहीतकर्मणा येन (०४२-००७,*(४६))
पुंसां जातिर् द्विजोत्तम (०४२-००७,*(४६))
तत्प्रायश्चित्तभूतं वै (०४२-००७)
शृणु कर्मक्षयावहम् (०४२-००७)
ब्राह्मणक्षत्रियविशां (०४२-००८)
शूद्रान्त्यानां च सत्तम (०४२-००८)
स्वजातिविहितं कर्म (०४२-००८)
रागद्वेषादिवर्जितम् (०४२-००८)
जातिप्रदस्य क्षयदं (०४२-००९)
तद् एवाद्यस्य कर्मणः (०४२-००९)
ज्ञानकारणभावं च (०४२-००९)
तद् एव प्रतिपद्यते (०४२-००९)
पुमांश् चाधिगतज्ञानो (०४२-०१०)
भेदं नाप्नोति सत्तम (०४२-०१०)
ब्रह्मणा विष्णुसंज्ञेन (०४२-०१०)
परमेणाव्ययात्मना (०४२-०१०)
एतत् ते कथितं दाल्भ्य (०४२-०११)
संसारस्य समासतः (०४२-०११)
कारणं भवमुक्तिश् च (०४२-०११)
जायते योगिनो यथा (०४२-०११)
इति दाल्भ्यः पुलस्त्येन (०४३-००१)
यथावत् प्रतिबोधितः (०४३-००१)
आराधयाम् आस हरिं (०४३-००१)
लेभे कामांश् च वाञ्छितान् (०४३-००१)
तथा त्वम् अपि दैत्येन्द्र (०४३-००२)
केशवाराधनं कुरु (०४३-००२)
आराध्य तं जगन्नाथं (०४३-००२)
न कश्चिद् अवसीदति (०४३-००२)
इति शुक्रवचः श्रुत्वा (०४३-००३)
प्रह्लादो मधुसूदनम् (०४३-००३)
आराध्य प्राप्तवान् कृत्स्नं (०४३-००३)
त्रैलोकैश्वर्यम् ऊर्जितम् (०४३-००३)
एतन् मयोक्तं सकलं (०४३-००४)
तव भूमिप पृच्छतः (०४३-००४)
अनाराध्याच्युतं देवं (०४३-००४)
कः कामान् प्राप्नुते नरः (०४३-००४)

अम्बरीसो नरपतिर् (०४३-००५)
विष्णोर् माहात्म्यम् उत्तमम् (०४३-००५)
श्रुत्वा बभूव सततं (०४३-००५)
केशवार्पितमानसः (०४३-००५)
एवं त्वम् अपि कौरव्य (०४३-००६)
यदि मुक्तिम् अभीष्यसि (०४३-००६)
भोगान् वा विलुपान् देवात् (०४३-००६)
तस्माद् आराधयाच्युतम् (०४३-००६)
ददाति वाञ्छितान् कामान् (०४३-००७)
सकामैर् अर्चितो हरिः (०४३-००७)
मुक्तिं ददाति गोविन्दो (०४३-००७)
निष्कामैर् अभिपूजितः (०४३-००७)
भगवान् अवतीर्णो ऽभून् (०४३-००८)
मर्त्यलोकं जनार्दनः (०४३-००८)
भारावतरणार्थाय (०४३-००८)
भुवो भूतपतिर् हरिः (०४३-००८)
मानुषत्वे च गोविन्दो (०४३-००९)
मम पूर्वपितामहैः (०४३-००९)
चकार प्रीतिम् अतुलां (०४३-००९)
सामान्यपुरुषो यथा (०४३-००९)
सारथ्यं कृतवांश् चैव (०४३-०१०)
तेषां सर्वेश्वरो हरिः (०४३-०१०)
निस्तीर्णो येन भीष्मौघो (०४३-०१०)
कुरुसैन्यमहोदधिः (०४३-०१०)
उपकारी महाभागः (०४३-०११)
स तेषां सर्ववस्तुषु (०४३-०११)
केशवः पाण्डुपुत्राणां (०४३-०११)
सुतानां जनको यथा (०४३-०११)
धन्यास् ते कृतपुण्याश् च (०४३-०१२)
मम पाण्डुसुता मताः (०४३-०१२)
विविशुर् ये परिष्वङ्गे (०४३-०१२)
गोविन्दभुजपञ्जरम् (०४३-०१२)
राज्यहेतोर् अरीञ् जघ्नुर् (०४३-०१३)
अकस्मात् पाण्डुनन्दनाः (०४३-०१३)
सप्तलोकैकनाथेन (०४३-०१३)
ये ऽभवन्न् एकशायिनः (०४३-०१३)
आत्मानम् अवगच्छामि (०४३-०१४)
भगवन् धूतकल्मषम् (०४३-०१४)
जातं निर्धूतपापे ऽस्मिन् (०४३-०१४)
कुले विष्णुपरिग्रहे (०४३-०१४)
एवं देववरस् तेषां (०४३-०१५)
प्रसादसुमुखो हरिः (०४३-०१५)
पृच्छतां कच्चिद् आचष्टे (०४३-०१५)
किंचिद् गुह्यं महात्मनाम् (०४३-०१५)
गुह्यं जनार्दनं यांस् तु (०४३-०१६)
धर्मपुत्रो युधिष्ठिरः (०४३-०१६)
पप्रच्छ धर्मान् अखिलांस् (०४३-०१६)
तन् ममाख्यातुम् अर्हसि (०४३-०१६)
धर्मार्थकाममोक्षेषु (०४३-०१७)

यद् गुह्यं मधुसूदनः (०४३-०१७)
तेषाम् अवोचद् भगवाञ् (०४३-०१७)
श्रोतुम् इच्छामि तत् त्व् अहम् (०४३-०१७)
बहूनि धर्मगुह्यानि (०४३-०१८)
धर्मपुत्राय केशवः (०४३-०१८)
पुरा प्रोवाच राजेन्द्र (०४३-०१८)
प्रसादसुमुखो हरिः (०४३-०१८)
शरतल्पगताद् भीष्माद् (०४३-०१९)
धर्माञ् श्रुत्वा युधिष्ठिरः (०४३-०१९)
पृष्टवान् यज् जगन्नाथं (०४३-०१९)
तन् मे निगदतः शृणु (०४३-०१९)
पञ्चमेनाश्वमेधेन (०४४-००१)
यदा स्नातो युधिष्ठिरः (०४४-००१)
तदा नारायणं देवं (०४४-००१)
प्रश्नम् एतम् अपृच्छत (०४४-००१)
भगवन् वैष्णवा धर्माः (०४४-००२)
किंफलाः किंपरायणाः (०४४-००२)
किं कृत्यम् अधिकृत्यैते (०४४-००२)
भवतोत्पादिताः पुरा (०४४-००२)
यदि ते पाण्डुषु स्नेहो (०४४-००३)
विद्यते मधुसूदन (०४४-००३)
श्रोतव्याश् चेन् मया धर्मास् (०४४-००३)
ततस् तान् कथयाखिलान् (०४४-००३)
पवित्राश् चैव ये धर्माः (०४४-००४)
सर्वपापप्रणाशनाः (०४४-००४)
तव वक्त्रच्युता देव (०४४-००४)
सर्वधर्मेष्व् अनुत्तमाः (०४४-००४)
याञ् श्रुत्वा ब्रह्महा गोघ्नः (०४४-००५)
पितृघ्नो गुरुतल्पगः (०४४-००५)
सुरापो वा कृतघ्नश् च (०४४-००५)
मुच्यते सर्वकिल्बिषैः (०४४-००५)
एतन् मे कथितं सर्वं (०४४-००६)
सभामध्ये ऽरिसूदन (०४४-००६)
वसिष्ठाद्यैर् महाभागैर् (०४४-००६)
मुनिभिर् भावितात्मभिः (०४४-००६)
ततो ऽहं तव देवेश (०४४-००७)
पादमूलम् उपागतः (०४४-००७)
धर्मान् कथय तान् देव (०४४-००७)
यद्य् अहं भवतः प्रियः (०४४-००७)
श्रुता मे मानवा धर्मा (०४४-००८)
वासिष्ठाश् च महामते (०४४-००८)
पराशरकृताश् चैव (०४४-००८)
तथात्रेयस्य धीमतः (०४४-००८)
श्रुता गार्ग्यस्य शङ्खस्य (०४४-००९)
लिखितस्य यमस्य च (०४४-००९)
जापालेश् च महाबाहो (०४४-००९)
मुनेर् द्वैपायनस्य च (०४४-००९)
उमामहेश्वराश् चैव (०४४-०१०)
जातिधर्माश् च पावनाः (०४४-०१०)

गुणेश् च गुणबाहोश् च (०४४-०१०)
काश्यपेयास् तथैव च (०४४-०१०)
बह्वायनकृताश् चैव (०४४-०११)
शाकुनेयास् तथैव च (०४४-०११)
अगस्त्यगीता मौद्गल्याः (०४४-०११)
शाण्डिल्याः सौरभास् तथा (०४४-०११)
भृगोर् अङ्गिरसश् चैव (०४४-०१२)
कश्यपोद्दालकास् तथा (०४४-०१२)
सौमन्तूग्रायणाग्राश् च (०४४-०१२)
पैलस्य च महात्मनः (०४४-०१२)
वैशम्पायनगीताश् च (०४४-०१३)
पिशङ्गमकृताश् च ये (०४४-०१३)
ऐन्द्राश् च वारुणाश् चैव (०४४-०१३)
कौबेरा वात्स्यपौणकाः (०४४-०१३)
आपस्तम्बाः श्रुता धर्मास् (०४४-०१४)
तथा गोपालकस्य च (०४४-०१४)
भृग्वङ्गिरःकृताश् चैव (०४४-०१४)
सौर्या हारीतकास् तथा (०४४-०१४)
याज्ञवल्क्यकृताश् चैव (०४४-०१४)
तथा सप्तर्षयश् च ये (०४४-०१४)
एताश् चान्याश् च विविधाः (०४४-०१५)
श्रुता मे धर्मसंहिताः (०४४-०१५)
भगवञ् श्रोतुम् इच्छामि (०४४-०१५)
तव वक्त्राद् विनिःसृतान् (०४४-०१५)
एवम् उक्तः स पार्थेन (०४४-०१६)
प्रत्युवाच जनार्दनः (०४४-०१६)
बहुमानाच् च प्रीत्या च (०४४-०१६)
धर्मपुत्रं युधिष्ठिरम् (०४४-०१६)
इष्टस् त्वं हि महाबाहो (०४४-०१७)
सदा मम युधिष्ठिर (०४४-०१७)
परमार्थं तव ब्रूयां (०४४-०१७)
किं पुनर् धर्मसंहिताम् (०४४-०१७)
परमज्ञानिभिः सिद्धैर् (०४४-०१८)
युञ्जद्भिर् अपि नित्यशः (०४४-०१८)
प्रशान्तस्येव दीपस्य (०४४-०१८)
गतिर् मम दुरत्यया (०४४-०१८)
सर्ववेदमयं ब्रह्म (०४४-०१९)
पवित्रम् ऋषिभिः स्तुतम् (०४४-०१९)
कथयिष्यामि ते राजन् (०४४-०१९)
धर्मं धर्मभृताम् वर (०४४-०१९)
एवम् उक्ते तु कृष्णेन (०४४-०२०)
ऋषयो ऽमिततेजसः (०४४-०२०)
समाजग्मुः सभामध्ये (०४४-०२०)
श्रोतुकामा हरेर् गिरम् (०४४-०२०)
देवगन्धर्वऋषयो (०४४-*(४७))
गुह्यकाश् च महायशाः (०४४-*(४७))
वालखिल्या महात्मानो (०४४-*(४७))
मुनयः संमितव्रताः (०४४-*(४७))
पावनान् सर्वधर्मेभ्यो (०४४-*(४७))

रहस्यान् द्विजसत्तम (०४४-*(४७))
वैष्णवान् अखिलान् धर्मान् (०४४-०२१)
यः पठेत् पापनाशनान् (०४४-०२१)
भवेयुर् अक्षयास् तस्य (०४४-०२१)
लोकाः सत्पुण्यभागिनः (०४४-०२१)
कृष्णदृष्टिहतं चास्य (०४४-०२२)
किल्बिषं संप्रणश्यति (०४४-०२२)
वैष्णवस्य च यज्ञस्य (०४४-०२२)
फलं प्राप्नोति मानवः (०४४-०२२)
कौतूहलसमाविष्टः (०४५-००१)
पप्रच्छेदं युधिष्ठिरः (०४५-००१)
यमलोकस्य चाध्वानम् (०४५-००१)
अन्तरं मानुषस्य च (०४५-००१)
कीदृशं किंप्रमाणं वा (०४५-००२)
कथं वान्तं जनार्दन (०४५-००२)
तरन्ति पुरुषाः कृष्ण (०४५-००२)
केनोपायेन संशमे (०४५-००२)
तस्य तद् वचनं श्रुत्वा (०४५-००३)
विस्मितो मधुसूदनः (०४५-००३)
प्रत्युवाच महात्मानं (०४५-००३)
धर्मपुत्रं युधिष्ठिरम् (०४५-००३)
साधु साधुर् अयं प्रश्नः (०४५-००४)
श्रूयतां भो युधिष्ठिर (०४५-००४)
षडशीतिसहस्राणि (०४५-००४)
योजनानां नराधिप (०४५-००४)
यमलोकस्य चाध्वानम् (०४५-००५)
अन्तरं मानुषस्य च (०४५-००५)
ताम्रपात्रम् इवातप्तं (०४५-००५)
शूलव्यामिश्रकण्टकम् (०४५-००५)
द्वादशादित्यसंकाशं (०४५-००६)
भैरवं दुरतिक्रमम् (०४५-००६)
न तत्र वृक्षा न च्छाया (०४५-००६)
पानीयं केतनानि च (०४५-००६)
यत्र विश्रमते श्रान्तः (०४५-००७)
पुरुषो ऽध्वानको नृप (०४५-००७)
याम्यैर् दूतैर् नीयमानो (०४५-००७)
यमस्याज्ञाकरैर् बलात् (०४५-००७)
अवश्यं च महाराज (०४५-००८)
स गन्तव्यो महापथः (०४५-००८)
नरैः स्त्रीभिस् तथा तिर्यैः (०४५-००८)
पृथिव्यां जीवसंज्ञकैः (०४५-००८)
एकविंशच् च नरका (०४५-००९)
यमस्य विषये स्मृताः (०४५-००९)
ये तु दुष्कृतकर्माणस् (०४५-००९)
ते पतन्ति पृथक् पृथक् (०४५-००९)
नरको रौरवो नाम (०४५-०१०)
महारौरव एव च (०४५-०१०)
क्षुरधारा महारौद्रः (०४५-०१०)
सूकरस् ताल एव च (०४५-०१०)

वज्रकुम्भो महाघोरः (०४५-०११)
शाल्मलो ऽथ विमोहनः (०४५-०११)
कीटादः कृमिभक्षश् च (०४५-०११)
शाल्मलिश् च महाद्रुमः (०४५-०११)
तथा पूयवहः पापा (०४५-०१२)
रुधिरान्धो महत्तमः (०४५-०१२)
अग्निज्वालो महानादः (०४५-०१२)
संदाम्शः शुनभोजनः (०४५-०१२)
तथा वैतरणी चोष्णा (०४५-०१२)
असिपत्त्रवनं तथा (०४५-०१२)
विष्णोस् तद् वचनं श्रुत्वा (०४५-०१३)
पपात भुवि पाण्डवः (०४५-०१३)
स संज्ञश् च मुहूर्तेन (०४५-०१३)
भूयः केशवम् अब्रवीत् (०४५-०१३)
भीतश् चास्मि महाबाहो (०४५-०१४)
श्रुत्वा मार्गस्य विस्तरम् (०४५-०१४)
केनोपायेन तं मार्गं (०४५-०१४)
तरन्ति पुरुषाः सुखम् (०४५-०१४)
ब्राह्मणेभ्यः प्रदानानि (०४५-०१५)
नानारूपाणि पार्थिव (०४५-०१५)
यो दद्याच् छ्रद्धया युक्तः (०४५-०१५)
सुखं याति महापथम् (०४५-०१५)
उपानहप्रदा यान्ति (०४५-०१६)
सुखं छायासु च्छत्त्रदाः (०४५-०१६)
न तेषाम् अशुभं किंचिच् (०४५-०१६)
शूलादि न च कण्टकाः (०४५-०१६)
उपानहौ यो ददाति (०४५-०१७)
पात्रभूते द्विजोत्तमे (०४५-०१७)
अश्वतर्यः प्रदातारम् (०४५-०१७)
उपतिष्ठन्ति तं नरम् (०४५-०१७)
वितृष्णाश् चाम्बुदातारस् (०४५-०१८)
तर्पिताश् चान्नदास् तथा (०४५-०१८)
औप्रावृता वस्त्रदाश् च (०४५-०१८)
नग्ना वै यान्त्य् अवस्त्रदाः (०४५-०१८)
हिरण्यदाः सुखं यान्ति (०४५-०१९)
पुरुषाः स्वाभ्यलंकृताः (०४५-०१९)
गोप्रदा यान्ति च सुखं (०४५-०१९)
विमुक्ताः सर्वकिल्बिषैः (०४५-०१९)
भूमिदाः सुखम् अधन्ते (०४५-०२०)
सर्वकामैः सुतर्पिताः (०४५-०२०)
यान्ति चैवापरिक्लिष्टा (०४५-०२०)
नराः शय्यासनप्रदाः (०४५-०२०)
ततः सुखतरं यान्ति (०४५-०२१)
विमानेषु गृहप्रदाः (०४५-०२१)
क्षीरप्रदा हि दिव्याभिः (०४५-०२१)
ससर्पिभिस् तथैव च (०४५-०२१)
गोप्रदाता लभेत् तृप्तिं (०४५-०२२)
तस्मिन् देशे सुदुर्लभाम् (०४५-०२२)
आरामरोपी च्छायासु (०४५-०२२)

शीतलासु सुखं व्रजेत् (०४५-०२२)
सुगन्धिगन्धिनो यान्ति (०४५-०२३)
गन्धमाल्यप्रदा नरः (०४५-०२३)
अदत्तदाना गच्छन्ति (०४५-०२३)
पद्भ्यां यानेन यानदाः (०४५-०२३)
दीपप्रदाः सुखं यान्ति (०४५-०२३)
दीपयन्तश् च तत्पथम् (०४५-०२३)
विमानैर् हंसयुक्तैस् तु (०४५-०२४)
यान्ति मासोपवासिनः (०४५-०२४)
चक्रवाकप्रयुक्तेन (०४५-०२४)
पञ्चरात्रोपवासिनः (०४५-०२४)
ततो बर्हिणयुक्तेन (०४५-०२४)
षड्रात्रम् उपवासिनः (०४५-०२४)
त्रिरात्रम् एकभक्तेन (०४५-०२५)
क्षपयेद् यस् तु पाण्डव (०४५-०२५)
अनन्तरं च यो ऽश्नीयात् (०४५-०२५)
तस्य लोका यथा मम (०४५-०२५)
पनीयं परलोकेषु (०४५-०२६)
पावनं परमं स्मृतम् (०४५-०२६)
पानीयस्य प्रदानेन (०४५-०२६)
तृप्तिर् भवति शाश्वती (०४५-०२६)
पानीयस्य गुणा दिव्याः (०४५-०२६)
प्रेतलोके सुखावहाः (०४५-०२६)
तत्र पुण्योदका नाम (०४५-०२७)
नदी तेषां प्रवर्तते (०४५-०२७)
शीतलं सलिलं तत्र (०४५-०२७)
पिबन्ति ह्य् अमृतोपमम् (०४५-०२७)
ये च दुष्कृतकर्माणः (०४५-०२८)
पूयं तेषां प्रवर्तते (०४५-०२८)
एषा नदी महाराज (०४५-०२८)
सर्वकामदुघा शुभा (०४५-०२८)
अध्वनि खिन्नगात्रस् तु (०४५-०२९)
द्विजो यः क्षुत्तृष्णान्वितः (०४५-०२९)
पृच्छन् सदान्नदातारम् (०४५-०२९)
अभ्येति गृहम् आशया (०४५-०२९)
तं पूजय प्रयत्नेन (०४५-०२९)
सो ऽतिथिर् ब्राह्मणः स्मृतः (०४५-०२९)
पितरो देवताश् चैव (०४५-*(५०))
ऋषयश् च तपोधनाः (०४५-*(५०))
पूजिताः पूजिते तस्मिन् (०४५-*(५०))
निराशे तु निराशकाः (०४५-*(५०))
तम् एव गच्छन्तम् अनुव्रजन्ति (०४५-०३०)
देवाश् च सर्वे पितरस् तथैव (०४५-०३०)
तस्मिन् द्विजे पूजिते पूजितास् ते (०४५-०३०)
गते निराशे प्रतियान्ति नाशम् (०४५-०३०)
अहन्य् अहनि दातव्यं (०४५-*(५१))
ब्राह्मणेभ्यो युधिष्ठिर (०४५-*(५१))
आगमिष्यति यत् पात्रं (०४५-*(५१))
तत् पात्रं तारयिष्यति (०४५-*(५१))

न तथा हविषो होमैर् (०४६-००१)
न पुष्पैर् नानुलेपनैः (०४६-००१)
अग्नौ वा सुहुते राजन् (०४६-००१)
यथा ह्य् अतिथिपूजने (०४६-००१)
कपिलायां तु दत्तायां (०४६-००२)
यत् फलं ज्येष्ठपुष्करे (०४६-००२)
तत् फलं पाण्डवश्रेष्ठ (०४६-००२)
विप्राणां पादशौचने (०४६-००२)
द्विजपादोदकक्लिन्ना (०४६-००३)
यावत् तिष्ठति मेदिनी (०४६-००३)
तावत् पुष्करपात्रेषु (०४६-००३)
पिबन्ति पितरो जलम् (०४६-००३)
देवमाल्यापनयनं (०४६-००४)
द्विजोच्छिष्टापमार्जनम् (०४६-००४)
श्रान्तसंवाहनं चैव (०४६-००४)
दीनस्य परिपालनम् (०४६-००४)
एकैकं पाण्डवश्रेष्ठ (०४६-००४)
गोप्रदानाद् विशिष्यते (०४६-००४)
पादशौचं तथाभ्यङ्गं (०४६-००५)
दीपम् अन्नं प्रतिश्रयम् (०४६-००५)
ददन्ति ये महाराज (०४६-००५)
नोपसर्पन्ति ते यमम् (०४६-००५)
स्वागतेनाग्नयः प्रीता (०४६-००६)
आसनेन शतक्रतुः (०४६-००६)
पितरः पादशौचेन (०४६-००६)
अन्नाद्येन प्रजापतिः (०४६-००६)
अभयस्य प्रदानेन (०४६-*(५२))
भवेत् प्रीतिर् ममातुला (०४६-*(५२))
येषां तडागानि बहूदकानि (०४६-००७)
प्रपाश् च कूपाश् च प्रतिश्रयाश् च (०४६-००७)
अन्नप्रदानं मधुरा च वाणी (०४६-००७)
यमस्य ते निर्वचना भवन्ति (०४६-००७)
सवृषं गोशतं तेन (०४६-००८)
दत्तं भवति शाश्वतम् (०४६-००८)
पापं कर्म च यत् किंचिद् (०४६-००९)
ब्रह्महत्यासमं भवेत् (०४६-००९)
शोछयेत् कपिलां दत्त्वा (०४६-००९)
एतद् वै नात्र संशयः (०४६-००९)
प्रासादा यत्र सौवर्णा (०४६-०१०)
वसोर्धारा च स्यन्दते (०४६-०१०)
गन्धर्वाप्सरसो यत्र (०४६-०१०)
तत्र गच्छन्ति गोप्रदाः (०४६-०१०)
प्रयच्छते यः कपिलां सवत्सां (०४६-०११)
कांस्योपदोहां कनकाग्रशृङ्गीम् (०४६-०११)
यान् यान् हि कामान् अभिवाञ्छते ऽसौ (०४६-०११)
तांस् तान् अवाप्नोत्य् अमलांश् च लोकान् (०४६-०११)
यावद् वत्सस्य द्वौ पादौ (०४६-०१२)
शिरश् चैव प्रदृश्यते (०४६-०१२)
तावद् गौः पृथिवी ज्ञेया (०४६-०१२)

यावद् गर्भं न मुञ्चति (०४६-०१२)
तस्मिन् काले प्रदातव्या (०४६-०१२)
विधिना या मयोदिता (०४६-०१२)
अन्तरिक्षगतो वत्सो (०४६-०१३)
यावद् योन्यां प्रदृश्यते (०४६-०१३)
तावद् गौः पृथिवी ज्ञेया (०४६-०१३)
यावद् गर्भं न मुञ्चति (०४६-०१३)
यावन्ति तस्य रोमाणि (०४६-०१४)
तावद्वर्षाणि मानवः (०४६-०१४)
हंसयुक्तेन यानेन (०४६-*(५३))
युक्तेनाप्सरसां गणैः (०४६-*(५३))
गन्धर्वाप्सरसोद्गीतैः (०४६-०१४)
स्वर्गलोके महीयते (०४६-०१४)
तिलधेनुं प्रवक्ष्यामि (०४६-०१५)
यश् चास्या विधिर् उत्तमः (०४६-०१५)
सुवर्णनाभिं यः कृत्वा (०४६-०१५)
सुखूरं कृष्णमार्गणाम् (०४६-०१५)
कुतपप्रस्तरस्थां तु (०४६-०१६)
तिलां कृत्वा प्रयत्नतः (०४६-०१६)
तिलैः प्रस्थादि तां दद्यात् (०४६-०१६)
सर्वरत्नैर् अलंकृताम् (०४६-०१६)
ससमुद्रद्रुमा चैव (०४६-०१७)
सशैलवनकानना (०४६-०१७)
चतुरन्ता भवेद् दत्ता (०४६-०१७)
पृथिवी नात्र संशयः (०४६-०१७)
कृष्णाजिने तिलां कृत्वा (०४६-०१८)
कृष्णां वा यदि वेतराम् (०४६-०१८)
राजतेषु तु पात्रेषु (०४६-*(५४))
कोणेषु मधुसर्पिषी (०४६-*(५४))
प्रीयतां धर्मराजेति (०४६-०१८)
यद् वा मनसि वर्तते (०४६-०१८)
यावज् जीवकृतं पापं (०४६-०१८)
तेन दानेन पूयते (०४६-०१८)
धनं प्राप्नोति पुण्येन (०४७-००१)
मौनेनाज्ञां प्रयच्छति (०४७-००१)
उपभोगं तु दानेन (०४७-००१)
जीवितं ब्रह्मचर्यया (०४७-००१)
अहिंसया परं रूपम् (०४७-००२)
दीक्षया कुलजन्म च (०४७-००२)
फलमूलाशनाद् राज्यं (०४७-००२)
स्वर्गः पर्णाशनो भवेत् (०४७-००२)
पयोभक्ष दिवं यान्ति (०४७-००३)
स्नानेन द्रविणाधिकाः (०४७-००३)
शाकं साधयतो राज्यं (०४७-००३)
नाकपृष्ठम् अनाशनात् (०४७-००३)
स्थण्डिले च शयानस्य (०४७-००४)
गृहाणि शयनानि च (०४७-००४)
चीरवल्कलधारिणां (०४७-००४)
वस्त्राण्य् आभरणानि च (०४७-००४)

शयनासनयानानि (०४७-००५)
ये गता हि तपोवनम् (०४७-००५)
अग्निप्रवेशी नियतं (०४७-००५)
ब्रह्मलोके महीयते (०४७-००५)
रसानां प्रतिसंहारात् (०४७-००६)
सौभाग्यम् अभिजायते (०४७-००६)
आमिषप्रतिषेधात् तु (०४७-००६)
भवत्य् आयुष्मती प्रजा (०४७-००६)
उदवासं वसेद् यस् तु (०४७-००७)
नागानाम् अधिपो भवेत् (०४७-००७)
सत्यवादी नरश्रेष्ठ (०४७-००७)
देवतैह् सह मोदते (०४७-००७)
कीर्तिर् भवति दानेन (०४७-००८)
आरोग्यं चाप्य् अहिंसया (०४७-००८)
द्विजशुश्रूषया राज्यं (०४७-*(५५))
द्विजत्वं चापि पुष्कलम् (०४७-*(५५))
द्विजशुश्रूषया राज्यं (०४७-००८)
दिव्यरूपम् अवाप्नुते (०४७-००८)
अन्नपानप्रदानेन (०४७-००९)
कामभोगैस् तु तृप्यते (०४७-००९)
दीपालोकप्रदानेन (०४७-००९)
चक्षुष्माञ् जायते नरः (०४७-००९)
गन्धमाल्यप्रदानेन (०४७-०१०)
तुष्टिर् भवति पुष्कला (०४७-०१०)
केशश्मश्रून् धारयतो ह्य् (०४७-०१०)
अग्र्या भवति संततिः (०४७-०१०)
वाक्शौचं मनसः शौचं (०४७-०११)
यच् च शौचं जलाश्रयम् (०४७-०११)
त्रिभिः शौचैर् उपेतो यः (०४७-०११)
स स्वर्गी नात्र संशयः (०४७-०११)
ताम्रायसानां भण्डानां (०४७-०१२)
दाता रत्नाधिपो भवेत् (०४७-०१२)
लभते तु परं स्थानं (०४७-०१२)
बलवान् पुष्यते सदा (०४७-०१२)
धान्यं क्रमेणार्जितवित्तसंचयं (०४८-००१)
विप्रे सुशीले ते प्रयच्छते यः (०४८-००१)
वसुंधरा तस्य भवेत् सुतुष्टा (०४८-००१)
धारा वसूनां प्रतिमुञ्चतीह (०४८-००१)
पुष्पोपभोगं च फलोपभोगं (०४८-००२)
यः पादपं स्पर्शयते द्विजाय (०४८-००२)
स श्रीसमृद्धं बहुरत्नपूर्णं (०४८-००२)
लभत्य् अधिष्ठानवरं समृद्धम् (०४८-००२)
इन्धनानि च यो दद्याद् (०४८-००३)
द्विजेभ्यः शिशिरागमे (०४८-००३)
कायाग्निदीप्तिं सौभाग्यम् (०४८-००३)
ऐश्वर्यं चाधिगच्छति (०४८-००३)
छत्त्रप्रदानेन गृहं वरिष्ठं (०४८-००४)
रथं तथोपानहसंप्रदानात् (०४८-००४)
धुर्यप्रदानेन गवाम् तथैव (०४८-००४)

लोकान् अवाप्नोति पुरंदरस्य (०४८-००४)
स्वर्गीयम् अप्य् आह हिरण्यदानम् (०४८-००४)
तथा वरिष्ठं कनकप्रदानम् (०४८-००४)
नैवेशिकं सर्वगुणोपपन्नं (०४८-००५)
प्रयच्छते यः पुरुषो द्विजाय (०४८-००५)
स्वाध्यायचारित्रगुणान्विताय (०४८-००५)
तस्यापि लोकाः प्रवरा भवन्ति (०४८-००५)
यो ब्रह्मदेयां प्रददाति कन्यां (०४८-००६)
भूमिप्रदानं च करोति विप्रे (०४८-००६)
हिरण्यदानं च तथा विशिष्टं (०४८-००६)
स शक्रो लोकं लभते दुरापम् (०४८-००६)
सुचित्रवस्त्राभरणोपधानं (०४८-००७)
दद्यान् नरो यः शयनं द्विजाय (०४८-००७)
रूपान्वितां दक्षवतीं मनोज्ञां (०४८-००७)
भार्याम् अयत्नोपचितां लभेत् सः (०४८-००७)
लवणस्य तु दातारस् (०४८-००८)
तिलानां सर्पिषस् तथा (०४८-००८)
तेजस्विनो ऽभिजायन्ते (०४८-००८)
भोगिनष् चिरजीविनः (०४८-००८)
स्वर्गे ऽप्सरोभिः सह भुक्तभोगस् (०४८-*(५६))
ततश् च्युतः शीलवतीं स भार्याम् (०४८-*(५६))
रूपान्वितां दक्षवतीं सुरक्तां (०४८-*(५६))
सुखेन धर्मेण तथापि काले (०४८-*(५६))
तस्यैव सार्धं सुरलोकम् एति (०४८-*(५६))
तस्यैव चान्यत् पुनर् एति जन्म (०४८-*(५६))
कीदृग्विधास्व् अवस्थासु (०४९-००१)
दत्तं दानं जनार्दन (०४९-००१)
इहलोकेष्व् अनुभवेत् (०४९-००१)
पुरुषस् तद् ब्रवीहि मे (०४९-००१)
गर्भस्थास्याथवा बाल्ये (०४९-००२)
यौवने वार्द्धके ऽपि वा (०४९-००२)
अवस्थां कृष्ण कथय (०४९-००२)
परं कौतूहलं हि मे (०४९-००२)
वृथाजन्मानि चत्वारि (०४९-००३)
वृथादानानि षोडश (०४९-००३)
अपुत्राणां वृथा जन्म (०४९-००३)
ये च धर्मबहिष्कृताः (०४९-००३)
परपाकं च ये ऽश्नन्ति (०४९-००३)
परदाररताश् च ये (०४९-००३)
पर्य् अस्थानं वृथा दानं (०४९-००४)
सदोषं परिकीर्तितम् (०४९-००४)
आरूढपतिते चैव (०४९-००४)
अन्यायोपार्जितं च यत् (०४९-००४)
व्यर्थं चाब्राह्मणे दानं (०४९-००५)
पतिते तस्करे तथा (०४९-००५)
गुरोश् चाप्रीतिजनके (०४९-००५)
कृतघ्ने ग्रामयाजके (०४९-००५)
ब्रह्मबन्धौ च यद् दत्तं (०४९-००६)
यद् दत्तं वृषलीपतौ (०४९-००६)

वेदविक्रयिणे चैव (०४९-००६)
यस्य चोपपतिर् गृहे (०४९-००६)
स्त्रीनिर्जितेषु यद् दत्तं (०४९-००७)
व्यालग्राहे तथैव च (०४९-००७)
परिचारके च यद् दत्तं (०४९-००७)
वृथादानानि षोडश (०४९-००७)
तमोवृतस् तु यो दद्याद् (०४९-००८)
भयात् क्रोधात् तथैव च (०४९-००८)
वृथा दानं तु तत् सर्वं (०४९-००८)
भुङ्क्ते गर्भस्थ एव तु (०४९-००८)
सेर्ष्यामन्युमनाश् चैव (०४९-००९)
दम्भार्थं चार्थकारणात् (०४९-००९)
यो ददाति द्विजातिभ्यः (०४९-००९)
स बालत्वे तद् अश्नुते (०४९-००९)
यः शुद्धिः प्रयतो भूत्वा (०४९-*(५८))
प्रसन्नमानसेन्द्रियः (०४९-*(५८))
प्रददाति द्विजातिभ्यो (०४९-*(५८))
यौवनस्थस् तद् अश्नुते (०४९-*(५८))
देशे देशे च पात्रे च (०४९-०१०)
यो ददाति द्विजातिषु (०४९-०१०)
मनसा परितुष्टेन (०४९-०१०)
यौवनस्थस् तद् अश्नुते (०४९-०१०)
तस्मात् सर्वास्व् अवस्थासु (०४९-०११)
सर्वदानानि पार्थिव (०४९-०११)
दातव्यानि द्विजातिभ्यः (०४९-०११)
स्वर्गमर्गम् अभीप्सता (०४९-०११)
त्रैलोक्य कृष्ण भूतानां (०५०-००१)
सर्वलोकात्मको ह्य् असि (०५०-००१)
नृणां यदुवरश्रेष्ठ (०५०-००१)
तुष्यसे केन कर्मणा (०५०-००१)
ब्राह्मणैः पूजितैर् नित्यं (०५०-००२)
पूजितो ऽहं न संशयः (०५०-००२)
निर्भर्त्सितैश् च निर्भग्नस् (०५०-००२)
तस्याहं सर्वकर्मसु (०५०-००२)
विप्रापरा गतिर् मह्यं (०५०-००३)
यस् तान् पूजयते नृप (०५०-००३)
तम् अहं तेन रूपेण (०५०-००३)
प्रपश्यामि युधिष्ठिर (०५०-००३)
काणाः कुब्जाश् च खञ्जाश् च (०५०-००४)
दरिद्रा व्याधिताश् च ये (०५०-००४)
नावमन्येद् द्विजान् प्राज्ञो (०५०-००४)
मम रूपं हितं तथा (०५०-००४)
बहवो ऽपि न जानन्ते (०५०-००५)
नरा ज्ञानबहिष्कृताः (०५०-००५)
यथाहं द्विजरूपेण (०५०-००५)
चरामि पृथिवीतले (०५०-००५)
ये केचित् सागरान्तायां (०५०-००६)
पृथिव्यां कीर्तिता द्विजाः (०५०-००६)
तद् रूपं हि परं मह्यं (०५०-००६)

यो ऽर्चयेद् अर्चयेत् तु सः (०५०-००६)
तद्रूपान् घ्नन्ति ये विप्रान् (०५०-००७)
विकर्मसु च युञ्जन्ति (०५०-००७)
अप्रेषणे प्रेषयन्तो (०५०-००७)
दासत्वं कारयन्ति हि (०५०-००७)
मृतांस् तान् करपत्रेन (०५०-००८)
यमदूता महाबलाः (०५०-००८)
निकृन्तन्ति यथा काष्ठं (०५०-००८)
सूत्रमार्गेण शिल्पिनः (०५०-००८)
ये चैवाश्लक्ष्णया वाचा (०५०-००९)
तर्जयन्ति नराधमाः (०५०-००९)
वदन्ति क्रोधनिःस्पर्श (०५०-००९)
पादेनाभिहनन्ति च (०५०-००९)
मृतांस् तान् यमलोकेषु (०५०-०१०)
निहत्य धरणीतले (०५०-०१०)
उरः पादेन चाक्रम्य (०५०-०१०)
क्रोधसंरक्तलोचनः (०५०-०१०)
अग्निवर्णैश् च संदंशैर् (०५०-०१०)
जिह्वाम् उद्धरते यमः (०५०-०१०)
पापाश् च नारके वह्नौ (०५०-*(५९))
धास्यन्ते यमकिंकरैः (०५०-*(५९))
ये तु विप्रान् निरीक्षन्ति (०५०-०११)
पापाः पापेन चक्षुषा (०५०-०११)
अब्रह्मण्याः श्रुतेर् बाह्या (०५०-०११)
नित्यं ब्रह्मद्विषो नराः (०५०-०११)
तेषां घोरा महाकाया (०५०-०१२)
वज्रतुण्डा भयानकाः (०५०-०१२)
उद्धरन्ति मुहूर्तेन (०५०-०१२)
चक्षुः काका यमाज्ञया (०५०-०१२)
यस् ताडयति विप्रांस् तु (०५०-०१३)
क्षतं कुर्यात् सशोणितम् (०५०-०१३)
अस्थिभङ्गं च यः कुर्यात् (०५०-०१३)
प्राणैर् वापि वियोजयेत् (०५०-०१३)
ब्रह्मघ्नः सो ऽनुपूर्वेण (०५०-०१४)
नरके वसुधाधिप (०५०-०१४)
कीलैर् विनिहतः पापो (०५०-०१४)
मीरायां पच्यते भृशम् (०५०-०१४)
सुबहूनि सहस्राणि (०५०-०१५)
वर्षाणां क्लेशभाग् भवेत् (०५०-०१५)
रवान् मुञ्चति दुर्बुद्धिर् (०५०-०१५)
न तस्मै निष्कृतिः स्मृता (०५०-०१५)
तस्माद् विप्रा नरश्रेष्ठ (०५०-०१६)
नमस्कार्याश् च नित्यशः (०५०-०१६)
अन्नपानप्रदानैस् तु (०५०-०१६)
पूजार्हाः सततं द्विजाः (०५०-०१६)
आमन्त्रयित्वा यो विप्रान् (०५०-०१७)
गन्धैर् माल्यैश् च मानवः (०५०-०१७)
तर्पयेच् छ्रद्धया युक्तः (०५०-०१७)
स माम् अर्चयते सदा (०५०-०१७)

स मां प्रसादयेच् चैव (०५०-०१७)
स च मां परितोषयेत् (०५०-०१७)
तपोदमान्वितेष्व् एव (०५०-*(६०))
नित्यं पूजां प्रयोजयेत् (०५०-*(६०))
ये ब्राह्मणाः सो ऽहम् असंशयं नृप (०५०-०१८)
तेष्व् अर्चितेष्व् अर्चितो ऽहं यथावत् (०५०-०१८)
तेष्व् एव तुष्टेष्व् अहम् एव तुष्टो (०५०-०१८)
वैरं च तैर् यस्य ममापि वैरम् (०५०-०१८)
सुगन्धिधूपादिभिर् अभ्यर्च्य विप्रं (०५०-*(६१),००१)
तम् अच्युतं नार्चयते सदैव (०५०-*(६१),००२)
यो भक्षतोयादिभिर् अन्नपानैर् (०५०-*(६१),००३)
अनुलेपाचमनप्रदानैः (०५०-*(६१),००४)
यः पूजयेद् भोजयित्वा द्विजाग्र्यान् (०५०-*(६१),००५)
संपूजयित्वा परितोषयेच् च (०५०-*(६१),००६)
अर्घ्यादिना ये ऽभिपूज्य (०५०-*(६१),००७)
पूजयन्ति सदाच्युतम् (०५०-*(६१),००७)
तेनैव माम् एव सदा (०५०-*(६१),००८)
पूजयन्ति न संशयः (०५०-*(६१),००८)
विरूपाश् च सुरूपाश् च (०५०-*(६१),००९)
विजनान् निष्कलान् अपि (०५०-*(६१),००९)
कृपया भावितात्मानो (०५०-*(६१),०१०)
ये ऽर्चयन्ति द्विजोत्तमान् (०५०-*(६१),०१०)
अनसूया हितात्मानो (०५०-*(६१),०११)
विप्रान् आराधते क्वचित् (०५०-*(६१),०११)
असंशयं सदा भक्त्या (०५०-*(६१),०१२)
माम् एवार्चयते हि सः (०५०-*(६१),०१२)
ततः पवित्रम् अतुलं (०५०-*(६१),०१३)
न पुण्यम् अधिकं ततः (०५०-*(६१),०१३)
यश् चन्दनैः सागरुगन्धमाल्यैर् (०५०-०१९)
अभ्यर्चयेद् दारुमयीं ममार्चाम् (०५०-०१९)
नासौ ममार्चाम् अर्चयते ऽर्चयन् वै (०५०-०१९)
विप्रार्चनाद् अर्चित एव चाहम् (०५०-०१९)
विप्रप्रसादान् मध एव चाहं (०५०-०२०)
विप्रप्रसादाद् असुरान् जयामि (०५०-०२०)
विप्रप्रसादात् पुरुषोत्तमत्वं (०५०-०२०)
विप्रप्रसादाद् अजितो ऽस्मि नित्यम् (०५०-०२०)
सायं प्रातश् च यः संध्याम् (०५१-००१)
उपास्ते ऽस्कन्नमानसः (०५१-००१)
जपन् हि पावनीं देवीं (०५१-००१)
गायत्रीं वेदमातरम् (०५१-००१)
स तया पावितो देव्या (०५१-००२)
ब्राह्मणः पूतकिल्बिषः (०५१-००२)
न सीदेत् प्रतिगृह्णानः (०५१-००२)
पृथिवीं तु ससागराम् (०५१-००२)
ये चान्ये दारुणाः केचिद् (०५१-००३)
ग्रहाः सूर्यादयो दिवि (०५१-००३)
ते चास्य सौम्या जायन्ते (०५१-००३)
शिवाः शिवतमाह् सदा (०५१-००३)
यत्रतत्रगतं चैनं (०५१-००४)

दारुणाः पिशिताशनाः (०५१-००४)
घोररूपा महाकाया (०५१-००४)
न कर्षन्ति द्विजोत्तमम् (०५१-००४)
यावन्तश् च पृथिव्यां हि (०५१-००५)
चीर्णवेदव्रता द्विजाः (०५१-००५)
अचीर्णव्रतवेदा वा (०५१-००५)
विकर्मपथम् आश्रिताः (०५१-००५)
तेषां तु पावनार्थं हि (०५१-००६)
नित्यम् एव युधिष्ठिर (०५१-००६)
द्वे संध्ये ह्य् उपतिष्ठेत (०५१-००६)
तद् अस्कन्नं महाव्रतम् (०५१-००६)
नास्ति किंचिन् नरव्याघ्र (०५१-००७)
दुष्कृतं ब्राह्मणस्य तु (०५१-००७)
यत्र स्थितः सदाध्यात्मे (०५१-००७)
द्वे संध्ये ह्य् उपतिष्ठति (०५१-००७)
पूर्णाहुतिं वा प्राप्नोति (०५१-००८)
जुहुते च त्रयो ऽग्नयः (०५१-००८)
दहन्ति दुष्कृतं तस्य (०५१-००८)
अग्नयो नात्र संशयः (०५१-००८)
एवं सर्वस्य विप्रस्य (०५१-००९)
किल्बिषं निर्दहाम्य् अहम् (०५१-००९)
उभे संध्ये ह्य् उपासिनस् (०५१-००९)
तस्मात् सर्वशुचिर् द्विजः (०५१-००९)
दैवे पित्र्ये च यत्नेन (०५१-०१०)
नियोक्तव्यो ऽजुगुप्सितः (०५१-०१०)
जुगुप्सितस् तु तच् छ्राद्धं (०५१-०१०)
दहत्य् अग्निर् इवेन्धनम् (०५१-०१०)
पुराणं मानवा धर्माः (०५२-००१)
साङ्गो वेदश् चिकित्सितम् (०५२-००१)
आज्ञासिद्धानि चत्वारि (०५२-००१)
न हन्तव्यानि हेतुभिः (०५२-००१)
हत्वा ह्य् एतानि संमूढः (०५२-००१)
कल्पं तमसि पच्यते (०५२-००१)
न ब्राह्मणं परीक्षेत (०५२-००२)
श्राद्धकाले ह्य् उपस्थिते (०५२-००२)
सुमहान् परिवादो हि (०५२-००२)
ब्राह्मणानां परीक्षणे (०५२-००२)
काणाः कुण्ठाश् च षण्डाश् च (०५२-००३)
दरिद्रा व्याधितास् तथा (०५२-००३)
सर्वे श्राद्धे नियोक्तव्या (०५२-००३)
मिश्रिता वेदपारगैः (०५२-००३)
अक्षयं तु भवेच् छ्राद्धम् (०५२-००३)
एतद् धर्मविदो विदुः (०५२-००३)
ब्राह्मणो हि महद् भूतं (०५२-००४)
जन्मना सह जायते (०५२-००४)
लोका लोकेश्वराश् चापि (०५२-००४)
सर्वे ब्राह्मणपूजकाः (०५२-००४)
ब्राह्मणाः कुपिता हन्युर् (०५२-००५)
भस्म कुर्युश् च तेजसा (०५२-००५)

लोकान् अन्यान् सृजेयुश् च (०५२-००५)
लोकपालांस् तथापरान् (०५२-००५)
ब्राह्मणा हि महात्मानो (०५२-००६)
विरजाः स्वर्गसंक्रमाः (०५२-००६)
ब्राह्मणानां परीवादाद् (०५२-००६)
असुराः सलिलेशयाः (०५२-००६)
अपेयः सागरो यैस् तु (०५२-००७)
कृतः कोपान् महात्मभिः (०५२-००७)
येषां कोपाग्निर् अद्यापि (०५२-००७)
दण्डके नोपशाम्यति (०५२-००७)
एते स्वर्गस्य नेतारो (०५२-००८)
भूमिदेवाः सनातनाः (०५२-००८)
एभिश् चाधिकृतः पन्था (०५२-००८)
देवयानः स उच्यते (०५२-००८)
ते पूज्यास् ते नमस्कार्यास् (०५२-००९)
तेषु सर्वं प्रतिष्ठितम् (०५२-००९)
ते वै लोकान् इमान् सर्वान् (०५२-००९)
धारयन्ति परस्परम् (०५२-००९)
प्रमाणं सर्वलोकानां (०५२-०१०)
नियता ब्रह्मचारिणः (०५२-०१०)
तान् अपाश्रित्य तिष्ठन्ते (०५२-०१०)
त्रयो लोकाः सनातनाः (०५२-०१०)
गूढस्वाध्यायतपसो (०५२-०११)
ब्राह्मणाः संशितव्रताः (०५२-०११)
विद्यास्नाता व्रतस्नाता (०५२-०११)
अनपाश्रित्यजीविनः (०५२-०११)
आशीविषा इव क्रुद्धा (०५२-०१२)
उपचर्या हि ब्राह्मणाः (०५२-०१२)
तपसा दीप्यमानास् ते (०५२-०१२)
दहेयुः सागरान् अपि (०५२-०१२)
ब्राह्मणेषु च तुष्टेषु (०५२-०१३)
तुष्यन्ते सर्वदेवताः (०५२-०१३)
ब्राह्मणानां नमस्कारैः (०५२-०१३)
सूर्यो दिवि विराजते (०५२-०१३)
ब्राह्मणानां परीवादात् (०५२-०१३)
पतेयुर् अपि देवताः (०५२-०१३)
धुरि ये नावसीदन्ति (०५२-०१४)
प्रणीते यज्ञवह्नयः (०५२-०१४)
भोजनाच्छादनैर् दानैस् (०५२-०१४)
तारयन्ति तपोधनाः (०५२-०१४)
ते गतिः सर्वभूतानाम् (०५२-०१५)
अध्यात्मगतिचिन्तकाः (०५२-०१५)
आदिमध्यावसानानां (०५२-०१५)
ज्ञानानां छिन्नसाम्शयाः (०५२-०१५)
परापरविशेषज्ञा (०५२-०१६)
नेतारः परमां गतिम् (०५२-०१६)
अवध्या ब्राह्मणास् तस्मात् (०५२-०१६)
पापेष्व् अपि रताः सदा (०५२-०१६)
यश् च सर्वम् इदं हन्याद् (०५२-०१७)

ब्राह्मणं वापि तत्समम् (०५२-०१७)
सो ऽग्निः सो ऽर्को महातेजा (०५२-०१८)
विषं भवति कोपितः (०५२-०१८)
भूतानां अग्रभुग् विप्रो (०५२-०१८)
वर्णश्रेष्ठः पिता गुरुः (०५२-०१८)
न स्कन्दते न व्यथते (०५२-०१९)
न च नश्यति कर्हिचित् (०५२-०१९)
वरिष्ठम् अग्निहोत्राद् धि (०५२-०१९)
ब्राह्मणस्य मुखे हुतम् (०५२-०१९)
अविद्यो वा सविद्यो वा (०५२-०२०)
ब्राह्मणो मम दैवतम् (०५२-०२०)
प्रणीतश् चाप्रणीतश् च (०५२-०२०)
यथाग्निर् दैवतं महत् (०५२-०२०)
एवं विद्वान् अविद्वान् वा (०५२-*(६३))
ब्राह्मणो दैवतं महत् (०५२-*(६३))
श्मशानेष्व् अपि तेजस्वी (०५२-०२१)
पावको नैव दुष्यति (०५२-०२१)
हव्यकव्यव्यपेतो ऽपि (०५२-०२१)
ब्राह्मणो नैव दुष्यति (०५२-०२१)
सर्वथा ब्राह्मणाः पूज्याः (०५२-०२२)
सर्वथा दैवतं महत् (०५२-०२२)
तस्मात् सर्वप्रयत्नेन (०५२-०२२)
रक्षेद् आपत्सु ब्राह्मणान् (०५२-०२२)
शक्रो ऽपि हि द्विजेन्द्राणां (०५२-०२२)
बिभेति विबुधाधिपः (०५२-०२२)
दानं देवाः प्रशंसन्ति (०५३-००१)
इति धर्मविदो विदुः (०५३-००१)
नानादानविधिं तस्माच् (०५३-००१)
शृणुष्व सुसमाहितः (०५३-००१)
हिरण्यदानं गोदानं (०५३-००२)
पृथिवीदानम् एव च (०५३-००२)
एतानि वै पवित्राणि (०५३-००२)
तारयन्ति परत्र च (०५३-००२)
यद् यद् इष्टतमं लोके (०५३-००३)
यच् चास्ति दयितं गृहे (०५३-००३)
तत् तद् गुणवते देयं (०५३-००३)
तद् एवाक्षयम् इच्छता (०५३-००३)
सुवर्णदानं गोदानं (०५३-००४)
पृथिवीदानम् एव च (०५३-००४)
एतत् प्रयच्छमानो वै (०५३-००४)
सर्वपापैः प्रमुच्यते (०५३-००४)
यद् ददासि विशिष्टेभ्यो (०५३-००५)
यच् चाश्नासि दिने दिने (०५३-००५)
तत् ते वित्तम् अहं मन्ये (०५३-००५)
शेषं कस्यापि रक्षसि (०५३-००५)
तुल्यनामानि शस्तानि (०५३-००६)
त्रीणि तुल्यफलानि च (०५३-००६)
नित्यं देयानि राजेन्द्र (०५३-००६)
गावः पृथ्वी सरस्वती (०५३-००६)

तद्वज् जलम् अमित्रघ्न (०५३-००७)
तत् तुल्यफलनामतः (०५३-००७)
दत्त्वा तृप्तिम् अवाप्नोति (०५३-००७)
यत्रतत्राभिजायते (०५३-००७)
संकल्पविहितो यो ऽर्थो (०५३-००८)
ब्राह्मणेभ्यः प्रदीयते (०५३-००८)
अर्थिभ्यो ह्य् अर्थहेतुभ्यो (०५३-००८)
मनस्वी तेन जायते (०५३-००८)
सीदते द्विजमुख्याय (०५३-००९)
यो ऽर्थिने न प्रयच्छति (०५३-००९)
अमर्थे सति दुर्बुद्धिर् (०५३-००९)
नरकायोपपद्यते (०५३-००९)
धेनवो ऽनडुहश् चैव (०५३-०१०)
छत्त्रं वस्त्रम् उपानहौ (०५३-०१०)
देयानि याचमानेभ्यः (०५३-०१०)
पानम् अन्नं तथैव च (०५३-०१०)
एवं दानं समुद्दिष्टं (०५३-०१०)
व्युष्टिमत् तारकं परम् (०५३-०१०)
एष ते विहितो यज्ञः (०५३-०११)
श्रद्धापूतः सदक्षिणः (०५३-०११)
विशिष्टः स च यज्ञेषु (०५३-०११)
ददताम् अनसूयया (०५३-०११)
दानविद्भिः कृतः पन्था (०५३-०१२)
येन यान्ति मनीषिणः (०५३-०१२)
यैर् दानैस् तर्पयिष्यन्ति (०५३-०१२)
श्रद्धापूतैर् द्विजोत्तमान् (०५३-०१२)
यथा हि सुकृते क्षेत्रे (०५३-०१३)
फलं विन्दति क्षेत्रिकः (०५३-०१३)
एवं दत्त्वा ब्राह्मणेभ्यो (०५३-०१३)
दाता फलम् उपाश्नुते (०५३-०१३)
ब्राह्मणाश् चैव विद्यन्ते (०५३-०१४)
सत्यवन्तो बहुश्रुताः (०५३-०१४)
न ददाति च दानानि (०५३-०१४)
मोघं तस्य धनार्जनम् (०५३-०१४)
उत्थायोत्थाय बोद्धव्यं (०५३-०१५)
किम् अद्य सुकृतं मया (०५३-०१५)
दत्तं वा दापितं वापि (०५३-०१५)
वोत्साह्यम् अपि वा कृतम् (०५३-०१५)
उत्थायोत्थाय दातव्यं (०५३-०१६)
ब्राह्मणेभ्यो युधिष्ठिर (०५३-०१६)
आगमिष्यति यत् पात्रं (०५३-०१६)
तत् पात्रं तारयिष्यति (०५३-०१६)
यच् च वेदमयं पात्रं (०५३-०१७)
यच् च पात्रं तपोमयम् (०५३-०१७)
असंकीर्णं च यत् पात्रं (०५३-०१७)
तत् पात्रं तारयिष्यति (०५३-०१७)
अध्यायं तपसो वक्ष्ये (०५४-००१)
तन् मे निगदतः शृणु (०५४-००१)
तपसो हि परं नास्ति (०५४-००१)

तपसा विन्दते फलम् (०५४-००१)
ऋषयस् तप आस्थाय (०५४-००२)
मोदन्ते दैवतैः सह (०५४-००२)
तपसा प्राप्यते स्वर्गं (०५४-००२)
तपसा प्राप्यते यशः (०५४-००२)
आयुःप्रकर्षं भोगांश् च (०५४-००३)
तपसा विन्दते नरः (०५४-००३)
ज्ञानं विज्ञानम् आस्तिक्यं (०५४-००३)
सौभाग्यं रूपम् उत्तमम् (०५४-००३)
तपसा लभ्यते सर्वं (०५४-००४)
मनसा यद् यद् इच्छति (०५४-००४)
नातप्ततपसो यान्ति (०५४-००४)
ब्रह्मलोकं कदाचन (०५४-००४)
यत् कार्यं किंचिद् आस्थाय (०५४-००५)
पुरुषस् तप्यते तपः (०५४-००५)
सर्वं तत् समवाप्नोति (०५४-००५)
परत्रेह च मानवः (०५४-००५)
सुरापः पारदारी च (०५४-००६)
भ्रूणहा गुरुतल्पगः (०५४-००६)
तपसा तरते सर्वं (०५४-००६)
सर्वतश् च विमुच्यते (०५४-००६)
अपि सर्वेश्वरः स्थाणुर् (०५४-००७)
विष्णुश् चैव सनातनः (०५४-००७)
ब्रह्मा हुताशनः शक्रस् (०५४-००७)
तपस्यन्ति सनातनाः (०५४-००७)
षडशीतिसहस्राणि (०५४-००८)
मुनीनाम् ऊर्ध्वरेतसाम् (०५४-००८)
तपसा दिवि मोदन्ते (०५४-००८)
समेता दैवतैः सह (०५४-००८)
तपसा प्राप्यते राज्यं (०५४-००९)
शक्रः सर्वसुरेश्वरः (०५४-००९)
तपसा पालयन् सर्वम् (०५४-००९)
अहन्य् अहनि वृत्रहा (०५४-००९)
सूर्याचन्द्रमसौ देवौ (०५४-०१०)
सर्वलोकहिते रतौ (०५४-०१०)
तपसैव प्रकाशेते (०५४-०१०)
नक्षत्राणि ग्रहास् तथा (०५४-०१०)
न चास्ति तत् सुखं लोके (०५४-०११)
यद् विना तपसा किल (०५४-०११)
तपसैव सुखं सर्वम् (०५४-०११)
इति धर्मविदो विदुः (०५४-०११)
विश्वामित्रश् च तपसा (०५४-*(६४))
ब्राह्मणत्वम् उपागतः (०५४-*(६४))
सर्वं च तपसाभ्येति (०५४-०१२)
सर्वं च सुखम् अश्नुते (०५४-०१२)
तपस् तप्यति यो ऽरण्ये (०५४-०१२)
मुनिर् मूलफलाशनः (०५४-०१२)
ऋचम् एकां अपि पठन् (०५४-०१२)
स याति परमां गतिम् (०५४-०१२)

तस्मात् तपः समास्थाय (०५४-*(६५))
प्रार्थयेद् यद् अभीप्सितम् (०५४-*(६५))
सत्यम् एव परं ब्रह्म (०५५-००१)
सत्यम् एव परं तपः (०५५-००१)
सत्यम् एव परो यज्ञः (०५५-००१)
सत्यम् एव परं श्रुतम् (०५५-००१)
सत्यं देवेषु जागर्ति (०५५-००१)
मुक्तिः सत्यतरोः फलम् (०५५-००१)
तपो यशश् च पुण्यं च (०५५-००२)
पितृदेवर्षिपूजनम् (०५५-००२)
आद्यो विधिश् च विद्या च (०५५-००२)
सर्वं सत्ये प्रतिष्ठितम् (०५५-००२)
सत्यं यज्ञस् तथा वेदा (०५५-००३)
मन्त्रा देवी सरस्वती (०५५-००३)
व्रतचर्या तथा सत्यम् (०५५-००३)
ओंकारः सत्यम् एव च (०५५-००३)
सत्येन वायुर् अभ्येति (०५५-००४)
सत्येन तपते रविः (०५५-००४)
सत्येन चाग्निर् दहति (०५५-००४)
स्वर्गं सत्येन गच्छति (०५५-००४)
सत्येन चापः क्षिपति (०५५-००४)
पर्जन्यः पृथिवीतले (०५५-००४)
पारणं सर्ववेदानां (०५५-००५)
सर्वतीर्थावगहनह् (०५५-००५)
सत्यं च वदतो लोके (०५५-००५)
तत् समं स्यान् न संशयः (०५५-००५)
अश्वमेधसहस्रं च (०५५-००६)
सत्यं च तुलया धृतम् (०५५-००६)
अश्वमेधसहस्राद् धि (०५५-००६)
सत्यम् एतद् विशिष्यते (०५५-००६)
मुनयः सत्यनिरता (०५५-*(६६))
मुनयः सत्यविक्रमाः (०५५-*(६६))
मुनयः सत्यप्रपथाः (०५५-*(६६))
परां सिद्धिम् इतो गताः (०५५-*(६६))
सत्येन देवाः प्रीयन्ते (०५५-००७)
पितरो ब्राह्मणास् तथा (०५५-००७)
सत्यम् आहुः परं धर्मं (०५५-००७)
तस्मात् सत्यं न लोपयेत् (०५५-००७)
मुनयः सत्यनिरतास् (०५५-००८)
तस्मात् सत्यं विशिष्यते (०५५-००८)
स्वर्गे सत्यपरा नित्यं (०५५-००८)
मोदन्ते देवता इव (०५५-००८)
अप्सरोगणसंकीर्णैर् (०५५-००९)
विमानैर् उपयान्ति ते (०५५-००९)
वक्तव्यं हि सदा सत्यं (०५५-००९)
न सत्याद् विद्यते परम् (०५५-००९)
एतत् प्रमाणं यः कुर्यात् (०५५-*(६७))
सर्वयज्ञफलं लभेत् (०५५-*(६७))
अगाधे विमले शुद्धे (०५५-०१०)

सत्यतीर्थे ह्रदे शुभे (०५५-०१०)
स्नातव्यं मनसा युक्तैः (०५५-०१०)
स्नानं तत् परमं स्मृतम् (०५५-०१०)
आत्मार्थे च परार्थे वा (०५५-०११)
पुत्रार्थे वापि पार्थिव (०५५-०११)
ये ऽनृतं नाभिभाषन्ते (०५५-०११)
ते नराः स्वर्गगामिनः (०५५-०११)
अपि चेदं पुरा गीतं (०५५-०१२)
धर्मविद्भिर् युधिष्ठिर (०५५-०१२)
यः सत्यवादी पुरुषो (०५५-०१२)
नानृतं परिभाषते (०५५-०१२)
संप्राप्य विरजांल् लोकान् (०५५-०१३)
उषित्वा शाश्वतीः समाः (०५५-०१३)
शुचीनां श्रीमतां गेहे (०५५-०१३)
जायते सुमहामतिः (०५५-०१३)
विद्यारोग्यसुखैश्वर्यैर् (०५५-*(६८))
युक्तो योगपरो भवेत् (०५५-*(६८))
आदित्यचन्द्राव् अनलानिलौ च (०५५-०१४)
द्यौर् भूमिर् आपो हृदयं यमश् च (०५५-०१४)
अहश् च रात्रिश् च उभे च संध्ये (०५५-०१४)
धर्मश् च जानाति नरस्य वृत्तम् (०५५-०१४)
तस्मान् न वाच्यम् अनृतं हि सद्भिर् (०५५-०१५)
एवंविधैर् धर्मविदो वदन्ति (०५५-०१५)
सत्यं वदंस् तेजसा दीप्यमानो (०५५-०१५)
न हीयते धर्मयशो ऽर्थकामैः (०५५-०१५)
एष वाणीकृतो धर्मो (०५५-०१६)
वैदिको धर्मनिश्चये (०५५-०१६)
एवम् एतद् यथान्यायं (०५५-०१६)
सत्याध्याये प्रकीर्तितम् (०५५-०१६)
तत् प्रमाणं बुधः कुर्यान् (०५५-०१६)
न सत्याद् विद्यते परम् (०५५-०१६)
सर्वेषाम् एव वर्णानां (०५६-००१)
प्रवक्ष्यामि युधिष्ठिर (०५६-००१)
उपोषितैश् च कौन्तेय (०५६-००१)
यत् प्रयोज्यं यथाविधि (०५६-००१)
फलं यद् उपवासस्य (०५६-००२)
तन् निबोध च पाण्डव (०५६-००२)
अवाप्नोति यथा कामान् (०५६-००२)
उपवासपरायणः (०५६-००२)
मयैते नृपते काम्या (०५६-००३)
विहिता हितम् इच्छता (०५६-००३)
उपवासा मनुष्याणां (०५६-००३)
मय्य् एवार्पितचेतसाम् (०५६-००३)
पञ्चमीं चैव षष्ठीं च (०५६-००४)
पौर्णमासीं च पाण्डव (०५६-००४)
उपोष्य रूपवान् धन्यः (०५६-००४)
सुभगश् चैव जायते (०५६-००४)
अष्टमीं चैव कौन्तेय (०५६-००५)
शुक्लपक्षे चतुर्दशीम् (०५६-००५)

उपोष्य व्याधिरहितो (०५६-००५)
वीर्यवांश् चैव जायते (०५६-००५)
मार्गशीर्षं तु यो मासं (०५६-००६)
नित्यम् एकाशनो भवेत् (०५६-००६)
कृषिभागी भवेद् राजन् (०५६-००६)
बहुपुत्रश् च जायते (०५६-००६)
पौषमासे तु राजेन्द्र (०५६-००७)
भक्तेनैकेन यः क्षपेत् (०५६-००७)
सुभगो दर्शनीयश् च (०५६-००७)
ज्ञानभागी च जायते (०५६-००७)
पितॄन् उद्दिश्य माघं तु (०५६-००८)
यः क्षपेद् एकभोजनम् (०५६-००८)
मासेन पुरुषव्याघ्र (०५६-००८)
सो ऽनन्त्यं फलम् अश्नुते (०५६-००८)
भगदैवतमासं तु (०५६-००९)
यः क्षपेद् एकभोजनम् (०५६-००९)
स्त्रीषु वल्लभतां याति (०५६-००९)
वश्याश् चास्य भवन्ति ताः (०५६-००९)
चैत्रं तु पुरुषव्याघ्र (०५६-०१०)
यः क्षपेद् एकभोजनम् (०५६-०१०)
मासेन पुरुषव्याघ्र (०५६-*(६९))
मौनन् तु फलम् अश्नुते (?) (०५६-*(६९))
भगदैवतमासं तु (०५६-*(६९))
यः क्षपेद् एकभोजनः (०५६-*(६९))
स्त्रीषु वल्लभतां याति (०५६-*(६९))
वश्याश् चास्य भवन्ति ताः (०५६-*(६९))
चैत्रं तु पुरुषव्याघ्र (०५६-*(६९))
यः क्षपेद् एकभोजनः (०५६-*(६९))
सुवर्णमणिमुक्ताढ्ये (०५६-०१०,*(६९))
कुले महति जायते (०५६-०१०,*(६९))
निस्तरेद् एकभक्तेन (०५६-०११,*(६९))
वैशाखं यो नराधिप (०५६-०११,*(६९))
नरो वा यदि वा नारी (०५६-०११)
ज्ञातीनां श्रेष्ठतां व्रजेत् (०५६-०११)
ज्येष्ठमासम् अपानीयम् (०५६-०१२)
एकभक्तेन यः क्षपेत् (०५६-०१२)
ऐश्वर्यं पुरुषव्याघ्र (०५६-०१२)
स्त्रीभागी चोपजायते (०५६-०१२)
आषाढं भरतश्रेष्ठ (०५६-०१३)
एकभक्तेन यः क्षपेत् (०५६-०१३)
शूरश् च बहुधान्यश् च (०५६-०१३)
बहुपुत्रश् च जायते (०५६-०१३)
श्रावणं तु नरव्याघ्र (०५६-०१४)
भक्तेनैकेन यः क्षपेत् (०५६-०१४)
यत्र यत्रोपपद्येत (०५६-०१४)
तत्र स्याज् ज्ञातिवर्धनः (०५६-०१४)
मासं भाद्रपदं राजन्न् (०५६-०१५)
एकभक्तेन यः क्षपेत् (०५६-०१५)
धनाढ्यो वीर्यवांश् चैव (०५६-०१५)

ऐश्वर्यं प्रतिपद्यते (०५६-०१५)
यः क्षपेद् एकभक्तेन (०५६-०१६)
मासम् आश्वयुजं नरः (०५६-०१६)
धनवान् वाहनाढ्यश् च (०५६-०१६)
बहुपुत्रश् च जायते (०५६-०१६)
कार्त्तिकं तु नरो मासं (०५६-०१७)
नित्यम् एकाशनो भवेत् (०५६-०१७)
शूरश् च बहुभार्यश् च (०५६-०१७)
कीर्तिमांश् चैव जायते (०५६-०१७)
एते मासा नरश्रेष्ठ (०५६-०१८)
एकभक्तेन कीर्तिताः (०५६-०१८)
तिथीनां नियमांश् चैव (०५६-०१८)
तान् शृणुष्व नराधिप (०५६-०१८)
पक्षे पक्षे चतुर्थं तु (०५६-०१९)
भक्तं यः क्षपयेन् नरः (०५६-०१९)
विपुलं धनम् आप्नोति (०५६-०१९)
भगवान् अग्निर् अब्रवीत् (०५६-०१९)
मासे मासे चतुर्थं तु (०५६-०२०)
भक्तम् एकं तु यः क्षपेत् (०५६-०२०)
कृषिभागी यशोभागी (०५६-०२०)
तेजस्वी चापि जायते (०५६-०२०)
पक्षे पक्षे त्रिरात्रं तु (०५६-०२१)
यः क्षपेन् नरपुङ्गव (०५६-०२१)
गणे घोषे पुरे ग्रामे (०५६-०२१)
माहात्म्यं प्रतिपद्यते (०५६-०२१)
मासे मासे त्रिरात्रं तु (०५६-०२२)
भक्तेनैकेन यः क्षपेत् (०५६-०२२)
गणाधिपत्यं लभते (०५६-०२२)
निःसपत्नम् अकण्टकम् (०५६-०२२)
यस् तु सायं तथा कल्यं (०५६-०२३)
भुङ्क्ते नैवान्तरा पिबेत् (०५६-०२३)
अहिंसानिरतो नित्यं (०५६-०२३)
जुह्वानो जातवेदसम् (०५६-०२३)
षड्भिर् एव तु वर्षैस् तु (०५६-०२४)
सिध्यते नात्र संशयः (०५६-०२४)
अग्निष्टोमस्य यज्ञस्य (०५६-०२४)
फलं प्राप्नोति मानवः (०५६-०२४)
अष्टमेन तु भक्तेन (०५६-०२५)
राजन् संवत्सरं नयेत् (०५६-०२५)
गवामयस्य यज्ञस्य (०५६-०२५)
फलं प्राप्नोति मानवः (०५६-०२५)
हंससारसयुक्तेन (०५६-०२६)
विमानेन स गच्छति (०५६-०२६)
पूर्णं वर्षसहस्रं तु (०५६-०२६)
स्वर्गलोके महीयते (०५६-०२६)
आर्तो वा व्याधितो वापि (०५६-०२७)
गच्छेद् अनशनं तु यः (०५६-०२७)
पदे पदे यज्ञफलं (०५६-०२७)
तस्य मन्नामकीर्तनात् (०५६-०२७)

दिव्यऋक्षप्रयुक्तेन (०५६-०२८)
विमानेन स गच्छति (०५६-०२८)
शतम् अप्सरसां चैव (०५६-०२८)
रमयन्तीह तं नरम् (०५६-०२८)
सहस्रशतसंयुक्ते (०५६-०२९)
विमाने सूर्यवर्चसे (०५६-०२९)
आरूढस्त्रीशताकीर्णे (०५६-०२९)
विहरन् सुखम् एधते (०५६-०२९)
न क्रुद्धो व्याधितो नार्तः (०५६-०३०)
प्रसन्नमनसेन्द्रियः (०५६-०३०)
गच्छेद् अनशनं यस् तु (०५६-०३०)
तस्यापि शृणु यत् फलम् (०५६-०३०)
शतं वर्षसहस्राणां (०५६-०३१)
स्वर्गलोके महीयते (०५६-०३१)
स्वस्थः सफलसंकल्पः (०५६-०३१)
सुखी विगतकल्मषः (०५६-०३१)
स्त्रीसहस्रसमाकीर्णे (०५६-०३१)
सुप्रभे सुखम् एधते (०५६-०३१)
यावन्ति रोमकूपानि (०५६-०३२)
तस्य गात्रेषु भारत (०५६-०३२)
तावद्वर्षसहस्राणि (०५६-०३२)
दिव्यानि दिवि मोदते (०५६-०३२)
नास्ति वेदात् परं शास्त्रं (०५६-०३३)
नास्ति मातृसमो गुरुः (०५६-०३३)
न धर्मात् परमो लाभस् (०५६-०३३)
तपो नानशनात् परम् (०५६-०३३)
ब्राह्मणेभ्यः परं नास्ति (०५६-०३४)
दिवि चेह च पावनम् (०५६-०३४)
उपवासैस् तथा तुल्यं (०५६-०३४)
तपो ह्य् अन्यन् न विद्यते (०५६-०३४)
उपोष्य विधिवद् देवास् (०५६-०३५)
त्रिदिवं प्रतिपेदिरे (०५६-०३५)
मुनयश् च परां सिद्धिम् (०५६-०३५)
उपवासैर् अवाप्नुवन् (०५६-०३५)
दिव्यं वर्षसहस्रं तु (०५६-०३६)
विश्वामित्रेण धीमता (०५६-०३६)
क्षान्तम् एकेन भक्तेन (०५६-०३६)
येन विप्रत्वम् आगतः (०५६-०३६)
च्यवनो जमदग्निश् च (०५६-०३७)
वसिष्ठो गौतमो भृगुः (०५६-०३७)
सर्वे ह्य् एते दिवं प्राप्ताः (०५६-०३७)
क्षमावन्तो बहुश्रुताः (०५६-०३७)
विधिनानेन राजेन्द्र (०५६-०३७)
यो मया परिकीर्तितः (०५६-०३७)
पठेत यो वै शृणुयाच् च भक्त्या (०५६-०३८)
न विद्यते तस्य नरस्य पापम् (०५६-०३८)
उपद्रवैर् मुच्यते सर्वाङ्गिकैर् (०५६-०३८)
न चापि पापैर् अभिभूयते नरः (०५६-०३८)
ब्राह्मणत्वं सुदुष्प्रापं (०५७-००१)

निसर्गाद् ब्राह्मणो भवेत् (०५७-००१)
क्षत्रियो वाथवा वैश्यो (०५७-००१)
निसर्गाद् एव जायते (०५७-००१)
दुष्कृतेन तु दुष्टात्मा (०५७-००२)
स्थानाद् भ्रश्यति मानवः (०५७-००२)
श्रेष्ठं स्थानं समासाद्य (०५७-००२)
तस्माद् रक्षेत पण्डितः (०५७-००२)
यस् तु विप्रत्वम् उत्सृज्य (०५७-००३)
क्षत्रियत्वं निषेवते (०५७-००३)
ब्राह्मण्यात् स परिभ्रष्टः (०५७-००३)
क्षत्रयोन्यां प्रसूयते (०५७-००३)
वैश्यकर्माणि वा कुर्वन् (०५७-००४)
वैश्ययोनौ प्रजायते (०५७-००४)
शूद्रकर्माणि कुर्वाणः (०५७-००४)
शूद्रत्वम् उपपद्यते (०५७-००४)
स तत्र दुर्गतिं प्राप्य (०५७-००५)
स्थानाद् भ्रष्टो युधिष्ठिर (०५७-००५)
शूद्रयोनिम् अनुप्राप्तो (०५७-००५)
यदि धर्मं न सेवते (०५७-००५)
मानुष्यात् स परिभ्रष्टस् (०५७-००६)
तिर्यग्योनौ प्रजायते (०५७-००६)
अधर्मसेवनान् मूढस् (०५७-००६)
तमोपहतचेतनः (०५७-००६)
जात्यन्तरसहस्राणि (०५७-००७)
तत्रैव परिवर्तते (०५७-००७)
तस्मात् प्राप्य शुभं स्थानं (०५७-००७)
प्रमादान् न तु नाशयेत् (०५७-००७)
शूद्रान्नेनावशेषेण (०५७-००८)
यो म्रियेज् जठरे द्विजः (०५७-००८)
आहिताग्निस् तथा यज्वा (०५७-००८)
स शूद्रगतिभाग् भवेत् (०५७-००८)
क्षत्रान्नेनावशेषेण (०५७-००९)
क्षत्रत्वम् उपपद्यते (०५७-००९)
वैश्यान्नेनावशेषेण (०५७-००९)
वैश्यत्वम् उपपद्यते (०५७-००९)
तां योनिं लभते विप्रो (०५७-००९)
भुक्त्वान्नं यस्य वै मृतः (०५७-००९)
ब्राह्मणत्वं शुभं प्राप्य (०५७-०१०)
दुर्लभं यो ऽवमन्यते (०५७-०१०)
भोज्याभोज्यं न जानाति (०५७-०१०)
स भवेत् क्षत्रियो द्विजः (०५७-०१०)
कर्मणा येन मेधावी (०५७-०११)
शूद्रो वैश्यो ऽभिजायते (०५७-०११)
तत् ते वक्ष्यामि निखिलं (०५७-०११)
येन वर्णोत्तमो भवेत् (०५७-०११)
शूद्रकर्म यथोद्दिष्टं (०५७-०१२)
शूद्रो भूत्वा समाचरेत् (०५७-०१२)
यथावत् परिचर्यां तु (०५७-०१२)
त्रिषु वर्णेषु नित्यदा (०५७-०१२)

कुरुते ऽविमना यस् तु (०५७-०१२)
स शूद्रो वैश्यतां व्रजेत् (०५७-०१२)
क्षत्रियत्वं यथा वैश्यस् (०५७-०१३)
तद् वक्ष्याम्य् अनुपूर्वशः (०५७-०१३)
चौक्षः पापजनद्वेष्टा (०५७-०१३)
शेषान्नकृतभोजनः (०५७-०१३)
अग्निहोत्रम् उपादाय (०५७-०१४)
जुह्वानश् च यथाविधि (०५७-०१४)
स वैश्यः क्षत्रियकुले (०५७-०१४)
जायते नात्र संशयः (०५७-०१४)
क्षत्रियो ब्रह्मयोन्यां तु (०५७-०१५)
जायते शृणु तद् यथा (०५७-०१५)
ददाति यजते यज्ञैर् (०५७-०१५)
विधिवच् चाप्तदक्षिणैः (०५७-०१५)
अधीते स्वर्गम् अन्विच्छंस् (०५७-०१५)
त्रेताग्निशरणः सदा (०५७-०१५)
आर्तहस्तप्रदो नित्यं (०५७-०१६)
प्रजा धर्मेण पालयन् (०५७-०१६)
ऋतुकाले तु स्वां भार्याम् (०५७-०१६)
अभिगच्छन् विधानतः (०५७-०१६)
सर्वातिथ्यं त्रिवर्गस्य (०५७-०१७)
दीयतां भुज्यताम् इति (०५७-०१७)
शूद्राणां याचकानां च (०५७-०१७)
नित्यं सिद्धिम् इति ब्रुवन् (०५७-०१७)
गोब्राह्मणस्य चार्थाय (०५७-०१८)
रणे चाभिमुखो हतः (०५७-०१८)
त्रेताग्निमन्त्रपूतात्मा (०५७-०१८)
क्षत्रियो ब्राह्मणो भवेत् (०५७-०१८)
विधिज्ञः क्षत्रियकुले (०५७-०१८)
याजकः स तु जायते (०५७-०१८)
प्राप्यते ऽविकलः स्वर्गो (०५७-०१९)
वर्णैः सत्पथम् आस्थितैः (०५७-०१९)
ब्राह्मणत्वं सुदुष्प्रापं (०५७-०१९)
कृच्छ्रेणासाद्यते नरैः (०५७-०१९)
तस्मात् सर्वप्रयत्नेन (०५७-०१९)
रक्षेद् ब्राह्मण्यम् उत्तमम् (०५७-०१९)
सुवर्णं परमं दानं (०५८-००१)
सुवर्णं दक्षिणा परा (०५८-००१)
एतत् पवित्रं परमम् (०५८-००१)
एतत् स्वस्त्ययनं महत् (०५८-००१)
दश पूर्वापरान् वंशान् (०५८-००२)
आत्मानं च विशाम्यते (०५८-००२)
अपि पापशतं कृत्वा (०५८-००२)
दत्त्वा विप्रेषु तारयेत् (०५८-००२)
सुवर्णं ये प्रयच्छन्ति (०५८-००३)
नराः शुद्धेन चेतसा (०५८-००३)
देवतास् ते प्रयच्छन्ति (०५८-००३)
समस्ता इति नः श्रुतम् (०५८-००३)
अग्निर् हि देवताः सर्वाः (०५८-००४)

सुवर्णं च हुताशनः (०५८-००४)
तस्मात् सुवर्णं ददता (०५८-००४)
दत्ताः सर्वाश् च देवताः (०५८-००४)
अग्न्यभावे च कुर्वन्ति (०५८-००५)
वह्निस्थानेषु काञ्चनम् (०५८-००५)
सर्ववेदप्रमाणज्ञा (०५८-००५)
वेदश्रुतिनिदर्शनात् (०५८-००५)
ये त्व् एनं ज्वालयित्वाग्निम् (०५८-००६)
आदित्योदयनं प्रति (०५८-००६)
दद्युर् वै व्रतम् उद्दिश्य (०५८-००६)
सर्वान् कामान् अवाप्नुयुः (०५८-००६)
सुवर्णदः स्वर्गलोके (०५८-००७)
कामान् इष्टान् उपाश्नुते (०५८-००७)
विरजाम्बरसंवीतः (०५८-००७)
परियाति यतस् ततः (०५८-००७)
विमानेनार्कवर्णेन (०५८-००८)
भास्वरेण विराजता (०५८-००८)
अप्सरोगणसंकीर्णे (०५८-००८)
भास्वता स्वेन तेजसा (०५८-००८)
हंसबर्हिणयुक्तेन (०५८-००९)
कामगेन नरोत्तमः (०५८-००९)
दिव्यगन्धवहः स्वर्गे (०५८-००९)
परिगच्छेद् इतस् ततः (०५८-००९)
तस्मात् स्वशक्त्या दातव्यं (०५८-०१०)
काञ्चनं मानवैर् भुवि (०५८-०१०)
न ह्य् अतः परमं लोके (०५८-०१०)
सद्यः पापविमोचनम् (०५८-०१०)
सुवर्णस्य तु शुद्धस्य (०५८-०११)
सुवर्णं यः प्रयच्छति (०५८-०११)
बहून्य् अब्दसहस्राणि (०५८-०११)
स्वर्गलोके महीयते (०५८-०११)
लोकांस् तु सृजता पूर्वं (०५९-००१)
गावः सृष्टाः स्वयंभुवा (०५९-००१)
प्रीत्यर्थं सर्वभूतानां (०५९-००१)
तस्मात् ता मातरः स्मृताः (०५९-००१)
तास् तु दत्त्वा सौरभेयीः (०५९-००२)
स्वर्गलोके महीयते (०५९-००२)
तस्मात् ता वर्णयिष्यामि (०५९-००२)
दानं चासां यथाविधि (०५९-००२)
यादृशी विधिना येन (०५९-००३)
दातव्या यादृशाय च (०५९-००३)
द्विजाय पोषणार्थं तु (०५९-००३)
होमधेनुकृते न वै (०५९-००३)
प्रथमा गौरकपिला (०५९-*(७०))
द्वितीया गौरपिङ्गला (०५९-*(७०))
तृतीया रक्तकपिला (०५९-*(७०))
चतुर्थी नीलपिङ्गला (०५९-*(७०))
पञ्चमी शुक्लपिङ्गाक्षी (०५९-*(७०))
षष्ठी तु शुक्लपिङ्गला (०५९-*(७०))

सप्तमी चित्रपिङ्गाक्षी (०५९-*(७०))
अष्टमी बभ्रुरोहिणी (०५९-*(७०))
नवमी श्वेतपिङ्गाक्षी (०५९-*(७०))
दशमी श्वेतपिङ्गला (०५९-*(७०))
तादृशा ये ऽप्य् अनड्वाहः (०५९-*(७०))
कपिलास् ते प्रकीर्तिताः (०५९-*(७०))
ब्राह्मणो वाहयेत् तांस् तु (०५९-*(७०))
नान्यो वर्णः कदाचन (०५९-*(७०))
धेनुं दत्त्वा सुव्रतां सोपधानां (०५९-००४)
कल्याणवत्सां च पयस्विनीं च (०५९-००४)
यावन्ति रोमाणि भवन्ति धेन्वा (०५९-००४)
दुह्येत कामान् नृप वर्षाणि तावत् (०५९-००४)
प्रयच्छते यः कपिलां सवत्सां (०५९-००५)
कांस्योपदोहां कनकाग्रशृङ्गीम् (०५९-००५)
तैस् तैर् गुणैः काम्दुघा हि भूत्वा (०५९-००५)
नरं प्रदातारम् उपैति सा गौः (०५९-००५)
गोसहस्रं तु यो दद्यात् (०५९-००६)
सर्वकामैर् अलंकृतम् (०५९-००६)
परां वृद्धिं श्रियं प्राप्य (०५९-००६)
स्वर्गलोके महीयते (०५९-००६)
दश चोभयतः प्रेत्य (०५९-००७)
मातामहपितामहैः (०५९-००७)
गच्छेत् सुकृतिनां लोकान् (०५९-००७)
गावो दत्त्वा यथाविधि (०५९-००७)
दायादलब्धैर् अर्थैर् यो (०५९-००८)
गवाः क्रीत्वा प्रयच्छति (०५९-००८)
तस्यापि चाक्षया लोका (०५९-००८)
भवन्तीह परत्र च (०५९-००८)
यो द्यूतेन धनं जित्वा (०५९-००९)
क्रीत्वा गावः प्रयच्छति (०५९-००९)
स गच्छेद् विरजांल् लोकान् (०५९-००९)
गोप्रदानफलार्जितान् (०५९-००९)
प्रतिगृह्य तु यो दद्याद् (०५९-०१०)
गावः शुद्धेन चेतसा (०५९-०१०)
स गत्वा दुर्गमं स्थानम् (०५९-०१०)
अमरैः सह मोदते (०५९-०१०)
यश् चात्मविक्रयं कृत्वा (०५९-०११)
गावो दद्याद् यथाविधि (०५९-०११)
स गत्वा विरजांल् लोकान् (०५९-०११)
सुखं वसति देववत् (०५९-०११)
संग्रामे यस् तनुं त्यक्त्वा (०५९-०१२)
गावः क्रीत्वा प्रयच्छति (०५९-०१२)
देहविक्रयमूल्यस् ताः (०५९-०१२)
शाश्वताः कामदोहनाः (०५९-०१२)
रूपान्विताः शीलवयोपपन्नाः (०५९-०१३)
सर्वाः प्रशस्ता हि सुगन्धवत्यः (०५९-०१३)
यथा हि गङ्गा सरितां वरिष्ठा (०५९-०१३)
तथार्जुनीनां कपिला वरिष्ठा (०५९-०१३)
अन्तर्जाताः सुक्रयज्ञानलब्धाः (०५९-०१४)

प्राणांस् त्यक्त्वा सोदकाः सोद्वहाश् च (०५९-०१४)
कृच्छ्रोत्सृष्टाः पोषणायाभ्युपेता (०५९-०१४)
द्वारैर् एतैर् गोविशेषा वरिष्ठाः (०५९-०१४)
तिस्रो रात्र्यश् चाप्य् उपोष्येह दाता (०५९-०१५)
तृप्ता गा वै तर्पितेभ्यः प्रयच्छेत् (०५९-०१५)
वत्सैः पीताः सोपधानास् त्र्यहं च (०५९-०१५)
दत्त्वा गा वै गोरसैर् वर्तितव्यम् (०५९-०१५)
लोके ज्येष्ठा लोकवृत्तान्तवृत्ता (०५९-०१६)
वेदैर् गीताः सोमनिष्यन्दभूताः (०५९-०१६)
सौम्याः पुण्याः कामदाः प्राणदाश् च (०५९-०१६)
गावो दत्त्वा सर्वदा सन्ति सन्तः (०५९-०१६)
न चैवासां दानमात्रं प्रशस्तं (०५९-०१७)
पात्रं कालो गोविशेषो विधिश् च (०५९-०१७)
दृष्ट्वा गावः पावकादित्यभूताः (०५९-०१७)
स्वाध्यायाढ्ये पात्रवर्ये विशिष्टे (०५९-०१७)
वैतानस्थं सत्यवाक्यं कृतज्ञं (०५९-०१८)
गोषु क्षान्तं गोशरण्यं सुवृत्तं (०५९-०१८)
शस्तं पात्रं गोप्रदानस्य भूमेस् (०५९-०१८)
तथा सुवर्णस्य च सर्वकालम् (०५९-०१८)
भिक्षादानं चाधिकं संप्रशस्तं (०५९-*(७१))
पाथोदानं चान्नदानं तथा च (०५९-*(७१))
भिक्षते बहुभृत्याय (०५९-०१९)
श्रोत्रियायाहिताग्नये (०५९-०१९)
दातव्या गौः प्रयत्नेन (०५९-०१९)
एकाप्य् अतिफला हि सा (०५९-०१९)
तां चेद् विक्रीणते राजन् (०५९-०२०)
वचसा कलुषीकृताम् (०५९-०२०)
नासौ प्रशस्यते विप्रो (०५९-०२०)
ब्राह्मणो नैव स स्मृतः (०५९-०२०)
तस्याधर्मप्रवृत्तस्य (०५९-०२१)
लुब्धस्यानृतवादिनः (०५९-०२१)
हव्यकव्यव्यपेतस्य (०५९-०२१)
न देया गौः कथंचन (०५९-०२१)
जीर्णां चैवोपभुक्तां च (०५९-०२२)
जरत्कूपम् इवाफलाम् (०५९-०२२)
तमः प्रविशते दाता (०५९-०२२)
द्विजं क्लेशेन योजयन् (०५९-०२२)
दुष्टाः कृशाश् चैव पालयतीश् च (०५९-०२३)
नैतादृशा दानयोग्या भवन्ति (०५९-०२३)
क्लेशैर् विप्रं यो ऽफलैः संयुनक्ति (०५९-०२३)
गच्छेत् स तिर्यग् विफलांश् च लोकान् (०५९-०२३)
अनड्वाहं सुव्रतं यो ददाति (०५९-०२४)
हलस्य वोढारम् अनन्तवीर्यम् (०५९-०२४)
युगंधरं बलवन्तं युवानं (०५९-०२४)
प्राप्नोति लोकान् दशधेनुदस्य (०५९-०२४)
प्रयच्छते यः पुरुषो द्विजाय (०५९-०२५)
स्वाध्यायचारित्रगुणान्विताय (०५९-०२५)
बलेन युक्तं वृषभं तु नीलं (०५९-०२५)
षडाङ्गवं प्रीतिकरं सुरूपम् (०५९-०२५)

युवानं बलिनं श्यामं (०५९-०२६)
शतेन सह यूथपम् (०५९-०२६)
गवेन्द्रं ब्राह्मणेन्द्राय (०५९-०२६)
भूरिशृङ्गम् अलंकृतम् (०५९-०२६)
वृषभं ये प्रयच्छन्ति (०५९-०२७)
श्रोत्रियायाहिताग्नये (०५९-०२७)
ते गत्वा तद्गवां लोकं (०५९-*(७२))
देवलोकान् महत्तरम् (०५९-*(७२))
तत्र स्थित्वा तु सुचिरं (०५९-*(७२))
सर्वकामैः सुतर्पिताः (०५९-*(७२))
ऐश्वर्ये ते ऽभिजायन्ते (०५९-०२७)
जायमानाः पुनः पुनः (०५९-०२७)
सदक्षिणां काञ्चनरूप्यशृङ्गीं (०५९-०२८)
कांस्योपदोहां कनकोत्तरीयाम् (०५९-०२८)
धेनुं तिलानां कनकोत्तरीयाम् (०५९-०२८)
लोका वसूनाम् अचला भवन्ति (०५९-०२८)
तिलालाभे तु यो दद्याद् (०५९-०२९)
घृतधेनुं यतव्रतः (०५९-०२९)
स दुर्गात् तारितो धेन्वा (०५९-०२९)
ब्रह्मलोके महीयते (०५९-०२९)
घृतालाभे तु यो दद्याज् (०५९-०३०)
जलधेनुं यतव्रतः (०५९-०३०)
स सर्वं तरते दुर्गं (०५९-०३०)
जलं दिव्यं समश्नुते (०५९-०३०)
ब्राह्मणाश् चैव गावश् च (०५९-०३१)
कुलम् एकं द्विधाकृतम् (०५९-०३१)
एकत्र मन्त्रास् तिष्ठन्ति (०५९-०३१)
हविर् एकत्र तिष्ठति (०५९-०३१)
उपगम्य तु यो दद्याद् (०५९-०३२)
गावः शुद्धेन चेतसा (०५९-०३२)
यावन्ति तासां रोमाणि (०५९-०३२)
तावत् स्वर्गे महीयते (०५९-०३२)
शृणु त्वं मे गवां लोका (०५९-०३३)
यादृशा यत्र वा स्थिताः (०५९-०३३)
मनोज्ञा रमणीयाश् च (०५९-०३३)
सर्वकामदुघाः सदा (०५९-०३३)
पुण्याः पापहराश् चैव (०५९-०३४)
गवां लोका न संशयः (०५९-०३४)
अत्यन्तसुखिनस् तत्र (०५९-०३४)
सर्वपापविवर्जिताः (०५९-०३४)
प्रमोदन्ते महास्थाने (०५९-०३५)
नरा विगतकल्मषाः (०५९-०३५)
ते व्रजन्ते विमानेषु (०५९-०३५)
ग्रहा दिवि गता इव (०५९-०३५)
एवं यैर् दत्तसत्काराः (०५९-०३६)
सुरभ्यश् चार्चिताः सदा (०५९-०३६)
कामरूपा महात्मानः (०५९-०३६)
पूता विगतकिल्बिषाः (०५९-०३६)
तुल्यप्रभावा देवैस् ते (०५९-०३७)

मोदन्ते ऽप्सरसां गणैः (०५९-०३७)
गन्धर्वैर् उपगीयन्ते (०५९-०३७)
गोशरण्या न संशयः (०५९-०३७)
ब्रह्मण्याः साधुवृत्ताश् च (०५९-०३८)
दयावन्तो ऽनुकम्पिनः (०५९-०३८)
घृणिनः शुभकर्माणो (०५९-०३८)
मोदन्ते ते ऽमरैः सह (०५९-०३८)
यथैव सलिले मत्स्यः (०५९-०३९)
सलिलेन सहोह्यते (०५९-०३९)
गोभिः पापकृतं कर्म (०५९-०३९)
दृढम् एव मयोह्यते (०५९-०३९)
मातरः सर्वभूतानां (०५९-०४०)
प्रजासंरक्षणे स्मृताः (०५९-०४०)
ब्रह्मणा लोकसारेण (०५९-०४०)
गावः पापभयापहाः (०५९-०४०)
तासु दत्तासु राजेन्द्र (०५९-०४१)
किं न दत्तं भवेद् इह (०५९-०४१)
कृशाय तु विशेषेण (०५९-०४१)
वृत्तिग्लानाय सीदते (०५९-०४१)
भूदानेन समं दानं (०६०-००१)
न भूतं न भविष्यति (०६०-००१)
इति धर्मविदः प्राहुस् (०६०-००१)
तन् मे निगदतः शृणु (०६०-००१)
षष्टिं वर्षसहस्राणि (०६०-००२)
स्वर्गे वसति भूमिदः (०६०-००२)
आच्छेत्ता चानुमन्ता च (०६०-००२)
तान्य् एव नरके वसेत् (०६०-००२)
अतिदानं तु सर्वेषां (०६०-००३)
भूमिदानम् इहोच्यते (०६०-००३)
अचला ह्य् अक्षया भूमिः (०६०-००३)
सर्वान् कामान् प्रयच्छति (०६०-००३)
भूमिदः स्वर्गम् आरुह्य (०६०-००४)
शाश्वतीर् एधति समाः (०६०-००४)
पुनश् च जन्म संप्राप्य (०६०-००४)
भवेद् भूमिपतिर् ध्रुवम् (०६०-००४)
यथा भूमिः सदा देवी (०६०-००५)
दातारं कुरुते पतिम् (०६०-००५)
एवं सदक्षिणा दत्ता (०६०-००५)
कुरुते गौर् जनाधिपम् (०६०-००५)
अपि पापकृतं प्राप्य (०६०-००६)
प्रतिगृह्णीत भूमिदम् (०६०-००६)
महीं ददन् पवित्री स्यात् (०६०-००६)
पुण्या हि जगती यतः (०६०-००६)
नाम वै प्रियदत्तेति (०६०-००७)
गुह्यम् एतत् सनातनम् (०६०-००७)
तद् अस्याः सततं प्रीत्यै (०६०-००७)
कीर्तनीयं प्रयच्छता (०६०-००७)
यत् किंचित् कुरुते पापं (०६०-००८)
पुरुषो वृत्तिकर्षितः (०६०-००८)

अपि गोचर्ममात्रेण (०६०-००८)
भूमिदानेन शुध्यति (०६०-००८)
सुवर्णं रजतं ताम्रं (०६०-००९)
मणिमुक्तावसूनि च (०६०-००९)
सर्वान् एतान् महाप्राज्ञ (०६०-००९)
ददाति वसुधां ददन् (०६०-००९)
तपो यज्ञाः श्रुतं शीलम् (०६०-०१०)
अलोभः सत्यवादिता (०६०-०१०)
गुरुदैवतपूजा च (०६०-०१०)
नातिक्रमन्ति भूमिदम् (०६०-०१०)
भर्तुर् निःश्रेयसे युक्तास् (०६०-०११)
त्यक्तात्मानो रणे हताः (०६०-०११)
ब्रह्मलोकगताः सन्तो (०६०-०११)
नातिक्रामन्ति भूमिदम् (०६०-०११)
फलकृष्टां महीं दत्त्वा (०६०-०१२)
सोदकां सफलान्विताम् (०६०-०१२)
सोदकं वापि शरणं (०६०-०१२)
प्राप्नोति मम संपदम् (०६०-०१२)
रत्नोपकीऋणां वसुधां (०६०-०१३)
यो ददाति द्विजातये (०६०-०१३)
मुक्तः स कलुषैः सर्वैः (०६०-०१३)
स्वर्गलोके महीयते (०६०-०१३)
इक्षुभिः संततां भूमिं (०६०-०१४)
यवगोधूमशाड्बलाम् (०६०-०१४)
ये प्रयच्छन्ति विप्रेभ्यो (०६०-०१४)
नोपसर्पन्ति ते यमम् (०६०-०१४)
सर्वकामदुघां धेनुं (०६०-०१५)
सर्वसस्यसमुद्भवाम् (०६०-०१५)
यो ददाति द्विजेन्द्राय (०६०-०१५)
ब्रह्मलोकं स गच्छति (०६०-०१५)
भूमिदानं नरः कुर्वन् (०६०-०१६)
मुच्यते महतो भयात् (०६०-०१६)
न भूयो भूमिदानाद् धि (०६०-०१६)
दानम् अन्यद् विशिष्यते (०६०-०१६)
पुण्यां सर्वरसां भूमिं (०६०-०१७)
यो ददाति नरर्षभ (०६०-०१७)
न तस्य लोकाः क्षीयन्ते (०६०-०१७)
भूमिदस्य महात्मनः (०६०-०१७)
यथा जनित्री पुष्णाति (०६०-०१८)
क्षीरेण स्वसुतं नृप (०६०-०१८)
एवं सर्वगुणा भूमिर् (०६०-०१८)
दातारम् अनुपुष्यति (०६०-०१८)
अग्निष्टोमादिभिर् यज्ञैर् (०६०-०१९)
इष्ट्वा विपुलदक्षिणैः (०६०-०१९)
न तत् फलं अवाप्नोति (०६०-०१९)
यद् दत्त्वा वसुधां नृप (०६०-०१९)
मृत्योर् हि किंकरा दण्डा ह्य् (०६०-०२०)
अग्नितापाः सुदारुणाः (०६०-०२०)
घोराश् च वारुणाः पाशा (०६०-०२०)

नोपसर्पन्ति भूमिदम् (०६०-०२०)
पितरः पितृलोकस्था (०६०-०२१)
देवलोके दिवौकसः (०६०-०२१)
संतर्पयन्ति दातारं (०६०-०२१)
भूमेः प्रभवतां वर (०६०-०२१)
कृशाय कृशभृत्याय (०६०-०२२)
वृत्तिक्षीणाय सीदते (०६०-०२२)
भूमिं वृत्तिकारीं दत्त्वा (०६०-०२२)
सत्री भवति मानवः (०६०-०२२)
सिंहासनं तथा च्छत्त्रं (०६०-०२३)
वराश्वा वरवारणाः (०६०-०२३)
भूमिदानस्य पुष्पाणि (०६०-०२३)
फलं स्वर्गं तथैव च (०६०-०२३)
आदित्या इव दीप्यन्ते (०६०-०२४)
तेजसा दिवि मानवाः (०६०-०२४)
ये प्रयच्छन्ति वसुधां (०६०-०२४)
ब्राह्मणायाहिताग्नये (०६०-०२४)
यथा बीजानि रोहन्ति (०६०-०२५)
प्रकीर्णानि महीतले (०६०-०२५)
तथा कामाधिरोहन्ति (०६०-०२५)
भूमिदानगुणार्जिताः (०६०-०२५)
आस्फोटयन्ति पितरः (०६०-०२६)
प्रवल्गन्ति पितामहाः (०६०-०२६)
भूमिदो नः कुले जातः (०६०-०२६)
स नः संतारयिष्यति (०६०-०२६)
आदित्या वसवो रुद्रा ह्य् (०६०-०२७)
अश्विनौ वसुभिः सह (०६०-०२७)
शूलपाणिश् च भगवान् (०६०-०२७)
अभिनन्दन्ति भूमिदम् (०६०-०२७)
स नः कुलस्य पुरुषः (०६०-०२८)
स नो बन्धुः स नो गतिः (०६०-०२८)
स दाता स च विक्रान्तो (०६०-०२८)
यो ददाति वसुंधराम् (०६०-०२८)
दातारम् अनुगृह्णाति (०६०-०२९)
यथा दत्तेन रोचते (०६०-०२९)
पूर्वदत्तां हरन् भूमिं (०६०-०२९)
नरकायोपपद्यते (०६०-०२९)
विन्ध्याटवीष्व् अतोयासु (०६०-०३०)
शुष्ककोटरवासिनः (०६०-०३०)
कृष्णसर्पा हि जायन्ते (०६०-०३०)
ये हरन्ति वसुंधराम् (०६०-०३०)
पतन्त्य् अश्रूणि रुदतां (०६०-०३१)
दीनानाम् अवसीदताम् (०६०-०३१)
ब्राह्मणानां हृतं क्षेत्रं (०६०-०३१)
हन्यात् त्रिपुरुषं कुलम् (०६०-०३१)
साधुभ्यो भूमिम् आक्षिप्य (०६०-०३२)
न भूतिं विन्दते क्वचित् (०६०-०३२)
दत्त्वा हि भूमिं साधुभ्यो (०६०-०३२)
विन्दते भूतिम् उत्तमाम् (०६०-०३२)

पूर्वदत्तां द्विजातिभ्यो (०६०-०३३)
यत्नाद् रक्ष युधिष्ठिर (०६०-०३३)
महीं महीभृतां श्रेष्ठ (०६०-०३३)
दानाच् छ्रेयो ऽनुपालनम् (०६०-०३३)
यत्रैषः पठ्यते श्राद्धे (०६०-०३४)
भूमिदानस्य संस्तवः (०६०-०३४)
न तत्र रक्षसां भागो (०६०-०३४)
नासुराणां कथंचन (०६०-०३४)
अक्षयं तु भवेच् छ्राद्धं (०६०-०३५)
पितॄणां नात्र संशयः (०६०-०३५)
तस्माद् विश्रावयेद् एनं (०६०-०३५)
श्राद्धेषु ब्राह्मणान् सदा (०६०-०३५)
एवम् एतद् यथोद्दिष्टं (०६०-०३६)
पितॄणां दत्तम् अक्षयम् (०६०-०३६)
भूमिदानं महाराज (०६०-०३६)
सर्वपापापहं शुभम् (०६०-०३६)
अग्निष्टोमादिभिर् यज्ञैर् (०६१-००१)
इष्ट्वा विपुलदक्षिणैः (०६१-००१)
न तत् फलम् अवाप्नोति (०६१-००१)
संग्रामे यद् अवाप्नुयात् (०६१-००१)
इति यज्ञविदः प्राहुर् (०६१-००२)
यज्ञकर्मविशारदाः (०६१-००२)
तस्मात् तत् ते प्रवक्ष्यामि (०६१-००२)
यत् फलं शस्त्रजीविनाम् (०६१-००२)
धर्मलाभो ऽर्थलाभश् च (०६१-००३)
यशोलाभस् तथैव च (०६१-००३)
यः शूरो वध्यते युद्धे (०६१-००३)
विमृदन् परवाहिनीम् (०६१-००३)
तस्य धर्मार्थकामाश् च (०६१-००३)
यज्ञाश् चैवाप्तदक्षिणाः (०६१-००३)
परं ह्य् अभिमुखं हत्वा (०६१-००४)
तद्यानं यो ऽधिरोहति (०६१-००४)
विष्णुक्रान्तं स यजत (०६१-००४)
एवं युध्यन् रणाजिरे (०६१-००४)
अश्वमेधान् अवाप्नोति (०६१-००४)
चतुरस् तेन कर्मणा (०६१-००४)
यस् तु शस्त्रम् अनुत्सृज्य (०६१-००५)
वीर्यवान् वाहिनीमुखे (०६१-००५)
संमुखो वर्तते शूरः (०६१-००५)
स स्वर्गान् न विवर्तते (०६१-००५)
राजानं राजपुत्रं वा (०६१-००६)
सेनापतिम् अथापि वा (०६१-००६)
हन्यात् क्षत्रेण यः शूरस् (०६१-००६)
तस्य लोको ऽक्षयो ध्रुवः (०६१-००६)
यावन्ति तस्य शस्त्राणि (०६१-००७)
भिन्दन्ति त्वचम् आहवे (०६१-००७)
तावतो लभते लोकान् (०६१-००७)
सर्वकामदुघो ऽक्षयान् (०६१-००७)
वीरासनं वीरशय्या (०६१-००८)

वीरस्थानस्थितिः स्थिरा (०६१-००८)
गवार्थे ब्राह्मणार्थे वा (०६१-००८)
स्वाम्यर्थे तु कृतं च यैः (०६१-००८)
ते गच्छन्त्य् अमलं स्थानं (०६१-००८)
यथा सुकृतिनस् तथा (०६१-००८)
अभग्नं यः परं हन्याद् (०६१-००९)
भग्नं च परिरक्षति (०६१-००९)
यस्मिन् स्थिते पलायन्ति (०६१-००९)
सो ऽपि प्राप्नोति स्वर्गतिम् (०६१-००९)
ऊर्ध्वं तिर्यक् च यश् चार्वाक् (०६१-०१०)
प्राणान् संत्यजते युधि (०६१-०१०)
हताश्वश् च पतेद् युद्धे (०६१-०१०)
स स्वर्गान् न निवर्तते (०६१-०१०)
यस्य चिह्नीकृतं गात्रं (०६१-०११)
शरशक्त्यृष्टितोमरैः (०६१-०११)
देवकन्यास् तु तं वीरं (०६१-०११)
रमयन्ति रमन्ति च (०६१-०११)
वराप्सरःसहस्राणि (०६१-०१२)
शूरम् आयोधने हतम् (०६१-०१२)
त्वरितान्य् अभिधावन्ति (०६१-०१२)
मम भर्ता ममेति च (०६१-०१२)
हतस्याभिमुखस्याजौ (०६१-०१३)
पतितस्यानिवर्तिनः (०६१-०१३)
ह्रियते यत् परैर् द्रव्यं (०६१-०१३)
नरमेधफलं तु तत् (०६१-०१३)
भूयो गतिं प्रवक्ष्यामि (०६१-०१४)
रणे ये ऽभिमुखा हताः (०६१-०१४)
शक्यं त्व् इह समृद्धैस् तु (०६१-०१५)
यष्टुं क्रतुशतैर् नरैः (०६१-०१५)
आत्मदेहं तु विप्रार्थे (०६१-०१५)
त्यक्तुं युद्धे सुदुष्करम् (०६१-०१५)
यां यज्ञसंघैस् तपसा च विप्राः (०६१-०१६)
स्वर्गैषिणस् तत्र चयैः प्रयान्ति (०६१-०१६)
क्षणेन ताम् एव गतिं प्रयान्ति (०६१-०१६)
महाहवे स्वां तनुं संत्यजन्तः (०६१-०१६)
सर्वांश् च वेदान् सह षड्भिर् अङ्गैः (०६१-०१७)
सांख्यं च योगं च वने च वासम् (०६१-०१७)
एतान् गुणान् एक एवातिशेते (०६१-०१७)
संग्रामधाम्न्य् आत्मतनुं त्यजेद् यः (०६१-०१७)
इमां गिरं चित्रपदां शुभाक्षरां (०६१-०१८)
सुभाषितां वृतभिदां दिवौकसाम् (०६१-०१८)
चमूमुखे यः स्मरते दृढस्मृतिर् (०६१-०१८)
न हन्यते हन्ति च सो ऽरणे रिपून् (०६१-०१८)
एष पुण्यतमः स्वर्ग्यः (०६१-०१९)
सुयज्ञः सर्वतोमुखः (०६१-०१९)
सर्वेषाम् एव वर्णानां (०६१-०१९)
क्षत्रियस्य विशेषतः (०६१-०१९)
भूयश् चैव प्रवक्ष्यामि (०६१-०२०)
भीष्मवाक्यम् अनुत्तमम् (०६१-०२०)

यादृशाय प्रहर्तव्यं (०६१-०२०)
यादृशं परिवर्जयेत् (०६१-०२०)
आततायिनम् आयान्तम् (०६१-०२१)
अपि वेदान्तगं रणे (०६१-०२१)
जिघांसन्तं जिघांसीयान् (०६१-०२१)
न तेन ब्रह्महा भवेत् (०६१-०२१)
हताश्वश् च न हन्तव्यः (०६१-०२२)
पानीयं यश् च याचते (०६१-०२२)
व्याधितो दुर्बलश् चैव (०६१-०२२)
रथहीनस् तथैव च (०६१-०२२)
भग्नधन्वाच्छिन्नगुणः (०६१-०२३)
प्राणेप्सुः कृपणं ब्रुवन् (०६१-०२३)
विमुक्तकेशो धावेद् यो (०६१-०२३)
यश् चोन्मत्ताकृतिर् भवेत् (०६१-०२३)
पर्णशाखातृणग्राही (०६१-०२४)
तवास्मीति च यो वदेत् (०६१-०२४)
ब्राह्मणो ऽस्मीति यश् चाह (०६१-०२४)
बालो वृद्धो नपुंसकः (०६१-०२४)
तस्माद् एतान् परिहरेद् (०६१-०२५)
यथोद्दिष्टान् रणाजिरे (०६१-०२५)
हतो न हन्यते सद्भिर् (०६१-०२५)
हता एव हि भीरवः (०६१-०२५)
अमांसभक्षणे राजन् (०६२-००१)
यो धर्मः कुरुपुङ्गव (०६२-००१)
तन् मे शृणु यथातथ्यं (०६२-००१)
यश् चास्य विधिर् उत्तमः (०६२-००१)
मासि मास्य् अश्वमेधेन (०६२-००२)
यो यजेत शतं समाः (०६२-००२)
न च खादति यो मांसं (०६२-००२)
समम् एतद् युधिष्ठिर (०६२-००२)
सदा यजति सत्त्रेण (०६२-००३)
सदा दानं प्रयच्छति (०६२-००३)
सदा तपस्वी भवति (०६२-००३)
मधुमांसविवर्जनात् (०६२-००३)
सर्ववेदा न तत् कुर्युः (०६२-००४)
सर्वदानानि चैव हि (०६२-००४)
यो मांसरसम् आस्वाद्य (०६२-००४)
सर्वमांसानि वर्जयेत् (०६२-००४)
दुष्करं हि रसज्ञेन (०६२-००५)
मांसस्य परिवर्जनम् (०६२-००५)
चतुर्व्रतम् इदं श्रेष्ठं (०६२-००५)
प्राणिनां मृत्युभीरुणाम् (०६२-००५)
तदा भवति लोके ऽस्मिन् (०६२-००६)
प्राणिनां जीवितैषिणाम् (०६२-००६)
विश्वास्यश् चोपगम्यश् च (०६२-००६)
न हि हिंसारुदिर् यदा (०६२-००६)
दुष्टरांस् तरते म॥॥आं (०६२-*(७४))
मांसस्य परिवर्जनात् (०६२-*(७४))
प्राणा यथात्मनो ऽभीष्टा (०६२-००७)

भूतानाम् अपि ते तथा (०६२-००७)
आत्मौपम्येन गन्तव्यं (०६२-००७)
बुद्धिमद्भिर् महात्मभिः (०६२-००७)
अहिंसा परमो धर्मः (०६२-००८)
सत्यम् एव च पाण्डव (०६२-००८)
अहिंसा चैव सत्यं च (०६२-००८)
धर्मो हि परमः स्मृतः (०६२-००८)
न हि मांसं तृणात् काष्ठाद् (०६२-००९)
उपलाद् वापि जायते (०६२-००९)
जीवाद् उत्पद्यते मांसं (०६२-*(७५))
तस्माद् गर्हन्ति तद् बुधाः (०६२-*(७५))
यदि वै खादको न स्यान् (०६२-००९)
न तदा घातको भवेत् (०६२-००९)
लोभाद् वा बुद्धिमोहाद् वा (०६२-०१०)
यो मांसान्य् अत्ति मानवः (०६२-०१०)
निर्घृणः स हि मन्तव्यः (०६२-०१०)
सद्धर्मपरिवर्जितः (०६२-०१०)
स्वमांसं परमांसेन (०६२-०११)
यो वर्धयितुम् इच्छति (०६२-०११)
उद्विग्नवासे वसति (०६२-०११)
यत्रतत्राभिजायते (०६२-०११)
धनेन क्रायको हन्ति (०६२-०१२)
उपभोगेन खादकः (०६२-०१२)
घातको वधबन्धाभ्याम् (०६२-०१२)
इत्य् एष त्रिविधो वधः (०६२-०१२)
भक्षयित्वा तु यो मांसं (०६२-०१३)
पश्चाद् अपि निवर्तते (०६२-०१३)
तस्यापि सुमहान् धर्मो (०६२-०१३)
यः पापाद् विनिवर्तते (०६२-०१३)
वरम् एकस्य सत्त्वस्य (०६२-*(७६))
दद्याद् अक्षयदक्षिणाम् (०६२-*(७६))
न तु विप्रसहस्रस्य (०६२-*(७६))
गोसहस्रं सकाञ्चनम् (०६२-*(७६))
यो दद्यात् काञ्चनं मेरुं (०६२-*(७६))
कृत्स्नां वापि वसुंधराम् (०६२-*(७६))
अभक्षणं च मांसस्य (०६२-*(७६))
न तु तुल्यं युधिष्ठिर (०६२-*(७६))
इदम् अन्यत् प्रवक्ष्यामि (०६२-०१३)
पुराणम् ऋषिनिर्मितम् (०६२-०१३)
श्रूयते च पुराकल्पे ह्य् (०६२-०१४)
ऋषीणां व्रीहयः पशुः (०६२-०१४)
यजन्ते येन वै यज्ञान् (०६२-०१४)
ऋषयः पुण्यकर्मिणः (०६२-०१४)
ऋषिभिः संशयं पृष्टो (०६२-०१५)
वसू राजा ततः पुरा (०६२-०१५)
अभक्ष्यं भक्ष्यम् इति वै (०६२-०१५)
मांसम् आह नराधिप (०६२-०१५)
आकाशान् मेदिनीं प्राप्तस् (०६२-०१६)
ततः स पृथिवीपतिः (०६२-०१६)

एतद् एव पुनश् चोक्त्वा (०६२-०१६)
विवेश धरणीतलम् (०६२-०१६)
कौमुदं तु विशेषेण (०६२-०१७)
शुक्लपक्षे नराधिप (०६२-०१७)
वर्जयेत् सर्वमांसानि (०६२-०१७)
धर्मो ह्य् अत्र विधीयते (०६२-०१७)
चतुरो वार्षिकान् मासान् (०६२-०१८)
यो मांसं परिवर्जयेत् (०६२-०१८)
चत्वारि भद्राण्य् आप्नोति (०६२-०१८)
कीर्तिर् आयुर् यशो बलम् (०६२-०१८)
अप्य् एकम् इह यो मासं (०६२-०१९)
सर्वमांसानि वर्जयेत् (०६२-०१९)
अतीत्य सर्वदुःखानि (०६२-०१९)
सुखं जीवेन् निरामयः (०६२-०१९)
यो हि वर्षशतं पूर्णं (०६२-०२०)
तपस् तप्येत् सुदारुणम् (०६२-०२०)
अप्य् एकं वर्जयेन् मासं (०६२-०२०)
मांसम् एतत् समं मतम् (०६२-०२०)
यो वर्जयति मांसानि (०६२-०२१)
मासं पक्षम् अथापि वा (०६२-०२१)
स वै हिंसानिवृत्तस् तु (०६२-०२१)
ब्रह्मलोके महीयते (०६२-०२१)
सर्वकालं तु मांसानि (०६२-०२२)
वर्जितानि महर्षिभिः (०६२-०२२)
मन्वा क्षुपेण श्वेतेन (०६२-०२२)
तथैवेक्ष्वाकुनापि च (०६२-०२२)
भृगुणा नलरामाभ्यां (०६२-०२३)
दिलीपरघुपौरवैः (०६२-०२३)
आयुषा चैव गार्ग्येण (०६२-०२३)
जनकैश् चक्रवर्तिभिः (०६२-०२३)
धुन्धुमाराम्बरीषाभ्यां (०६२-०२४)
नहुषेण च धीमता (०६२-०२४)
गाधिना पुरुकुत्सेन (०६२-०२४)
कुरुणा पुरुणा तथा (०६२-०२४)
मुचुकुन्देन मान्धात्रा (०६२-०२५)
सगरेण महात्मना (०६२-०२५)
शिबिना चाश्वपतिना (०६२-०२५)
वीरसेनादिभिस् तथा (०६२-०२५)
संजयेनाथ भीष्मेण (०६२-०२६)
पुष्करेणाथ पाण्डुना (०६२-०२६)
सुवर्णष्ठीविना चैव (०६२-०२६)
दुष्वन्तनृगरोहितैः (०६२-०२६)
एतैश् चान्यैश् च बहुभिः (०६२-०२७)
सर्वैर् मांसं न भक्षितम् (०६२-०२७)
शरत्कौमुदिकं मासं (०६२-०२७)
ततः स्वर्गं गता नृपाः (०६२-०२७)
सर्वकामसमृद्धास् ते (०६२-०२७)
वसन्ति दिवि संस्थिताः (०६२-०२७)
ब्रह्मलोके च पूज्यन्ते (०६२-०२८)

ज्वलमानाः श्रियावृताः (०६२-०२८)
उपास्यमाना गान्धर्वैः (०६२-०२८)
स्त्रीसहस्रसमन्विताः (०६२-०२८)
तद् एवम् उत्तमं धर्मम् (०६२-०२९)
अहिंसालक्षणं शुभन् (०६२-०२९)
ये रक्षन्ति महात्मानो (०६२-०२९)
नाकपृष्ठे वसन्ति ते (०६२-०२९)
मधु मांसं च ये नित्यं (०६२-०३०)
वर्जयन्तीह मानवाः (०६२-०३०)
जन्मप्रभृति मद्यं च (०६२-०३०)
सर्वे ते मुनयः स्मृताः (०६२-०३०)
आपन्नश् चापदो मुच्येद् (०६२-०३१)
बद्धो मुच्येत बन्धनात् (०६२-०३१)
व्याधितो मुच्यते रोगाद् (०६२-०३१)
दुःखान् मुच्येत दुःखितः (०६२-०३१)
यश् चैनं पठते नित्यं (०६२-०३२)
प्रयत्नाद् भरतर्षभ (०६२-०३२)
घोरं संतरते दुर्गं (०६२-०३२)
स्वर्गवासं च विन्दति (०६२-०३२)
तिर्यग्योनिं न गच्छेच् च (०६२-०३२)
रूपवांश् चैव जायते (०६२-०३२)
एतत् ते कथितं राजन् (०६२-०३३)
मांसस्य परिवर्जनम् (०६२-०३३)
प्रवृत्तौ च निवृत्तौ च (०६२-०३३)
प्रमाणम् ऋषिसत्तमैः (०६२-०३३)
गोब्राह्मणहितार्थाय (०६३-००१)
चातुर्वर्ण्यहिताय च (०६३-००१)
अशिष्टनिग्रहार्थाय (०६३-००१)
शिष्टानां रक्षणाय च (०६३-००१)
युधिष्ठिरस्य राजर्षेर् (०६३-००१)
एवं नारायणो ऽब्रवीत् (०६३-००१)
पञ्च रूपाणि राजानो (०६३-००२)
धारयन्त्य् अमितौजसः (०६३-००२)
अग्नेर् इन्द्रस्य सोमस्य (०६३-००२)
यमस्य वरुणस्य च (०६३-००२)
तान् न हिंसेन् न चाक्रोशेन् (०६३-००३)
नाक्षिपेन् नाप्रियं वदेत् (०६३-००३)
देवा मानुषरूपेण (०६३-००३)
चरन्ति पृथिवीम् इमाम् (०६३-००३)
इन्द्रात् प्रभुत्वं ज्वलनात् प्रतापं (०६३-००४)
क्रौर्यं यमाद् वैश्रवणात् प्रभावम् (०६३-००४)
सत्त्वस्थितिं रामजनार्दनाभाम् (०६३-००४)
आदाय राज्ञः क्रियते शरीरम् (०६३-००४)
न चापि राजा मन्तव्यो (०६३-००५)
मनुष्यो ऽयम् इति प्रभो (०६३-००५)
महती देवता ह्य् एषा (०६३-००५)
नररूपेण तिष्ठति (०६३-००५)
स्वयम् इन्द्रो नरो भूत्वा (०६३-००६)
पृथिवीम् अनुशासति (०६३-००६)

न हि पालयितुं शक्तो (०६३-००६)
मनुष्यः पृथिवीम् इमाम् (०६३-००६)
यत् प्रजापालनैः पुण्यं (०६३-००७)
प्राप्नुवन्तीह पार्थिवाः (०६३-००७)
न तत् क्रतुसहस्रेण (०६३-००७)
प्राप्नुवन्ति द्विजोत्तमाः (०६३-००७)
अधीतहुततप्तस्य (०६३-००८)
कर्मणः सुकृतस्य च (०६३-००८)
षष्ठं लभति भागं तु (०६३-००८)
प्रजा धर्मेण पालयन् (०६३-००८)
ग्रामाधिपत्यं नगराधिपत्यं (०६३-००९)
देशाधिपत्यं पृथिवीपतित्वम् (०६३-००९)
न प्राप्नुवन्तीह मनुष्यमात्रा (०६३-००९)
ये देवतानां न भवन्ति भागाः (०६३-००९)
न तद् अस्ति व्रतं लोके (०६३-०१०)
यद् राज्ञश् चरितोपमम् (०६३-०१०)
न तद् वेदरहस्यं वा (०६३-०१०)
यद् राज्ञः फलतो ऽधिकम् (०६३-०१०)
एवंवृत्तास् तु राजानो (०६३-०१०)
देवभागा न मानुषाः (०६३-०१०)
चतुर्वेद्यं हुतच॥न (०६३-*(७७))
यो हिंसेत नराधिपः (०६३-*(७७))
दण्डस्यैते भयाद् भीता (०६३-*(७७))
न खादन्ति परस्परम् (०६३-*(७७))
ज॥दण्डभयात् के॥। (०६३-*(७७))
न दुर्वन्ति हि पातकम् (०६३-*(७७))
यमदण्डभयाद् अन्ये (०६३-*(७७))
न दुर्वन्ति परस्परम् (०६३-*(७७))
नाभीतो यजते कांश्चन् (?) (०६३-*(७७))
नाभीतो दण्डम् इच्छति (०६३-*(७७))
य एव देवा हन्तारस् (०६३-०११)
तांल् लोको ऽर्चयते भृशम् (०६३-०११)
हन्ता शक्रश् च रुद्रश् च (०६३-०११)
हन्ता वैश्रवणो यमः (०६३-०११)
वरुणो वायुर् आदित्यः (०६३-०११)
पर्जन्यो ऽग्निर् बृहस्पतिः (०६३-०११)
एतान् देवान् नमस्यन्ति (०६३-०१२)
प्रतापप्रणता जनाः (०६३-०१२)
न ब्रह्माणं न धातारं (०६३-०१२)
न पूषाणं कथंचन (०६३-०१२)
दण्डग्रस्तं जगत् सर्वं (०६३-०१३)
वश्यत्वम् अनुगच्छति (०६३-०१३)
नायं क्लीबस्य लोको ऽस्ति (०६३-०१३)
न परः पार्थिवोत्तम (०६३-०१३)
न हि पश्यामि जीवन्तं (०६३-०१४)
राजन् कंचिद् अहिंसया (०६३-०१४)
उदके जन्तवो नित्यं (०६३-०१४)
पृथिव्यां च फलेषु च (०६३-०१४)
न हत्वा लिप्यते राजा (०६३-०१४)

प्रजा धर्मेण पालयन् (०६३-०१४)
यदि दण्डो न विद्येत (०६३-०१५)
दुर्विनीतास् तथो नराः (०६३-०१५)
हन्युः पशून् मनुष्यांश् च (०६३-०१५)
याज्ञियानि हविंषि च (०६३-०१५)
वृकवत् क्षपयेयुश् च (०६३-*(७८))
यो यस्य बलवत्तरः (०६३-*(७८))
तस्मात् प्राणिहिते दण्डे (०६३-*(७९))
हिंसादोषो न बाधते (०६३-*(७९))
नैवोस्त्रा न बलीवर्दा (०६३-०१६)
नाश्वाश्वतरगर्दभाः (०६३-०१६)
युक्ता वहेयुर् यानानि (०६३-०१६)
दण्डश् चेन् नोद्यतो भवेत् (०६३-०१६)
सत्यं किलैतद् यद् उवाच शक्रो (०६३-०१७)
दण्डः प्रजा रक्षति साधुवृत्तः (०६३-०१७)
यस्याग्नयः प्रतिमासस्य भीताः (०६३-०१७)
संतर्जिता दण्डभयाज् ज्वलन्ति (०६३-०१७)
यत्र श्यामो लोहिताक्षो (०६३-०१८)
दण्डश् चरति पापहा (०६३-०१८)
प्रजास् तत्र न मुह्यन्ते (०६३-०१८)
नेता चेत् साधु पश्यति (०६३-०१८)
दण्डनीतौ सुनीतायां (०६३-०१९)
सर्वे सिध्यन्त्य् उपक्रमाः (०६३-०१९)
दण्डश् चेन् न प्रवर्तेत (०६३-०१९)
विनश्येयुर् इमाः प्रजाः (०६३-०१९)
वृकवद् भक्षयेयुश् च (०६३-०२०)
यो यस्य बलवत्तरः (०६३-०२०)
काकाद्याश् च पुरोदाशं (०६३-०२०)
श्वा चैवावलिहेद् धविः (०६३-०२०)
स्वाम्यं च न स्यात् कस्मिंश्चित् (०६३-०२१)
प्रवर्तेताधरोत्तरम् (०६३-०२१)
चातुर्वर्ण्यविमोक्षाय (०६३-०२१)
दुर्विनीतभयाय च (०६३-०२१)
दण्डेन नियतो लोको (०६३-०२२)
धर्मस्थानं च रक्षति (०६३-०२२)
सर्वो दण्डजितो लोको (०६३-०२२)
दुर्लभो हि शुचिर् जनः (०६३-०२२)
दण्डस्य हि भयाद् भीता (०६३-०२३)
नरास् तिष्ठन्ति शासने (०६३-०२३)
ति ऽपि भोगाय कल्पन्ते (०६३-०२३)
दण्डेनोपरिपीडिताः (०६३-०२३)
गुरुर् आत्मवतां शास्ता (०६३-०२४)
शास्ता राजा दुरात्मनां (०६३-०२४)
इहप्रच्छन्नपापानां (०६३-०२४)
शास्ता वैवस्वतो यमः (०६३-०२४)
पापानाम् अथ मूढानां (०६३-०२५)
परद्रव्यापहारिणाम् (०६३-०२५)
परदाररता ये च (०६३-०२५)
ये च पातकसंज्ञिताः (०६३-०२५)

तेषां तु शासनार्थाय (०६३-०२५)
मयैतत् समुदाहृतम् (०६३-०२५)
ब्राह्मण्यं दुष्करं ज्ञात्वा (०६३-०२६)
तस्य दण्डं निपातयेत् (०६३-०२६)
कर्मानुरूपो दण्डः स्याद् (०६३-०२६)
गोहिरण्यादिको भवेत् (०६३-०२६)
अवध्यो ब्राह्मणो राजन् (०६३-०२६)
स्त्री वृद्धो बाल एव च (०६३-०२६)
यश् चरेद् अशुभं कर्म (०६३-०२७)
पापं राजविगर्हितम् (०६३-०२७)
पातकेषु च वर्तेत (०६३-०२७)
निग्रहं तस्य कारयेत् (०६३-०२७)
शिरसो मुण्डनं कृत्वा (०६३-०२८)
गोमयेनानुलेपयेत् (०६३-०२८)
खरयानेन नगरं (०६३-०२८)
डिण्डिमेन तु भ्रामयेत् (०६३-०२८)
राजनिर्दिष्टदण्डस्य (०६३-०२८)
प्रायश्चित्तं न विद्यते (०६३-०२८)
एष ते कथितो दण्डो (०६३-०२९)
ब्राह्मणस्य युधिष्ठिर (०६३-०२९)
क्षत्रियस्य तु यो दण्डस् (०६३-०२९)
तं वक्ष्याम्य् अनुपूर्वशः (०६३-०२९)
परद्रव्यादिहरणे (०६३-०३०)
परदाराभिमर्दने (०६३-०३०)
पातकेषु च सर्वेषु (०६३-०३०)
यो हि वर्तेत क्षत्रियः (०६३-०३०)
तस्य दण्डं प्रवक्ष्यामि (०६३-०३०)
तन् मे निगदतः शृणु (०६३-०३०)
हस्तपादपरिच्छेदं (०६३-०३१)
कर्णनासावकर्तनम् (०६३-०३१)
सर्वस्वहरणं कृत्वा (०६३-०३१)
परराष्ट्राय प्रेशयेत् (०६३-०३१)
राज्यं काङ्क्षेत यो मूढो (०६३-०३२)
राजपत्नीम् अथापि वा (०६३-०३२)
शरैस् तु राजा विध्येत (०६३-०३२)
शक्तिचक्रगदादिभिः (०६३-०३२)
क्षत्रियस्य तु दुष्टस्य (०६३-०३३)
दण्ड एष विधीयते (०६३-०३३)
वैश्यस्यापि च यो दण्डस् (०६३-०३३)
तं प्रवक्ष्यामि भारत (०६३-०३३)
पातकेष्व् एव क्रूरेषु (०६३-०३४)
यस् तु वैश्यः प्रवर्तते (०६३-०३४)
परदारे परद्रव्ये (०६३-०३४)
तस्य निग्रहम् आदिशेत् (०६३-०३४)
शूलायां भेदनं तस्य (०६३-०३५)
वृक्षशाखावलम्बनम् (०६३-०३५)
एतद् वैश्यस्य निर्दिष्टं (०६३-०३५)
शूद्रस्याप्य् अनुपूर्वशः (०६३-०३५)
शूले शूद्रस्य यो दुष्टस् (०६३-०३६)

तस्यैकस्य वधः स्मृतः (०६३-०३६)
कुञ्जरेणाभिमर्देत (०६३-०३६)
मीनीयाम् अथ पाचयेत् (०६३-०३६)
एतच् छूद्रस्य निर्दिष्टं (०६३-०३६)
नान्यो दण्डो विधीयते (०६३-०३६)
नैकस्यार्थे कुलं हन्यान् (०६३-०३७)
न राष्ट्रं न च ग्रामकम् (०६३-०३७)
धनलोभान् न मोक्तव्यो (०६३-*(८०))
रागाद् वा शासनं विना (०६३-*(८०))
एकं सुशिष्टितं कृत्वा (०६३-०३७)
शेषं कोशं प्रवेशयेत् (०६३-०३७)
युधिष्ठिरस्य राजर्षेर् (०६३-०३८)
एवं नारायणो ऽब्रवीत् (०६३-०३८)
समासेन यथान्यायं (०६३-०३८)
दण्डनीतिम् अनुत्तमाम् (०६३-०३८)
उत्तमाधमकार्येषु (०६३-०३९)
समेषु विषमेषु च (०६३-०३९)
राजधर्मास् तु पश्येत (०६३-०३९)
विष्णुना समुदाहृतान् (०६३-०३९)
एतान् धर्मात्र् जगन्नाथः (०६४-००१)
पाण्डुपुत्राय पृच्छते (०६४-००१)
जगाद पुरुषव्याघ्र (०६४-००१)
किम् अन्यच् छ्रोतुम् इच्छसि (०६४-००१)
भगवन् वहतां भक्तिं (०६४-००२)
देवदेवे जनार्दने (०६४-००२)
यत् फलं कथितं तज्ज्ञैस् (०६४-००२)
तन् मे विस्तरतो वद (०६४-००२)
यत् फलं वहतां भक्तिम् (०६४-००३)
अच्युते भवति प्रभो (०६४-००३)
न तद् वर्णयितुं शक्यं (०६४-००३)
हरिः सर्वेप्सितप्रदः (०६४-००३)
यादृक् सत्त्वं मनुष्याणां (०६४-००४)
तादृग् आराध्य केशवम् (०६४-००४)
फलम् इच्छन्ति तादृच् च (०६४-००४)
लभ्यते तैर् नरेश्वर (०६४-००४)
मुक्तिकामा नरा मुक्तिं (०६४-००५)
स्वर्गं देवत्वम् ईप्सवः (०६४-००५)
गन्धर्वयक्षसिद्धानां (०६४-००५)
वृण्वन्त्य् अन्ये सलोकताम् (०६४-००५)
वर्षेष्व् अभीप्सवो विष्णुं (०६४-००६)
पातालेषु तथापरे (०६४-००६)
भोगान् अभीप्सवो विष्णुं (०६४-००६)
तोषयण्ति नराधिप (०६४-००६)
तथापरे नरैश्वर्यम् (०६४-००७)
आरोग्यं गुणवद् भुवि (०६४-००७)
प्रार्थयन्त्य् अच्युतं देवम् (०६४-००७)
आराध्य जगतो गतिम् (०६४-००७)
धर्मोपदेशाद् अचलां (०६४-००८)
वहन् भक्तिं जनार्दने (०६४-००८)

सशरीरो गतः स्वर्गं (०६४-००८)
धर्मपुत्रो युधिष्ठिरः (०६४-००८)
तथैव जनकः कृष्णे (०६४-००९)
विनिवेश्य स्वमानसम् (०६४-००९)
अवाप परमां सिद्धिं (०६४-००९)
वसुः प्रायात् त्रिपिष्टपम् (०६४-००९)
अन्ये च ये ये मुनयो (०६४-०१०)
ये ये च वसुधाधिपाः (०६४-०१०)
अवापुर् अतुलान् कामांस् (०६४-०१०)
ते ते संतोष्य केशवम् (०६४-०१०)
अनाराध्य जगन्नाथं (०६४-०११)
सर्वपापहरं हरिम् (०६४-०११)
सद्गतिः केन संप्राप्ता (०६४-०११)
भोगाश् चापि मनोरमाः (०६४-०११)
द्रौणिब्रह्मास्त्रनिर्दग्धस् (०६४-०१२)
तव राजन् पितामहः (०६४-०१२)
विष्णोः कार्यमनुष्यस्य (०६४-०१२)
दर्शनाद् उत्थितः पुनः (०६४-०१२)
नामसंकीर्तनाद् यस्य (०६४-०१३)
पापम् अन्यैर् उपद्रवैः (०६४-०१३)
समं विनाशम् आयाति (०६४-०१३)
देवः को ऽभ्यधिकस् ततः (०६४-०१३)
राष्ट्रस्य शरणं राजा (०६४-०१४)
पितरौ बालकस्य च (०६४-०१४)
धर्मः समस्तमर्त्यानां (०६४-०१४)
सर्वस्य शरणं हरिः (०६४-०१४)
मुक्तिहेतुम् अनाद्यन्तम् (०६४-०१५)
अजम् अक्षयम् अच्युतम् (०६४-०१५)
नमस्यन् सर्वलोकस्य (०६४-०१५)
नमस्यो जायते नरः (०६४-०१५)
न हि तस्य गुणाः सर्वे (०६४-०१६)
सर्वैर् मुनिगणैर् अपि (०६४-०१६)
वक्तुं शक्या वियुक्तस्य (०६४-०१६)
सत्त्वाद्यैर् अखिलैर् गुणैः (०६४-०१६)
श्रुतं मया यथा पूर्वम् (०६४-०१७)
आर्यको मे युधिष्ठिरः (०६४-०१७)
सशरीरो गतः स्वर्गं (०६४-०१७)
जितम् आत्मीयकर्मभिः (०६४-०१७)
यत् त्व् एतद् भगवान् आह (०६४-०१८)
स यथा पाण्डुपूर्वजः (०६४-०१८)
धर्मोपदेशाद् गोविन्दम् (०६४-०१८)
आराधयत तद् वद (०६४-०१८)
पुरा शासति धर्मज्ञे (०६४-०१९)
धर्मपुत्रे युधिष्ठिरे (०६४-०१९)
तस्यैव वैश्वदेवान्ते (०६४-०१९)
चण्डालो ऽभ्यागमत् किल (०६४-०१९)
समुपेत्य गृहं तस्य (०६४-०२०)
धर्मपुत्रस्य विस्मितः (०६४-०२०)
उवाच श्वपचो द्वाःस्थं (०६४-०२०)

प्रश्रयावनतस्थितः (०६४-०२०)
कस्यैतद् भवनं दिव्यं (०६४-०२१)
मणिरत्नविभूषितम् (०६४-०२१)
शुद्धस्फटिकसोपानं (०६४-०२१)
मणिकाञ्चनतोरणम् (०६४-०२१)
अष्टाशीतिसहस्राणि (०६४-०२२)
ब्राह्मणानां दिने दिने (०६४-०२२)
युधिष्ठिरम् ऋते भूपं (०६४-०२२)
भुञ्जते कस्य वेश्मनि (०६४-०२२)
कथम् एतन् न जानीषे (०६४-०२३)
चन्द्रबिम्बम् इवापरम् (०६४-०२३)
युधिष्ठिरस्य भवनं (०६४-०२३)
देवराजगृहोपमम् (०६४-०२३)
अबलस्य बलं राजा (०६४-०२४)
बालस्य रुदितं बलम् (०६४-०२४)
बलं मूर्खस्य वै मौनं (०६४-०२४)
तस्करस्यानृतं बलम् (०६४-०२४)
गच्छ जल्प स्वराजानं (०६४-०२५)
प्रतीहार वचो मम (०६४-०२५)
दुःखार्तः कार्यवान् राजंश् (०६४-०२५)
चण्डालो द्वारि तिष्ठति (०६४-०२५)
केनापि हेतुमात्रेण (०६४-*(८१))
भवन्तं दुष्टम् आगतः (०६४-*(८१))
इत्य् उक्तो धर्मराजस्य (०६४-०२६)
प्रतीहारो यथोदितम् (०६४-०२६)
निवेदयाम् आस तथा (०६४-०२६)
धर्मराजो ऽब्रवीद् इदम् (०६४-०२६)
किं रूपं कीदृशं शीलं (०६४-०२७)
को ऽस्यार्थः किं प्रयोजनम् (०६४-०२७)
ब्रूहि द्वाःस्थ यथावन् मे (०६४-०२७)
नरस् तिष्ठति कीदृशः (०६४-०२७)
काककोकिलकृष्णाङ्गो (०६४-०२८)
भग्ननासारुणेक्षणः (०६४-०२८)
यवमध्यः कृशग्रीवो (०६४-०२८)
वक्रपादो महाहनुः (०६४-०२८)
ब्रूहि गच्छ दुराचारं (०६४-०२९)
चण्डालं पापकर्मिणम् (०६४-०२९)
देवकार्यस्य वेलायां (०६४-०२९)
दुतस् त्वं प्रत्युपस्थितः (०६४-०२९)
चण्डालपतितौ दृष्ट्वा (०६४-०३०)
नरः पश्येत भास्करम् (०६४-०३०)
स्नातस् त्व् एताव् अथालोक्य (०६४-०३०)
सचैलस्नानम् अर्हति (०६४-०३०)
इत्य् आज्ञप्ते तथोक्तस् तु (०६४-०३१)
चण्डालस् तेन वै ततः (०६४-०३१)
प्रत्युवाच प्रतीहारम् (०६४-०३१)
ईषन् मन्युपरिप्लुतः (०६४-०३१)
किं देवकार्येण नराधिपस्य (०६४-०३२)
कृत्वा हि मन्युं विषयस्थितानाम् (०६४-०३२)

तद् देवकार्यं स च यज्ञहोमो (०६४-०३२)
यद् अश्रुपाता न पतन्ति राष्ट्रे (०६४-०३२)
इदं वचनम् अव्यग्रं (०६४-*(८२))
प्रतीहार त्वरा मम (०६४-*(८२))
निवेदय स्वराजेन्द्रं (०६४-*(८२))
यथेष्टं स करोतु वै (०६४-*(८२))
इत्य् उक्तः सत्वरं गत्वा (०६४-*(८२))
धर्मराजं तथा तथं (?) (०६४-*(८२))
कथयाम् आस तत् सर्वं (०६४-*(८२))
चाण्डालेन यद् ईरितम् (०६४-*(८२))
सुशोभनम् इदं वाक्यं (०६४-*(८२))
न भवेद् अन्त्यजातिषु (०६४-*(८२))
चिन्तयित्वा ततो राजा (०६४-*(८२))
निर्जगाम युधिष्ठिरः (०६४-*(८२))
इत्य् एतद् वचनं श्रुत्वा (०६४-०३३)
निर्जगाम युधिष्ठिरः (०६४-०३३)
प्रत्युवाच च चण्डालम् (०६४-०३३)
ईषन् कोपसमन्वितः (०६४-०३३)
कुतस् ते भयम् उत्पन्नं (०६४-०३४)
येन त्वं गृहम् आगतः (०६४-०३४)
आवाधाकारणं सर्वं (०६४-०३४)
यथावत् कथयस्व मे (०६४-०३४)
तद् अहं ते प्रतिज्ञाय (०६४-०३५)
चण्डकर्मकरक्षणम् (०६४-०३५)
अपास्य देवकार्यार्थं (०६४-०३५)
प्रविश्याम्य् अन्तरं पुनः (०६४-०३५)
न भुञ्जते ब्राह्मणा मे (०६४-०३६)
सर्वाश् चोद्विजते जनः (०६४-०३६)
प्राणिहिंसा च नो वृत्तिर् (०६४-०३६)
देव पुष्णाति मे ऽनृतम् (०६४-०३६)
अनेकजन्मसाहस्रीं (०६४-०३७)
प्राप्य संसारपद्धतिम् (०६४-०३७)
मानुष्ये कुत्सितां जातिम् (०६४-०३७)
आपन्नो मुषितो ऽस्मि भोः (०६४-०३७)
कर्मभूमिम् इमां राजन् (०६४-०३८)
प्रार्थयन्ति दिवौकसः (०६४-०३८)
तां संप्राप्य वृथाजन्मा (०६४-०३८)
मुष्टो ऽस्मि कुरुसत्तम (०६४-०३८)
दुःखे दुःखाधिकान् पश्येत् (०६४-०३९)
सुखे पश्येत् सुखाधिकान् (०६४-०३९)
आत्मानं शोकहर्षाभ्यां (०६४-०३९)
शत्रुभ्याम् इव नार्पयेत् (०६४-०३९)
सो ऽहम् इच्छामि विज्ञातुम् (०६४-०४०)
अतिदुष्कृतकर्मकृत् (०६४-०४०)
वक्तुम् अर्हसि धर्मज्ञ (०६४-०४०)
कः पापिष्ठतरो मया (०६४-०४०)
अध्वानम् उपरि श्रान्तं (०६४-०४१)
ब्राह्मणं गृहम् आगतम् (०६४-०४१)
अनर्चयित्वा यो भुङ्क्ते (०६४-०४१)

स पापिष्ठतरस् त्वया (०६४-०४१)
मातरं पितरं चैव (०६४-०४२)
विकलं नेत्रदुर्बलम् (०६४-०४२)
यो नाभ्युद्धरते पुत्रः (०६४-०४२)
स पापिष्ठतरस् त्वया (०६४-०४२)
गोधनस्य तृषार्तस्य (०६४-०४३)
जलार्थं परिधावतः (०६४-०४३)
विघ्नम् आचरते यस् तु (०६४-०४३)
स पापिष्ठतरस् त्वया (०६४-०४३)
विवाहयित्वा यः कन्यां (०६४-०४४)
कुलजां शीलमण्डनाम् (०६४-०४४)
विना त्यजति दोषेण (०६४-०४४)
स पापिष्ठतरस् त्वया (०६४-०४४)
आशाकारस् त्व् अदाता यो (०६४-०४५)
दातुश् च प्रतिषेधकः (०६४-०४५)
दत्तं च यः कीर्तयति (०६४-०४५)
स पापिष्ठतरस् त्वया (०६४-०४५)
बहुभृत्यैर् दरिद्रैश् च (०६४-०४६)
धनं सन्तं द्विजोत्तमैः (०६४-०४६)
याचितो न प्रयच्छेद् यः (०६४-०४६)
स पापिष्ठतरस् त्वया (०६४-०४६)
ब्राह्मणः क्षत्रियो वापि (०६४-०४७)
वैश्यः शूद्रो ऽपि वा नरः (०६४-०४७)
स्वधर्मं संत्यजेद् यस् तु (०६४-०४७)
स पापिष्ठतरस् त्वया (०६४-०४७)
कृतार्थो ऽहं गमिष्यामि (०६४-०४८)
यशोधर्मम् अवाप्नुहि (०६४-०४८)
तुष्टो ऽस्म्य् अहं स्वया योन्या (०६४-०४८)
मत्तः प्रोक्तास् त्वयाधमाः (०६४-०४८)
देवतानाम् ऋषीणां च (०६४-०४९)
पितॄणां च कृतं मया (०६४-०४९)
सांप्रतं देशकालो ऽयं (०६४-०४९)
त्वम् एवात्र भवातिथिः (०६४-०४९)
चण्डालो ऽहं महाराज (०६४-०५०)
पतितो लोकवर्जितः (०६४-०५०)
कथं निहीनो वर्णेभ्यो (०६४-०५०)
भोक्ष्यामि भवतो गृहे (०६४-०५०)
चण्डालो भव पापो वा (०६४-०५१)
शत्रुर् वा पितृघातकः (०६४-०५१)
देशकालाभ्युपेतं त्वां (०६४-०५१)
भरणीयं हि वेद्म्य् अहम् (०६४-०५१)
दशसूनासमं चक्रं (०६४-०५२)
दशचक्रसमो ध्वजः (०६४-०५२)
दशध्वजसमा वेश्या (०६४-०५२)
दशवेश्यासमो नृपः (०६४-०५२)
दश सूनासहस्राणि (०६४-०५३)
कुरुते यो हि सौनिकः (०६४-०५३)
तेन तुल्यः स्मृतो राजा (०६४-०५३)
घोरस् तस्य प्रतिग्रहः (०६४-०५३)

नानागोत्रादिचरणा (०६४-०५४)
भुञ्जते ब्राह्मणा मम (०६४-०५४)
न ते वदन्ति वाग्दुष्टं (०६४-०५४)
यथैतत् कीर्तितं त्वया (०६४-०५४)
लोभात्मानो न जानीयुर् (०६४-०५५)
ब्राह्मणा राजकिल्बिषम् (०६४-०५५)
वरं स्वमांसम् अत्तव्यं (०६४-०५५)
न तु राजप्रतिग्रहम् (०६४-०५५)
राजकिल्बिषदग्धानां (०६४-०५६)
ब्राह्मणानां युधिष्ठिर (०६४-०५६)
छिन्नानाम् इव बीजानां (०६४-०५६)
पुनर्जन्म न विद्यते (०६४-०५६)
राजप्रतिग्रहो घोरो (०६४-०५७)
मध्वास्वादो विषोपमः (०६४-०५७)
बुधेन प्रतिहर्तव्यः (०६४-०५७)
स्वमांसस्येव भक्षणम् (०६४-०५७)
अधीत्य चतुरो वेदान् (०६४-०५८)
सर्वशास्त्रार्थतत्त्ववित् (०६४-०५८)
नरेन्द्रभवने भुङ्क्त्वा (०६४-०५८)
विष्ठायां जायते कृमिः (०६४-०५८)
निन्दसे सर्वराजानो (०६४-०५९)
न चात्मानं प्रशंससि (०६४-०५९)
धैर्यवान् आत्मनो ऽनिन्द्यो (०६४-*(८४))
नाश्वासार्थं च पृच्छसि (०६४-*(८४))
विमुक्तक्रोधहर्शश् च (०६४-*(८४))
को ऽप्य् अत्र प्रतिभासि नः (०६४-*(८४))
अनिन्द्यो निन्द्यरूपेण (०६४-*(८४))
महात्मा त्वं हि मे मतः (०६४-*(८४))
को भवान् ब्रूहि सत्यं मे (०६४-*(८४))
किमर्थम् इह चागतः (०६४-*(८४))
भवान् उपेन्द्रः शक्रो वा (०६४-*(८४))
शर्वो वा त्वं पिनाकधृक् (०६४-*(८४))
अथवा निन्द्यरूपेण (०६४-०५९)
पिता नस् त्वम् इहागतः (०६४-०५९)
ज्ञातो ऽस्मि पृथिवीपाल (०६४-०६०)
तुष्टश् च तव दर्शनात् (०६४-०६०)
नन्दन्तु भूमिभागास् ते (०६४-०६०)
येषु त्वं पृथिवीपतिः (०६४-०६०)
निर्जित्य परसैन्यानि (०६४-०६१)
क्षितिं धर्मेण पालय (०६४-०६१)
स्वल्पम् अप्य् अस्तु ते वेलां (०६४-०६१)
मा गोविन्दोज्झितं मनः (०६४-०६१)
किं मे राज्येन भोस् तात (०६४-०६२)
विषयैर् जीवितेन वा (०६४-०६२)
यो ऽहं सूनासहस्रैस् तु (०६४-०६२)
दशभिः परिवेष्टितः (०६४-०६२)
मा विषादं नरश्रेष्ठ (०६४-०६३)
समुपैहि युधिष्ठिर (०६४-०६३)
यज्ञेश्वरं यज्ञमूर्तिं (०६४-०६३)

त्वं च विष्णुं समाश्रितः (०६४-०६३)
येषां न विषये विप्रा (०६४-०६४)
यज्ञैर् यज्ञपतिं हरिम् (०६४-०६४)
यजन्ति भूभुजस् तेषाम् (०६४-०६४)
एतत् सूनोदितं फलम् (०६४-०६४)
येषां पाषण्डसंकीर्णं (०६४-०६५)
न राष्ट्रं ब्राह्मणोत्कटम् (०६४-०६५)
ते तु सूनासहस्राणां (०६४-०६५)
दशानां भागिनो नृपाः (०६४-०६५)
येषां न यज्ञपुरुषः (०६४-०६६)
कारणं पुरुषोत्तमः (०६४-०६६)
ते तु पापसमाचाराः (०६४-०६६)
सूनापापौघभागिनः (०६४-०६६)
त्वं तु मत्प्रभवस् तात (०६४-०६७)
विष्णुभक्तस् तथैव च (०६४-०६७)
इष्टिर् वैश्वानरी पापम् (०६४-०६७)
उपहंस्यति ते ऽखिलम् (०६४-०६७)
अवश्यं विषये कश्चिद् (०६४-०६८)
ब्राह्मणः संश्रितव्रतः (०६४-०६८)
इष्टिं वैश्वानरीं क्लृप्तां (०६४-०६८)
निर्वपेद् अब्दपर्यये (०६४-०६८)
तस्य षड्भागमात्रेण (०६४-०६८)
त्वं पापं निर्दहिष्यसि (०६४-०६८)
स त्वं वरय भद्रं ते (०६४-०६९)
वरं यन् मनसेच्छसि (०६४-०६९)
सम्यक् श्रद्धासमाचाराद् (०६४-०६९)
अहम् आराधितस् त्वया (०६४-०६९)
अथ पातकभीतस् त्वं (०६४-०७०)
सर्वभावेन भारत (०६४-०७०)
विमुक्तान्यसमारम्भो (०६४-०७०)
नारायणपरो भव (०६४-०७०)
परः पराणाम् आद्यो ऽसौ (०६४-०७१)
ज्ञेयो ध्येयो जनार्दनः (०६४-०७१)
तदर्थम् अपि कर्माणि (०६४-०७१)
कुर्वन् पापं व्यपोहति (०६४-०७१)
लोभादिव्याप्तहृदयो (०६४-०७२)
यत् पापं कुरुते नरः (०६४-०७२)
विलयं याति तत् सर्वम् (०६४-०७२)
अच्युते हृदये स्थिते (०६४-०७२)
शमायालं जलं वह्नेस् (०६४-०७३)
तमसो भास्करादयः (०६४-०७३)
क्षान्तिः कलेर् अघौघस्य (०६४-०७३)
नामसंकीर्तनं हरेः (०६४-०७३)
प्रसन्नो यदि मे तात (०६४-०७४)
वरार्हो यदि चाप्य् अहम् (०६४-०७४)
वरं तद् एकम् एवैतं (०६४-०७४)
प्राप्तुम् इच्छाम्य् अहं पितः (०६४-०७४)
जाग्रत्स्वप्नसुषुप्तेषु (०६४-०७५)
योगस्थस्य सदा मम (०६४-०७५)

या काचिन् मनसो वृत्तिः (०६४-०७५)
सा भवत्व् अच्युताश्रया (०६४-०७५)
या या जायेत मे बुद्धिर् (०६४-०७६)
यावज् जीवाम्य् अहं पितः (०६४-०७६)
सा सा छिनत्तु संदेहान् (०६४-०७६)
कृष्णाप्तौ परिपन्थिनः (०६४-०७६)
यथा गोविन्दम् आराध्य (०६४-०७७)
सशरीरः सुरालयम् (०६४-०७७)
प्राप्नुयाम् इति मे तात (०६४-०७७)
प्रयच्छ प्रवरं वरम् (०६४-०७७)
एवम् एतद् अशेषं ते (०६४-०७८)
मत्प्रसादाद् भविष्यति (०६४-०७८)
नास्ति गोविन्दभक्तानां (०६४-०७८)
वाञ्छितं भुवि दुर्लभम् (०६४-०७८)
इति धर्मोपदेशेन (०६४-०७९)
सर्वदेववरं हरिम् (०६४-०७९)
आराध्य पाण्डवो यातः (०६४-०७९)
सशरीरः सुरालयम् (०६४-०७९)
भूयश् च शृणु राजेन्द्र (०६५-००१)
जनकेन महात्मना (०६५-००१)
यद् गीतं वहता भक्तिं (०६५-००१)
ज्ञानम् आसाद्य केशवे (०६५-००१)
सर्वत्र समदृष्टिं तं (०६५-००२)
जनकं मिथिलेश्वरम् (०६५-००२)
पश्यन्तम् अच्युतमयं (०६५-००२)
सर्वं च सचराचरम् (०६५-००२)
द्विजरूपं समास्थाय (०६५-००३)
देवदेवो जनार्दनः (०६५-००३)
उपतस्थे महाभागं (०६५-००३)
प्रत्युवाच च पार्थिवम् (०६५-००३)
राजञ् जनक भद्रं ते (०६५-००४)
यद् ब्रवीमि निबोध तत् (०६५-००४)
कुरुष्व च महाबुद्धे (०६५-००४)
यदि साधु मतं तव (०६५-००४)
पृथिवीं पृथिवीपालः (०६५-००५)
पालयित्वा पिता तव (०६५-००५)
स्वर्गं गतस् तथा भ्राता (०६५-००५)
सम्यक् सत्यध्वजो नृपः (०६५-००५)
त्वं पुनर् निरभीमानः (०६५-००६)
सर्वत्र समदर्शनः (०६५-००६)
रिपुमित्रादिवर्गेषु (०६५-००६)
कथम् एतद् भविष्यति (०६५-००६)
मित्रेषु मित्रवन् न त्वं (०६५-००७)
नाहितेष्व् अरिवद् भवान् (०६५-००७)
मध्यस्थभाग् न चैव त्वं (०६५-००७)
तथोदासीनवृत्तिषु (०६५-००७)
शब्दादयो ये विशयास् (०६५-००८)
ते वैराग्यफला नृप (०६५-००८)
नीत्या विहीनस् तु भवान् (०६५-००८)

कथं राज्यं करिष्यति (०६५-००८)
सर्वैर् नीतिं समास्थाय (०६५-००९)
यथा ते प्रपितामहैः (०६५-००९)
कृतं राज्यं तथा भूप (०६५-००९)
कुरु मातिजडो भव (०६५-००९)
तव प्रज्ञा मता ह्य् एषा (०६५-०१०)
मम मोहो महीपते (०६५-०१०)
त्रिवर्गसाधनं प्रज्ञा (०६५-०१०)
न धर्मादिविरोधिनी (०६५-०१०)
सम्यग् आह भवान् विप्र (०६५-०११)
वाच्यम् एवं भवद्विधैः (०६५-०११)
ममापि श्रूयतां वाक्यं (०६५-०११)
भवतो यदि रोचते (०६५-०११)
यदा सर्वगतो विष्णुः (०६५-०१२)
परमात्मा प्रजापतिः (०६५-०१२)
तदा मित्रादिमध्यस्थ- (०६५-०१२)
संज्ञा केषु निपात्यताम् (०६५-०१२)
पिता माता तथा भ्राता (०६५-०१३)
यदा नान्यज् जनार्दनात् (०६५-०१३)
पितृमातृमयीं संज्ञां (०६५-०१३)
तदा कुत्र करोम्य् अहम् (०६५-०१३)
सो ऽहं ब्रवीमि यद् वाक्यं (०६५-०१४)
तन् निबोध द्विजोत्तम (०६५-०१४)
अनेकरूपरूपो ऽयं (०६५-०१४)
विष्णुर् एवाखिलं जगत् (०६५-०१४)
विष्णुः पिता मे जगतः प्रतिष्ठा (०६५-०१५)
विष्णुर् माता विष्णुर् एवाग्रजो मे (०६५-०१५)
विष्णुर् गतिर् विष्णुमयस् तथास्मि (०६५-०१५)
विष्णौ स्थितो ऽस्म्य् अक्षगतश् च विष्णुः (०६५-०१५)
यो मे ममत्वोपगतः स विष्णुर् (०६५-०१६)
यश् चारिभूतो मम सो ऽपि विष्णुः (०६५-०१६)
दिवं वियद् भूः ककुभश् च विष्णुर् (०६५-०१६)
भूतानि विष्णुर् भुवनानि विष्णुः (०६५-०१६)
पश्यामि विष्णुं न परं ततो ऽन्यच् (०६५-०१७)
शृणोमि विष्णुं न परं ततो ऽन्यत् (०६५-०१७)
स्पृशामि विष्णुं न परं ततो ऽन्यज् (०६५-०१७)
जिघ्रामि विष्णुं न परं ततो ऽन्यत् (०६५-०१७)
रसामि विष्णुं न परं ततो ऽन्यन् (०६५-०१८)
मन्ये च विष्णुं न परं ततो ऽन्यत् (०६५-०१८)
जिघ्रामि विष्णुं न परं ततो ऽन्यच् (०६५-*(८५))
नमामि विष्णुं न परं ततो ऽन्यत् (०६५-*(८५))
बुध्यामि विष्णुं न परं ततो ऽन्यत् (०६५-०१८)
सर्वं हि विष्णुर् न परं ततो ऽन्यत् (०६५-०१८)
विष्णुः समस्तं न परं ततो ऽस्ति (०६५-०१९)
विष्णुः समस्तं न परं च देवः (०६५-०१९)
विष्णुः स्थारीयान् न परं ततो ऽस्ति (०६५-*(८६))
विष्णुर् लघीयान् न परं ततो ऽस्ति (०६५-०१९)
विष्णुर् गरीयान् न परं ततो ऽन्यत् (०६५-०१९)
यथा न विष्णुव्यतिरिक्तम् अन्यच् (०६५-०२०)

शृणोमि पश्यामि तथा स्पृशामि (०६५-०२०)
सत्येन तेनोपशमं प्रयान्तु (०६५-०२०)
दोषा विमुक्तेः परिपन्थिनो ये (०६५-०२०)
न मे ऽस्ति बन्धुर् न च मे ऽस्ति शत्रुर् (०६५-०२१)
न भूतवर्गो न जनो मदन्यः (०६५-०२१)
त्वं चाहं अन्ये च शरीरभेदैर् (०६५-०२१)
विभिन्नम् ईशस्य हरेः स्वरूपम् (०६५-०२१)
मूर्तामूर्तिविशेषं तु (०६५-०२२)
पश्यतस् तन्मयं द्विज (०६५-०२२)
क्रोधहर्षादयो भावाः (०६५-०२२)
स्थास्यन्ति हृदये कथम् (०६५-०२२)
स त्वं प्रसीद मोहो ऽयम् (०६५-०२३)
अथ चेन् मम सुव्रत (०६५-०२३)
तथापि मा रुषं कार्षीर् (०६५-०२३)
अचिकित्स्या हि मोहिताः (०६५-०२३)
बहुरूपस् ततो रूपं (०६५-०२४)
शङ्खचक्रगदाधरम् (०६५-०२४)
दर्शयाम् आस सुप्रीतो (०६५-०२४)
जनकाय जनार्दनः (०६५-०२४)
ततस् तद्दर्शनाद् भूपं (०६५-०२५)
शिरसा प्रणतं प्रभुः (०६५-०२५)
आद्यः प्रजापतिपतिः (०६५-०२५)
प्रत्युवाचाच्युतो हरिः (०६५-०२५)
वरं वरय भूपाल (०६५-०२६)
परितुष्टो ऽस्मि ते ऽनघ (०६५-०२६)
मय्य् अर्पितमनोबुद्धेः (०६५-०२६)
सदैवाहं न दुर्लभः (०६५-०२६)
यदि देव प्रसन्नो ऽसि (०६५-०२७)
सम्यग् आराधितो मया (०६५-०२७)
तद् वृणोमि वरं भक्तिस् (०६५-०२७)
त्वय्य् एवास्तु सदा मम (०६५-०२७)
एवं भविष्यतीत्य् उक्त्वा (०६५-०२८)
गतो ऽन्तर्धानम् ईश्वरः (०६५-०२८)
सो ऽपि लेभे लयं विष्णौ (०६५-०२८)
भक्त्या योगिसुदुर्लभम् (०६५-०२८)
इति कृष्णे नरव्याघ्र (०६५-०२९)
कुर्वन् भक्तिं नरः सदा (०६५-०२९)
प्राप्नोति पुरुषव्याघ्र (०६५-०२९)
मुक्तिं चाप्य् अतिदुर्लभाम् (०६५-०२९)
जगद्धातुर् अनन्तस्य (०६६-००१)
वासुदेवस्य भार्गव (०६६-००१)
ममावतारान् अखिलाञ् (०६६-००१)
श्रोतुम् इच्छा प्रवर्तते (०६६-००१)
यथा यथा हि कृष्णस्य (०६६-००२)
कथेयं कथ्यते त्वया (०६६-००२)
जायते मनसः प्रीतिर् (०६६-००२)
उद्भूतपुलकस् तथा (०६६-००२)
मनःप्रीतिर् अनायासाद् (०६६-००३)
अपुण्यचयसंक्षयः (०६६-००३)

प्राप्यते पुरुषैर् ब्रह्मन्त् (०६६-००३)
शृण्वद्भिर् भगवत्कथाम् (०६६-००३)
स कुरुष्वामलमते (०६६-००४)
प्रसादप्रवणं मनः (०६६-००४)
अवतारान् सुरेशस्य (०६६-००४)
विष्णोर् इच्छामि वेदितुम् (०६६-००४)
जगद्गुरुं जगद्योनिम् (०६६-००५)
अनन्तम् उदकेशयम् (०६६-००५)
नारायणं पुराकल्पे (०६६-००५)
पृष्टवान् कमलोद्भवः (०६६-००५)
विनिर्जग्मुर् मुखेभ्यस् तु (०६६-००६)
ब्रह्मणो व्यक्तजन्मनः (०६६-००६)
ओंकारप्रवणा वेदा (०६६-००६)
जग्मुस् ते च रसातलम् (०६६-००६)
एकार्णवे जगत्य् अस्मिन् (०६६-००७)
ब्रह्मण्य् अमिततेजसि (०६६-००७)
कृष्णनाभिह्रदोद्भूत- (०६६-००७)
कमलोदरशायिनि (०६६-००७)
भोगिशय्याशयः कृष्णो (०६६-००८)
द्वितीयां तनुम् आत्मनः (०६६-००८)
कृत्वा मीनमयीं सद्यः (०६६-००८)
प्रविवेश रसातलम् (०६६-००८)
वेदमूर्तिस् ततो वेदान् (०६६-००९)
आनिन्ये ब्रह्मणो ऽन्तिकम् (०६६-००९)
मधुकैटभाभ्यां च पुनर् (०६६-००९)
भोगिशय्यागतो हरिः (०६६-००९)
हृतान् हयशिरा भूत्वा (०६६-००९)
वेदान् आहृतवान् रसात् (०६६-००९)
आहृतेष्व् अथ वेदेषु (०६६-०१०)
देवदेवं पितामहः (०६६-०१०)
तुष्टाव प्रणतो भक्त्या (०६६-०१०)
तस्य चाविर् बभौ हरिः (०६६-०१०)
अथामरगुरुं विष्णुम् (०६६-०११)
अनन्तम् अजम् अव्ययम् (०६६-०११)
उवाच प्रकटीभूतं (०६६-०११)
प्रणिपत्याब्जसंभवः (०६६-०११)
नमः सूक्ष्मातिसूक्ष्माय (०६६-०१२)
नमस् तुभ्यं त्रिमूर्तये (०६६-०१२)
बहुरूपादिमध्यान्त (०६६-०१२)
परिणामविवर्जित (०६६-०१२)
जगदीशस्य सर्वस्य (०६६-०१३)
जगतः सर्वकामद (०६६-०१३)
अहम् आत्मभवो देव (०६६-०१३)
त्वयाध्यक्षो निरूपितः (०६६-०१३)
सो ऽहम् इच्छामि तं ज्ञातुम् (०६६-०१४)
आत्मानं प्रभवाव्ययम् (०६६-०१४)
विश्वस्य च विरूपस्य (०६६-०१४)
स्थावरस्य चरस्य च (०६६-०१४)
यदि ते ऽनुग्रहकृता (०६६-०१५)

मयि बुद्धिर् जनार्दन (०६६-०१५)
तन् मां भक्त इति ज्ञात्वा (०६६-०१५)
कथयात्मानम् अच्युत (०६६-०१५)
कथयामि तवात्मानम् (०६६-०१६)
अनाख्यागोदरं परम् (०६६-०१६)
न वाचां विषये यो ऽसाव् (०६६-०१६)
अविशेषणलक्षणः (०६६-०१६)
प्रसादसुमुखः सो ऽहम् (०६६-०१७)
इमं यच्छामि ते वरम् (०६६-०१७)
अनाख्यातस्वरूपं मां (०६६-०१७)
भवाञ् ज्ञास्यति योगतः (०६६-०१७)
भक्तो मां तत्वतो वेत्ति (०६६-०१८)
मयि भक्तिश् च ते परा (०६६-०१८)
मज्जिज्ञासा परा ब्रह्मंस् (०६६-०१८)
तेन जाता मतिस् तव (०६६-०१८)
एवम् उक्तस् ततो ब्रह्मा (०६६-०१९)
विष्णुना प्रभविष्णुना (०६६-०१९)
विष्णोः स्वरूपं जिज्ञासुर् (०६६-०१९)
युयोजात्मानम् आत्मना (०६६-०१९)
स ददर्शातिसूक्ष्मं च (०६६-०२०)
सूक्ष्मज्योतिष्य् अजं विभुम् (०६६-०२०)
नियुतार्धार्धमात्रेण (०६६-०२०)
व्याप्ताशेषचराचरम् (०६६-०२०)
आत्मानम् इन्द्ररुद्रार्क- (०६६-०२१)
चन्द्राश्विवसुमारुतान् (०६६-०२१)
खादीन्य् अथ च शब्दादीन् (०६६-०२१)
ददृशे च स तन्मयान् (०६६-०२१)
ये व्यक्ता ये तथाव्यक्ता (०६६-०२२)
भावा ये चापि पौरुषाः (०६६-०२२)
तांश् च तत्रातिसूक्ष्मो ऽपि (०६६-०२२)
दृष्टवान् अखिलान् विभुः (०६६-०२२)
ततः प्रणम्य देवेशम् (०६६-०२३)
अजम् आर्तिहरं हरिम् (०६६-०२३)
पितामहः प्रह्वतनुर् (०६६-०२३)
वाक्यम् एतद् उवाच ह (०६६-०२३)
ज्ञातं स्वरूपम् अज्ञात- (०६६-०२४)
स्वरूप भगवंस् तव (०६६-०२४)
मया न यद् वाग्विषये (०६६-०२४)
तत्रस्थं चाखिलं जगत् (०६६-०२४)
धन्यो ऽस्म्य् अनुगृहीतो ऽस्मि (०६६-०२५)
स्वरूपं यन् मया तव (०६६-०२५)
भगवञ् ज्ञातम् अज्ञातम् (०६६-०२५)
अनन्ताज नमो ऽस्तु ते (०६६-०२५)
यदि प्रसादं देव त्वं (०६६-०२६)
प्रकरोषि ममापरम् (०६६-०२६)
परमं चावतारेषु (०६६-०२६)
यद् रूपं तद् वदस्व मे (०६६-०२६)
केषु केषु मया ज्ञेयः (०६६-०२७)
स्थानेषु त्वम् अधोक्षज (०६६-०२७)

संभूतयो ममाचक्ष्व (०६६-०२७)
या भविष्यन्ति ते भुवि (०६६-०२७)
देवलोके नृलोके वा (०६६-०२८)
पाताले खे ऽन्यतो ऽपि वा (०६६-०२८)
संभूतयो यास् तु भवान् (०६६-०२८)
करिष्यति वदस्व ताः (०६६-०२८)
त्वं कर्ता सर्वभूतानां (०६६-०२९)
संहर्ता चेश्वरेश्वरः (०६६-०२९)
तवापि कर्ता नान्यो ऽस्ति (०६६-०२९)
स्वेच्छया क्रीडते भवान् (०६६-०२९)
अहं वेद्मि भवन्तं हि (०६६-०२९)
न तवान्यो ऽस्ति वेदिता (०६६-०२९)
यन् मां त्वं पृच्छसि ब्रह्मन् (०६६-०३०)
अवताराश्रितं परम् (०६६-०३०)
तत् ते सम्यक् प्रवक्ष्यामि (०६६-०३०)
निबोध मम सुव्रत (०६६-०३०)
मम प्रकृत्या संयोगः (०६६-०३१)
स्वेच्छया संप्रवर्तते (०६६-०३१)
देवेषु नृषु तिर्यक्षु (०६६-०३१)
स्थावरेषु चरेषु च (०६६-०३१)
ममावताराः कार्यार्थं (०६६-०३१)
जगतश् चोपकारिणः (०६६-०३१)
यदा यदा हि धर्मस्य (०६६-०३२)
ग्लानिः समुपजायते (०६६-०३२)
अभ्युत्थानम् अधर्मस्य (०६६-०३२)
तदात्माङ्गं सृजाम्य् अहम् (०६६-०३२)
परित्राणाय साधूनां (०६६-०३३)
विनाशाय च दुष्कृतां (०६६-०३३)
धर्मसंस्थापनार्थाय (०६६-०३३)
संभवामि युगे युगे (०६६-०३३)
पूर्वोत्पन्नेषु भूतेषु (०६६-०३४)
नृदेवादिषु चाप्य् अहम् (०६६-०३४)
अनुप्रविश्य धर्मस्य (०६६-०३४)
करोमि परिपालनम् (०६६-०३४)
प्रविश्य च तथा पूर्वं (०६६-०३५)
तनुं धर्मभृतां वर (०६६-०३५)
जगतो ऽस्य जगत्सृष्टिं (०६६-०३५)
करोमि स्थितिपालनम् (०६६-०३५)
देवत्वे देविका चेष्टा (०६६-०३६)
तिर्यक्त्वे मम तामसी (०६६-०३६)
इच्छया मानुषत्वे च (०६६-०३६)
विचरामि नृचेष्टया (०६६-०३६)
प्रतिक्षणं च भूतेषु (०६६-०३७)
सृजामि जगतः स्थितिम् (०६६-०३७)
करोमि विद्यमानेषु (०६६-०३७)
धर्मसंस्थापनेषु च (०६६-०३७)
यद् वै धर्मोपकाराय (०६६-०३८)
यच् च दुष्टनिवर्हणम् (०६६-०३८)
चरितं मानुषादीनां (०६६-०३८)

तद् वै जानीहि मत्कृतम् (०६६-०३८)
यच् च पृच्छसि मां ब्रह्मन् (०६६-०३९)
काः काः संभूतयस् तव (०६६-०३९)
ताः शृणुष्व समासेन (०६६-०३९)
या भविष्यन्ति सांप्रतम् (०६६-०३९)
मत्स्येन भूत्वा पातालात् (०६६-०४०)
तव वेदाः समुद्धृताः (०६६-०४०)
मधुकैटभाभ्यां च हृता (०६६-०४०)
दत्ताश्वशिरसा मया (०६६-०४०)
त्वम् अप्य् अत्र महाभाग (०६६-०४१)
मदंशः कमलोदरात् (०६६-०४१)
मन्नाभिसंभवाज् जातः (०६६-०४१)
प्रजासृष्टिकरः परः (०६६-०४१)
एकार्णवं च यद् इदं (०६६-०४२)
ब्रह्मन् पश्यस्य् अशेषतः (०६६-०४२)
अस्मिन् वसुमतीं देवीं (०६६-०४२)
मग्नां पातालम् आगताम् (०६६-०४२)
वेदपादो यूपदंष्ट्रः (०६६-०४३)
क्रतुदन्तश् चितीमुखः (०६६-०४३)
अग्निजिह्वो दर्भरोमा (०६६-०४३)
ब्रह्मशीर्षो महातपाः (०६६-०४३)
अहोरात्रेक्षणधरो (०६६-०४४)
वेदाङ्गश्रुतिभूषणः (०६६-०४४)
आज्यनासः श्रुवस्तुण्डः (०६६-०४४)
सामघोषस्वरो महान् (०६६-०४४)
प्राग्वंशकायो द्युतिमान् (०६६-०४५)
नानादीक्षाभिर् आचितः (०६६-०४५)
दक्षिणाहृदयो योगी (०६६-०४५)
महासत्त्रमयो महान् (०६६-०४५)
उपकर्मेष्टिरुचिरः (०६६-०४६)
प्रवर्गावर्तभूषणः (०६६-०४६)
नानाच्छन्दोगतिपथो (०६६-०४६)
ब्रह्मोक्तिकर्मविक्रमः (०६६-०४६)
भूत्वा यज्ञवराहो ऽहम् (०६६-०४७)
इति ब्रह्मन् रसातलात् (०६६-०४७)
पृथिवीम् उद्धरिष्यामि (०६६-०४७)
स्थापयैष्यामि च स्थितौ (०६६-०४७)
पर्वतानां नदीनां च (०६६-०४८)
द्वीपादीनां च या स्थितिः (०६६-०४८)
तां च तद्वत् करिष्यामि (०६६-०४८)
शैलादीनाम् अनुक्रमात् (०६६-०४८)
हिरण्याक्षं च दुर्वृत्तं (०६६-०४९)
कश्यपस्यात्मसंभवम् (०६६-०४९)
तेनैव घातयिष्यामि (०६६-०४९)
रूपेणाहं प्रजापते (०६६-०४९)
उत्पाद्य पृथिवीं सम्यक् (०६६-०५०)
स्थापयित्वा यथा पुरा (०६६-०५०)
सृष्टिं ततः करिष्यामि (०६६-०५०)
त्वाम् आविश्य प्रजापतिम् (०६६-०५०)

जानासि कापिलं रूपं (०६६-*(८८))
प्रथमं पौरुषं मम (०६६-*(८८))
सर्वविद्याप्रणेतारं (०६६-*(८८))
त्वया वेदेषु दर्शितम् (०६६-*(८८))
रविमण्डलमध्यस्थम् (०६६-*(८८))
अग्नेर् यत् परमं पदम् (०६६-*(८८))
तत उत्सृज्य रूपाणि (०६६-०५१)
अमरादिविभेदतः (०६६-०५१)
व्यापयिष्यामि लोकांस् तु (०६६-०५१)
भूलोकादीम् अशेषतः (०६६-०५१)
सृष्टं जगद् इदं देव- (०६६-०५२)
मानुष्यादिविशेषणम् (०६६-०५२)
हिरण्यकशिपुर् दैत्यस् (०६६-०५२)
तापयिष्यति विक्रमात् (०६६-०५२)
व्यंसयित्वा वरांस् तस्य (०६६-०५३)
तैस् तैर् हेतुभिर् आत्मवान् (०६६-०५३)
नृसिंहरूपं कृत्वाहं (०६६-०५३)
घातयिष्यामि तं रिपुम् (०६६-०५३)
क्षीराब्दौ कूर्मरूपो ऽहं (०६६-०५४)
देवानां कमलोद्भव (०६६-०५४)
मन्दरं धारयिष्यामि (०६६-०५४)
पृष्ठेनामृतमन्थने (०६६-०५४)
हरिष्यति च देवानां (०६६-०५५)
यज्ञभागान् यदा बलिः (०६६-०५५)
तदाहं वामनो भूत्वा (०६६-०५५)
गत्वा तस्य महाध्वरम् (०६६-०५५)
वञ्चयित्वासुरपतिं (०६६-०५६)
करिष्यामि त्रिपिष्टपम् (०६६-०५६)
बलिं चापि करिष्यामि (०६६-०५६)
पातालतलवासिनम् (०६६-०५६)
अत्रेर् दत्त्वा वरं चैव (०६६-०५७)
तस्य पुत्रत्वम् आगतः (०६६-०५७)
दत्तात्रेयो भविष्यामि (०६६-०५७)
निहंस्यामि तथासुरान् (०६६-०५७)
सत्त्वानाम् उपकाराय (०६६-०५८)
प्रधानपुरुषान्तरम् (०६६-०५८)
दर्शयिष्यामि लोकेषु (०६६-०५८)
कापिलं रूपम् आस्थितः (०६६-०५८)
कार्तवीर्यादिभिश् चान्यैश् (०६६-०५९)
चतुर्दशभिर् अन्विताः (०६६-०५९)
भविष्यन्ति मदंशेन (०६६-०५९)
त्रेतायां चक्रवर्तिनः (०६६-०५९)
ततश् च भार्गवो रामो (०६६-०६०)
गृहीतपरशुर् द्विजः (०६६-०६०)
भूत्वा क्षत्रियहीनां च (०६६-०६०)
करिष्यामि वसुंधराम् (०६६-०६०)
पुनश् च राघवो रामो (०६६-०६१)
भूत्वा दशरथात्मजः (०६६-०६१)
बद्ध्वा महोदधिं कर्ता (०६६-०६१)

राक्षसानां कुलक्षयम् (०६६-०६१)
उत्तीर्य च परं पारं (०६६-*(८९))
लङ्काम् आसाद्य दुर्जयाम् (०६६-*(८९))
निहत्य रावणं वीरं (०६६-*(८९))
वरदानेन दर्पितम् (०६६-*(८९))
मायाविनां महावीर्यं (०६६-*(८९))
रक्षसां वनशायिनाम् (०६६-*(८९))
लक्ष्मणानुचरो रामः (०६६-*(८९))
करिष्यामि कुलक्षयम् (०६६-*(८९))
अष्टाविंशतिमे प्राप्ते (०६६-०६२)
द्वापरे कंसम् उच्छ्रितम् (०६६-०६२)
केशिनं धेनुकं चैव (०६६-०६२)
शकुनिं पूतनां तथा (०६६-०६२)
अरिष्टं च हनिष्यामि (०६६-०६२)
मुरुं नरकम् एव च (०६६-०६२)
निशुम्भं सहयग्रीवण् (०६६-०६३)
तथान्यांश् चासुरेश्वरान् (०६६-०६३)
हनिष्यामि सुदुर्वृत्तांल् (०६६-०६३)
लोकानां हितकाम्यया (०६६-०६३)
प्रवर्षति स देवेन्द्रे (०६६-०६४)
महोभङ्गविरोधिते (०६६-०६४)
गोवर्धनं गिरिवरं (०६६-०६४)
धारयिष्यामि बाहुना (०६६-०६४)
भाराक्रान्ताम् इमाम् उर्वीं (०६६-०६५)
धनंजयसहायवान् (०६६-०६५)
घातयित्वाखिलान् भूपांल् (०६६-०६५)
लघ्वीं कर्तास्मि सत्तम (०६६-०६५)
प्राप्ते कलियुगे कृत्स्नम् (०६६-०६६)
उपसंहृत्य वै कुलम् (०६६-०६६)
द्वारकां प्लावयिष्यामि (०६६-०६६)
उत्स्रक्ष्यामि मनुष्यताम् (०६६-०६६)
द्वितीयो यो ममांशस् तु (०६६-०६७)
रामो ऽनन्तः स लाङ्गली (०६६-०६७)
सो ऽपि संत्यज्य वसुधां (०६६-०६७)
रसातलम् उपेष्यति (०६६-०६७)
ततः कलियुगे घोरे (०६६-०६८)
संप्राप्ते ऽब्जसमुद्भव (०६६-०६८)
शुद्धोदनसुतो बुद्धो (०६६-०६८)
भविष्यामि विमत्सरः (०६६-०६८)
बौद्धं धर्मम् उपाश्रित्य (०६६-०६९)
करिष्ये धर्मदेशनाम् (०६६-०६९)
नराणाम् अथ नारीणां (०६६-०६९)
दयां भूतेषु दर्शयन् (०६६-०६९)
रक्ताम्बरा ह्य् आञ्जिताक्षाः (०६६-०७०)
प्रशान्तमनसस् ततः (०६६-०७०)
शूद्रा धर्मं प्रवक्ष्यन्ति (०६६-०७०)
मयि बुद्धत्वम् आगते (०६६-०७०)
एडूकचिह्ना पृथिवी (०६६-०७१)
न देवगृहभूषिता (०६६-०७१)

भवित्री प्रायशो ब्रह्मन् (०६६-०७१)
मयि बुद्धत्वम् आगते (०६६-०७१)
स्कन्धदर्शनमात्रं हि (०६६-०७२)
पश्यन्तः सकलं जगत् (०६६-०७२)
शूद्राः शूद्रेषु दास्यन्ति (०६६-०७२)
मयि बुद्धत्वम् आगते (०६६-०७२)
अल्पायुषस् ततो मर्त्या (०६६-०७३)
मोहोपहतचेतसः (०६६-०७३)
नरकार्हाणि कर्माणि (०६६-०७३)
करिष्यन्ति प्रजापते (०६६-०७३)
स्वाध्यायेष्व् अवसीदन्तो (०६६-०७४)
ब्राह्मणाः शौचवर्जिताः (०६६-०७४)
अन्त्यप्रतिग्रहादानं (०६६-०७४)
करिष्यन्त्य् अल्पमेधसः (०६६-०७४)
न श्रोष्यन्ति पितुः पुत्राः (०६६-०७५)
श्वश्रूश्वशुरयोः स्नुषाः (०६६-०७५)
न भार्या भर्तुर् ईशस्य (०६६-०७५)
न भृत्या विनयस्थिताः (०६६-०७५)
वर्णसंकरतां प्राप्ते (०६६-०७६)
लोके ऽस्मिन् दस्युतां गते (०६६-०७६)
ब्राह्मणादिषु वर्णेषु (०६६-०७६)
भविष्यत्य् अधरोत्तरम् (०६६-०७६)
धर्मकञ्चुकसंवीता (०६६-०७७)
विधर्मरुचयस् तथा (०६६-०७७)
मानुषान् भक्षयिष्यन्ति (०६६-०७७)
म्लेच्छाः पार्थिवरूपिणः (०६६-०७७)
ततः कलियुगस्यान्ते (०६६-०७८)
वेदो वाजसनेयकः (०६६-०७८)
दश पञ्च च वै शाखाः (०६६-०७८)
प्रमाणेन भविष्यति (०६६-०७८)
ततो ऽहं संभविष्यामि (०६६-०७९)
ब्राह्मणो हरिपिङ्गलः (०६६-०७९)
कल्की विष्णुयशःपुत्रो (०६६-०७९)
याज्ञवल्क्यपुरोहितः (०६६-०७९)
म्लेच्छान् उत्सादयिष्यामि (०६६-०८०)
गृहीतास्त्रः कुशायुधः (०६६-०८०)
स्थापयिष्यामि मर्यादाश् (०६६-०८०)
चातुर्वर्ण्ये यथोदिताः (०६६-०८०)
तथाश्रमेषु सर्वेषु (०६६-०८१)
ब्रह्मचारिव्रतादिकाः (०६६-०८१)
स्थापयित्वा ततः सर्वाः (०६६-०८१)
प्रजाः सद्धर्मवर्त्मनि (०६६-०८१)
कल्किरूपं परित्यज्य (०६६-०८१)
दिवम् एष्याम्य् अहं पुनः (०६६-०८१)
ततः कृतयुगं भूयः (०६६-०८२)
पूर्ववत् संप्रवर्त्स्यते (०६६-०८२)
वर्णाश्रमाश् च धर्मेषु (०६६-०८२)
द्वेषु स्थास्यन्ति सत्तम (०६६-०८२)
एवं सर्वेषु कल्पेषु (०६६-०८३)

सर्वमन्वन्तरेषु च (०६६-०८३)
ममावताराः शतशो (०६६-०८३)
ये भवन्ति जगद्धिताः (०६६-०८३)
संकर्षणात्मजश् चैव (०६६-०८४)
कल्पान्ते च रसातलात् (०६६-०८४)
समुत्पत्स्येत् तदा रुद्रः (०६६-०८४)
कालाग्निर् इति यः श्रुतः (०६६-०८४)
ततः क्षयं करिष्यामि (०६६-०८५)
जगत् स्थावरजङ्गमम् (०६६-०८५)
भूयश् चैव हि स्वप्स्यामि (०६६-०८५)
जगत्य् एकार्णवे स्थिते (०६६-०८५)
त्वद्रूपी च ततो भूत्वा (०६६-०८५)
जगत् स्रक्ष्याम्य् अहं पुनः (०६६-०८५)
एतत् संक्षेपतो ब्रह्मन् (०६६-०८६)
मयाख्यातं यथातथम् (०६६-०८६)
अंशावतरणं सर्वं (०६६-०८६)
मत्तः संक्षेपतः शृणु (०६६-०८६)
यद् दृश्यं यच् च वै स्पृश्यं (०६६-०८७)
यद् घ्रेयं रस्यते च यत् (०६६-०८७)
यच् छ्रव्यं यच् च मन्तव्यं (०६६-०८७)
बोधव्यं चाहम् अंशगः (०६६-०८७)
यत् तु बुद्धेः परतरम् (०६६-०८८)
अनाख्येयम् अनोपमम् (०६६-०८८)
तद् अहं ब्रह्म निर्द्वन्द्वं (०६६-०८८)
यद् वै पश्यन्ति सूरयः (०६६-०८८)
इदं जन्मरहस्यं मे (०६६-०८९)
यो नरः कीर्तयिष्यति (०६६-०८९)
सुलभो ऽहं भविष्यामि (०६६-०८९)
तस्य जन्मनि जन्मनि (०६६-०८९)
पठन्न् एतद् ब्रह्महा तु (०६६-०९०)
सुरापो गुरुतल्पगः (०६६-०९०)
स्तेयी कृतघ्नो गोघ्नश् च (०६६-०९०)
सर्वपापैः प्रमुच्यते (०६६-०९०)
गर्भिणी जनयेत् पुत्रं (०६६-०९१)
कन्या विन्दति सत्पतिम् (०६६-०९१)
लभन्ते ऽभिमतान् कामान् (०६६-०९१)
नरास् तांस् तान् यथेप्सितान् (०६६-०९१)
इति देवातिदेवेन (०६६-०९२)
ब्रह्मणो व्यक्तजन्मनः (०६६-०९२)
रहस्यम् इदम् आख्यातं (०६६-०९२)
तवापि कथितं मया (०६६-०९२)
विष्णुः सर्वगतो ऽनन्तः (०६६-०९३)
सर्वं तत्र प्रतिष्ठितम् (०६६-०९३)
स च सर्वम् इदं राजन् (०६६-०९३)
न ततो विद्यते परम् (०६६-०९३)
एतत् पवित्रं पठितं (०६६-०९४)
तथा दुःस्वप्ननाशनम् (०६६-०९४)
जातिस्मरत्वं प्रज्ञां च (०६६-०९४)
ददाति पठतां नृणाम् (०६६-०९४)

मया हि देवदेवस्य (०६७-००१)
विष्णोर् अमिततेजसः (०६७-००१)
श्रुताः संभूतयः सर्वा (०६७-००१)
गदतस् तव सुव्रत (०६७-००१)
यदि प्रसन्नो भगवान् (०६७-००२)
अनुग्राह्यो ऽस्मि वा यदि (०६७-००२)
तद् अहं श्रोतुम् इच्छामि (०६७-००२)
नृणां दुःस्वप्ननाशनम् (०६७-००२)
स्वप्ना हि सुमहाभाग (०६७-००३)
दृश्यन्ते ये शुभाशुभाः (०६७-००३)
फलानि ते प्रयच्छन्ति (०६७-००३)
तद्गुणान्य् एव भार्गव (०६७-००३)
यद् यत् पुण्यं पवित्रं च (०६७-००४)
नृणाम् अतिशुभप्रदम् (०६७-००४)
दुःस्वप्नोपशमायालं (०६७-००४)
तन् मे विस्तरतो वद (०६७-००४)
इदम् एव महाराज (०६७-००५)
पृष्टवांस् ते पितामहः (०६७-००५)
भीष्मं धर्मभृतां श्रेष्ठं (०६७-००५)
धर्मपुत्रो युधिष्ठिरः (०६७-००५)
देवव्रतं महाप्राज्ञं (०६७-००६)
सर्वशास्त्रविशारदम् (०६७-००६)
विनयेनोपसंगम्य (०६७-००६)
पर्यपृच्छद् युधिष्ठिरः (०६७-००६)
दुःस्वप्नदर्शनं घोरम् (०६७-००७)
अवेक्ष्य भरतर्षभ (०६७-००७)
प्रयतः किं जपेज् जप्यं (०६७-००७)
विबुद्धः किम् अनुस्मरेत् (०६७-००७)
पितामह महाबुद्धे (०६७-००८)
बुद्धेर् भेदो महान् अयम् (०६७-००८)
तद् अहं श्रोतुम् इच्छामि (०६७-००८)
ब्रूहि मे वदतां वर (०६७-००८)
शृणु राजन् महाबाहो (०६७-००९)
वर्तयिष्यामि ते ऽखिलम् (०६७-००९)
दुःस्वप्नदर्शने जप्यं (०६७-००९)
यद् वै नित्यं समाहितैः (०६७-००९)
अत्राप्य् उदाहरन्तीमम् (०६७-०१०)
इतिहासं पुरातनम् (०६७-०१०)
गजेन्द्रमोक्षणं पुण्यं (०६७-०१०)
कृष्णस्याक्लिष्टकर्मणः (०६७-०१०)
सर्वरत्नमयः श्रीमांस् (०६७-०११)
त्रिकूटो नाम पर्वतः (०६७-०११)
सुतः पर्वतराजस्य (०६७-०११)
सुमेरोर् भास्करद्युतेः (०६७-०११)
क्षीरोदजलवीच्यग्रैर् (०६७-०१२)
धौतामलशिलातलः (०६७-०१२)
उत्थितः सागरं भित्त्वा (०६७-०१२)
देवर्षिगणसेवितः (०६७-०१२)
अप्सरोभिः समाकीर्णः (०६७-०१३)

श्रीमान् प्रस्रवणाकुलः (०६७-०१३)
गन्धर्वैः किंनरैर् यक्षैः (०६७-०१३)
सिद्धचारणपन्नगैः (०६७-०१३)
विद्याधरैः सपत्निकैः (०६७-*(९२))
संयतैश् च तपस्विभिः (०६७-*(९२))
मृगैर् द्वीपैर् द्विजैश् चैव (०६७-०१४)
वृतः सौवर्णराजतैः (०६७-०१४)
पुंनागैः कर्णिकारैश् च (०६७-०१४)
पुष्पितैर् उपशोभितः (०६७-०१४)
चूतनीपकदम्बैश् च (०६७-०१५)
चन्दनागरुचम्पकैः (०६७-०१५)
शालैस् तालैस् तमालैश् च (०६७-०१५)
कुटजैश् चार्जुनैस् तथा (०६७-०१५)
एवं बहुविधैर् वृक्षैः (०६७-०१६)
सर्वतः समलंकृतः (०६७-०१६)
नानाधातूज्ज्वलैः शृङ्गैः (०६७-०१६)
प्रस्रवद्भिः समन्ततः (०६७-०१६)
मृगैः शाखामृगैः सिंहैर् (०६७-०१७)
मातंगैश् च सदामदैः (०६७-०१७)
जीवंजीवकसंघुष्टं (०६७-०१७)
चकोरशिखिनादितम् (०६७-०१७)
तस्यैकं काञ्चनं शृङ्गं (०६७-०१८)
सेवते यद् दिवादरः (०६७-०१८)
नानापुष्पसमाकीर्णं (०६७-०१८)
नानागन्धसमाकुलम् (०६७-०१८)
द्वितीयं राजतं शृङ्गं (०६७-०१९)
सेवते यन् निशाकरः (०६७-०१९)
पाण्डुराम्बुदसंकाशं (०६७-०१९)
तुषारचयसंनिभम् (०६७-०१९)
वज्रेन्द्रनीलवैडूर्य- (०६७-०२०)
तेजोभिर् भासयन् नभः (०६७-०२०)
तृतीयं ब्रह्मसदनं (०६७-०२०)
प्रकृष्टं शृङ्गम् उत्तमम् (०६७-०२०)
न तत् कृतघ्नाः पश्यन्ति (०६७-०२१)
न नृशंसा न नास्तिकाः (०६७-०२१)
नातप्ततपसः शैलं (०६७-०२१)
तं वै पश्यन्ति मानवाः (०६७-०२१)
तस्य सानुमतः पृष्ठे (०६७-०२२)
सरः काञ्चनपङ्कजम् (०६७-०२२)
कारण्डवसमाकीर्णं (०६७-०२२)
राजहंसोपशोभितम् (०६७-०२२)
मत्तभ्रमरसंघुष्टं (०६७-०२३)
फुल्लपङ्कजशोभितम् (०६७-०२३)
कुमुदोत्पलकल्हार- (०६७-०२३)
पुण्डरीकोपशोभितम् (०६७-०२३)
उत्पलैः शतपत्त्रैश् च (०६७-०२४)
काञ्चनैः समलंकृतम् (०६७-०२४)
पत्त्रैर् मणिदलप्रख्यैः (०६७-०२४)
पुष्पैः काञ्चनसंनिभैः (०६७-०२४)

गुल्मैः कीचकवेणूनां (०६७-०२४)
समन्तात् परिवारितम् (०६७-०२४)
तस्मिन् सरसि दुष्टात्मा (०६७-०२५)
विरूपो ऽन्तर्जलाशयः (०६७-०२५)
आसीद् ग्राहो गजेन्द्राणां (०६७-०२५)
दुराधर्षो महाबलः (०६७-०२५)
अथ दन्तोज्ज्वलमुखः (०६७-०२६)
कदाचिद् गजयूथपः (०६७-०२६)
आजगामासिताभ्राभः (०६७-०२६)
करेणुपरिवारितः (०६७-०२६)
मदस्रावी महारौद्रः (०६७-०२७)
पादचारीव पर्वतः (०६७-०२७)
वासयन् मदगन्धेन (०६७-०२७)
गिरिम् ऐरावतोपमः (०६७-०२७)
स गजो ऽञ्जनसंकाशो (०६७-०२८)
मदाच् चलितमानसः (०६७-०२८)
गन्धहस्तीति विख्यातः (०६७-*(९४))
सरः समभिगम्य तत् (०६७-*(९४))
तृषितः स जलं प्राप्य (०६७-*(९४))
कुसुमाकरशीतलम् (०६७-*(९४))
अपिबत् सहसा राजन् (०६७-*(९४))
करेणुपरिवारितः (०६७-*(९४))
सलीलं पङ्कजवने (०६७-०२८)
यूथमध्यगतो ऽव्रजत् (०६७-०२८)
गृहीतस् तेन रौद्रेण (०६७-०२९)
ग्राहेणाव्यक्तमूर्तिना (०६७-०२९)
पश्यन्तीनां करेणूनां (०६७-०२९)
क्रोशन्तीनां च दारुणम् (०६७-०२९)
क्रियते पङ्कजवने (०६७-*(९५))
ग्राहेणातिबलीयसा (०६७-*(९५))
गजश् चाकर्षते तीरं (०६७-*(९६))
ग्राहश् चाकर्षते जलम् (०६७-*(९६))
तयोर् द्वन्द्व महायुद्धं (०६७-*(९६))
दिव्यवर्षसहस्रिकम् (०६७-*(९६))
वारुणैः संयतः पाशैर् (०६७-०३०)
निःप्रयत्नगतिः कृतः (०६७-०३०)
वेष्ट्यमानः सुघोरैस् तु (०६७-०३०)
पाशैर् नागो दृढैस् तथा (०६७-०३०)
विस्फुर्ज्य च यथाशक्ति (०६७-०३१)
विक्रुश्य च महारवान् (०६७-०३१)
व्यथितः संनिरुत्साहो (०६७-०३१)
गृहीतो घोरकर्मणा (०६७-०३१)
परमापदम् आपन्नो (०६७-०३२)
मनसाचिन्तयद् धरिम् (०६७-०३२)
स तु नागवरः श्रीमान् (०६७-०३२)
नारायणपरायणः (०६७-०३२)
तम् एव परमं देवं (०६७-०३३)
गतः सर्वात्मना तदा (०६७-०३३)
एकाग्रं चिन्तयाम् आस (०६७-०३३)

विशुद्धेनान्तरात्मना (०६७-०३३)
जन्मजन्मान्तराभ्यासाद् (०६७-०३४)
भक्तिमान् गरुडध्वजे (०६७-०३४)
आद्यं देवं महात्मानं (०६७-०३४)
पूजयाम् आस केशवम् (०६७-०३४)
नवमेघप्रतीकाशं (०६७-०३५)
शङ्खचक्रगदाधरम् (०६७-०३५)
सहस्रशुभनामानम् (०६७-०३५)
आदिदेवम् अजं परम् (०६७-०३५)
दिग्बाहुं सर्वमूर्धानं (०६७-*(९८))
भूपादं गगनोदरम् (०६७-*(९८))
आदित्यचन्द्रनयनं (०६७-*(९८))
समग्रं लोकसाक्षिणम् (०६७-*(९८))
भगवन्तं प्रसन्नो ऽहं (०६७-*(९९))
विष्णुम् अप्रतिमौजसम् (०६७-*(९९))
प्रगृह्य पुष्कराग्रेण (०६७-०३६)
काञ्चनं कमलोत्तमम् (०६७-०३६)
आपद्विमोक्षम् अन्विच्छन् (०६७-०३६)
गजः स्तोत्रम् उदैरयत् (०६७-०३६)
ॐ नमो मूलप्रकृतये (०६७-*(१००),००१)
अजिताय महात्मने (०६७-*(१००),००१)
अनाश्रिताय देवाय (०६७-*(१००),००२)
निःस्पृहाय नमो नमः (०६७-*(१००),००२)
नम आद्याय बीजाय (०६७-*(१००),००३)
शिवाय च प्रशान्ताय (०६७-*(१००),००३)
आर्षेयाय प्रवर्तिने (०६७-*(१००),००४)
निश्चलाय यशस्विने (०६७-*(१००),००४)
अनन्तराय चैकाय (०६७-*(१००),००५)
सनातनाय पूर्वाय (०६७-*(१००),००५)
अव्यक्ताय नमो नमः (०६७-*(१००),००६)
पुराणाय नमो नमः (०६७-*(१००),००६)
नमो गुह्याय गूढाय (०६७-*(१००),००७)
गुणायागुणवर्तिने (०६७-*(१००),००८)
अतर्क्यायाप्रमेयाय (०६७-*(१००),००९)
अनन्ताय नमो नमः (०६७-*(१००),०१०)
नमो देवातिदेवाय (०६७-*(१००),०११)
अप्रभाय नमो नमः (०६७-*(१००),०१२)
नमो जगत्प्रस्थिताय (०६७-*(१००),०१३)
गोविन्दाय नमो नमः (०६७-*(१००),०१३)
नमो ऽस्तु पद्मनाभाय (०६७-*(१००),०१४)
सांख्ययोगोद्भवाय च (०६७-*(१००),०१४)
विश्वेश्वराय देवाय (०६७-*(१००),०१५)
शिवाय हरये नमः (०६७-*(१००),०१५)
नमो ऽस्तु तस्मै देवाय (०६७-*(१००),०१६)
निर्गुणाय गुणात्मने (०६७-*(१००),०१६)
नारायणाय विश्वाय (०६७-*(१००),०१७)
देवानां परमात्मने (०६७-*(१००),०१७)
नमो नमः कारणवामनाय (०६७-०३७)
नारायणायामितविक्रमाय (०६७-०३७)

श्रीशार्ङ्गचक्रासिगदाधराय (०६७-०३७)
नमो ऽस्तु तस्मै पुरुषोत्तमाय (०६७-०३७)
आद्याय वेदनिलयाय महोदराय (०६७-०३८)
सिंहाय दैत्यनिधनाय चतुर्भुजाय (०६७-०३८)
ब्रह्मेन्द्ररुद्रमुनिचारणसंस्तुताय (०६७-०३८)
देवोत्तमाय वरदाय नमो ऽच्युताय (०६७-०३८)
नागेन्द्रभोगशयनासनसुप्रियाय (०६७-०३९)
गोक्षीरहेमशुकनीलघनोपमाय (०६७-०३९)
पीताम्बराय मधुकैटभनाशनाय (०६७-०३९)
विश्वाय चारुमुकुटाय नमो ऽक्षराय (०६७-*(१०१))
भक्तिप्रियाय वरदीप्तसुदर्शनाय (०६७-०३९)
नाभिप्रजातकमलस्थचतुर्मुखाय (०६७-०४०)
क्षीरोदकार्णवनिकेतयशोधनाय (०६७-०४०)
नानाविचित्रमुकुटाङ्गदभूषणाय (०६७-०४०)
सर्वेश्वराय वरदाय नमो वराय (०६७-०४०)
विश्वात्मने परमकारणकारणाय (०६७-०४१)
फुल्लारविन्दविमलायतलोचनाय (०६७-०४१)
देवेन्द्रदानवपरीक्षितपौरुषाय (०६७-०४१)
योगेश्वराय विजयाय नमो वराय (०६७-०४१)
लोकायनाय त्रिदशायनाय (०६७-०४२)
ब्रह्मायनायात्मभवायनाय (०६७-०४२)
धर्मायनायैकजलायनाय (०६७-०४२)
महावराहाय सदा नतो ऽस्मि (०६७-०४२)
अचिन्त्यम् अव्यक्तम् अनन्तरूपं (०६७-०४३)
नारायणं कारणम् आदिदेवम् (०६७-०४३)
युगान्तशेषं पुरुषं पुराणं (०६७-०४३)
तं वासुदेवं शरणं प्रपद्ये (०६७-०४३)
योगेश्वरं चारुविचित्रमौलिम् (०६७-*(१०४))
आज्ञेयमौख्यं प्रकृतेः परस्थम् (०६७-*(१०४))
क्षेत्रज्ञम् आत्मप्रभवं वरेण्यं (०६७-*(१०४))
तं वासुदेवं शरणं प्रपद्ये (०६७-*(१०४))
अदृश्यम् अच्छेद्यम् अनादिमध्यं (०६७-०४४)
महर्षयो ब्रह्मविदः सुरेशम् (०६७-०४४)
वदन्ति यं वै पुरुषं सनातनं (०६७-०४४)
तं वासुदेवं शरणं प्रपद्ये (०६७-०४४)
यद् अक्षरं ब्रह्म वदन्ति सर्वगं (०६७-०४५)
निशाम्य यं मृत्युमुखात् प्रमुच्यते (०६७-०४५)
तम् ईश्वरं तृप्तम् अनोपमैर् गुणैः (०६७-०४५)
परायणं विष्णुम् उपैमि शाश्वतम् (०६७-०४५)
कार्यं क्रियाकारणम् अप्रमेयं (०६७-०४६)
हिरण्यनाभं वरपद्मनाभम् (०६७-०४६)
महाबलं वेदनिधिं सुरोत्तमं (०६७-०४६)
व्रजामि विष्णुं शरणं जनार्दनम् (०६७-०४६)
विचित्रकेयूरमहार्हनिष्कं (०६७-०४७)
रत्नोत्तमालंकृतसर्वगात्रम् (०६७-०४७)
पीताम्बरं काञ्चनभक्तिचित्रं (०६७-०४७)
मालाधरं केशवम् अभ्युपैमि (०६७-०४७)
भवोद्भवं वेदविदां वरिष्ठं (०६७-०४८)
योगात्मानं सांख्यविदां वरिष्ठम् (०६७-०४८)

आदित्यचन्द्राश्विवसुप्रभावं (०६७-०४८)
प्रभुं प्रपद्ये ऽच्युतम् आत्मभूतम् (०६७-०४८)
श्रीवत्साङ्कं महादेवं (०६७-०४९)
वेदगुह्यम् अनुत्तमम् (०६७-०४९)
प्रपद्ये सूक्ष्मम् अचलं (०६७-०४९)
भक्तानाम् अभयप्रदम् (०६७-०४९)
प्रभवं सर्वलोकानां (०६७-०५०)
निर्गुणं परमेश्वरम् (०६७-०५०)
प्रपद्ये मुक्तसंगानां (०६७-०५०)
यतीनां परमां गतिम् (०६७-०५०)
भगवन्तं सुराध्यक्षम् (०६७-०५१)
अक्षरं पुष्करेक्षणम् (०६७-०५१)
शरण्यं शरणं भक्त्या (०६७-०५१)
प्रपद्ये ब्राह्मणप्रियम् (०६७-०५१)
त्रिविक्रमं त्रिलोकेशम् (०६७-०५२)
आद्यम् एकम् अनामयम् (०६७-०५२)
भूतात्मानं महात्मानं (०६७-०५२)
प्रपद्ये मधुसूदनम् (०६७-०५२)
आदिदेवम् अजं शम्भुं (०६७-*(१०५))
व्यक्ताव्यक्तं जनार्दनम् (०६७-*(१०५))
क्षेत्रज्ञं पुरुषं यज्ञं (०६७-०५३)
त्रिगुणातीतम् अव्ययम् (०६७-०५३)
नारायणम् अणीयांसं (०६७-०५३)
प्रपद्ये परमेश्वरम् (०६७-०५३)
एकाय लोकत्रयाय (०६७-०५४)
परतः परमात्मने (०६७-०५४)
नमः सहस्रशिरसे (०६७-०५४)
अनन्ताय महात्मने (०६७-०५४)
वरेण्यम् अनघं देवम् (०६७-०५५)
ऋषयो वेदपारगाः (०६७-०५५)
कीर्तयन्ति च यं सर्वे (०६७-०५५)
तं प्रपद्ये सनातनम् (०६७-०५५)
नमस् ते पुण्डरीकाक्ष (०६७-०५६)
भक्तानाम् अभयप्रद (०६७-०५६)
सुब्रह्मण्य नमस् ते ऽस्तु (०६७-०५६)
त्राहि मां शरणागतम् (०६७-०५६)
भक्तिं तस्यानुसंचिन्त्य (०६७-०५७)
नागस्यामोघसंस्तवम् (०६७-०५७)
प्रीतिमान् अभवद् राजन् (०६७-०५७)
शङ्खचक्रगदाधरः (०६७-०५७)
सांनिध्यं कल्पयाम् आस (०६७-०५७)
तस्मिन् सरसि माधवः (०६७-०५७)
ग्राहग्रस्तं गजं तं च (०६७-०५८)
संगृह्य सलिलाशयात् (०६७-०५८)
उज्जहाराप्रमेयात्मा (०६७-०५८)
तरसैवारिसूदनः (०६७-०५८)
स्थलस्थं दारयाम् आस (०६७-०५९)
ग्राहं चक्रेण माधवः (०६७-०५९)
मोक्षयाम् आस च गजं (०६७-०५९)

पाशेभ्यः शरणागतम् (०६७-०५९)
स हि देवलशापेन (०६७-०६०)
हूहू गन्धर्वसत्तमः (०६७-०६०)
गजत्वम् अगमत् कृष्णान् (०६७-०६०)
मोक्षं प्राप्य दिवं गतः (०६७-०६०)
शापाद् विमुक्तः सद्यश् च (०६७-०६०)
गजो गन्धर्वतां गतः (०६७-०६०)
ग्राहो ऽपि यक्षतां यातो (०६७-०६१)
यः कृष्णेन निपातितः (०६७-०६१)
तस्यापि शापमोक्षो ऽसौ (०६७-०६१)
जैगीषव्यकृतो ऽभवत् (०६७-०६१)
प्रीतिमांस् त्राति गोविन्दः (०६७-०६२)
सद्यः संसारसागरात् (०६७-०६२)
क्रुद्धो ऽपि निघ्नन् देवत्वम् (०६७-०६२)
अरातीनां प्रयच्छति (०६७-०६२)
तौ च स्वं स्वं वपुः प्राप्य (०६७-०६३)
प्रणिपत्य जनार्दनम् (०६७-०६३)
गन्धर्वराट् तथा यक्षः (०६७-०६३)
परां निर्वृतिम् आगतौ (०६७-०६३)
इदं चैव महाबाहो (०६७-०६४)
देवदेवो ऽभ्यभाषत (०६७-०६४)
दृष्ट्वा मुक्तौ गजग्रहौ (०६७-०६४)
भगवान् मधुसूदनः (०६७-०६४)
यो ग्राहं नागराजं च (०६७-०६५)
मां चैव प्रणिधानवान् (०६७-०६५)
स्मरिष्यति सरश् चेदं (०६७-०६५)
युवयोर् मोक्षणं तथा (०६७-०६५)
गुल्मं कीचकवेणूनां (०६७-०६६)
तं च शैलवरं तथा (०६७-०६६)
अश्वत्थं भास्करं गङ्गां (०६७-०६६)
नैमिषारण्यम् एव च (०६७-०६६)
संस्मरिष्यन्ति ये मर्त्याः (०६७-०६७)
सम्यक् श्रोष्यन्ति वापि ये (०६७-०६७)
न ते दुःस्वप्नपापस्य (०६७-०६७)
भोक्तारो मत्परिग्रहात् (०६७-०६७)
सर्वपापैः प्रमोक्ष्यन्ते (०६७-०६८)
कल्याणानां च भागिनः (०६७-०६८)
भविष्यन्ति तथा पुण्यां (०६७-०६८)
गतिं यास्यन्ति मानवाः (०६७-०६८)
दुःस्वप्नं च नृणां तेषां (०६७-०६८)
सुस्वप्नं च भविष्यति (०६७-०६८)
कौर्मं मात्स्यं च वाराहं (०६७-०६९)
वामनं तार्क्ष्यम् एव च (०६७-०६९)
नारसिंहं तथा रूपं (०६७-०६९)
सृष्टिसंहारकारकम् (०६७-०६९)
एतानि प्रातर् उत्थाय (०६७-०७०)
संस्मरिष्यन्ति ये नराः (०६७-०७०)
सर्वपापविनिर्मुक्तास् (०६७-०७०)
ते यान्ति परमां गतिम् (०६७-०७०)

एवम् उक्त्वा तु राजेन्द्र (०६७-०७१)
देवदेवो जनार्दनः (०६७-०७१)
अस्पृशद् गजगन्धर्वं (०६७-०७१)
ग्राहयक्षं च तं तदा (०६७-०७१)
तेन स्पृष्टाव् उभौ सद्यो (०६७-०७२)
दिव्यमाल्याम्बरान्वितौ (०६७-०७२)
विमाने ऽभिमते प्राप्य (०६७-०७२)
जग्मतुस् त्रिदशालयम् (०६७-०७२)
ततो देवपतिः कृष्णो (०६७-०७३)
मोक्षयित्वा गजोत्तमम् (०६७-०७३)
ऋषिभिः स्तूयमानो हि (०६७-०७३)
गुह्यैर् वेदपदाक्षरैः (०६७-०७३)
गतः स भगवान् विष्णुर् (०६७-०७३)
दुर्विज्ञेयगतिः प्रभुः (०६७-०७३)
गजेन्द्रमोक्षणं दृष्ट्वा (०६७-०७४)
सर्वे चेन्द्रपुरोगमाः (०६७-०७४)
ब्रह्माणम् अग्रतः कृत्वा (०६७-०७४)
सर्वे प्राञ्जलयो ऽभवन् (०६७-०७४)
ववन्दिरे महात्मानं (०६७-*(१०७))
प्रभुं नारायणं हरिम् (०६७-*(१०७))
विस्मयोत्फुल्लनयनाः (०६७-*(१०७))
प्रजापतिपुरःसराः (०६७-*(१०७))
य इदं शृणुयान् नित्यं (०६७-*(१०७))
प्रातर् उत्थाय मानवः (०६७-*(१०७))
प्राप्नुयात् परमां सिद्धिं (०६७-*(१०७))
दुःस्वप्नस् तस्य नश्यति (०६७-*(१०७))
गजेन्द्रमोक्षणं पुण्यं (०६७-०७५)
सर्वपापप्रमोचनम् (०६७-०७५)
श्रावयेत् प्रातर् उत्थाय (०६७-०७५)
सर्वपापैः प्रमुच्यते (०६७-०७५)
श्रद्धया हि कुरुश्रेष्ठ (०६७-०७६)
स्मृतेन कथितेन च (०६७-०७६)
गजेन्द्रमोक्षणेनेह (०६७-०७६)
दीर्घम् आयुर् अवाप्नुयात् (०६७-०७६)
मया ते कथितं दिव्यं (०६७-०७७)
पवित्रं पापनाशनम् (०६७-०७७)
कीर्तयस्व महाबाहो (०६७-०७७)
महादुःस्वप्ननाशनम् (०६७-०७७)
कीर्त्यमानं च विप्रेभ्यः (०६७-*(१०८))
शृणु भक्त्या यथोदितम् (०६७-*(१०८))
गजेन्द्रमोक्षणं श्रुत्वा (०६७-०७८)
कुन्तीपुत्रो युधिष्ठिरः (०६७-०७८)
भीष्माद् भगीरथीपुत्रात् (०६७-०७८)
पूजयाम् आस केशवम् (०६७-०७८)
ये चापि पाण्डुपुत्रस्य (०६७-०७९)
समीपस्था द्विजोत्तमाः (०६७-०७९)
ते ऽपि भीष्मस्य पार्श्वस्थं (०६७-०७९)
वासुदेवं प्रणेमिरे (०६७-०७९)
वरं वरेण्यं वरपद्मनाभं (०६७-०८०)

नारायणं ब्रह्मनिधिं सुरेशम् (०६७-०८०)
तं देवगुह्यं पुरुषं पुराणं (०६७-०८०)
ववन्दिरे ब्रह्मविदां वरिष्ठम् (०६७-०८०)
एतत् पुण्यं महाराज (०६७-०८१)
नराणां पापकर्मणाम् (०६७-०८१)
दुःस्वप्नदर्शने घोरे (०६७-०८१)
श्रुत्वा पापात् प्रमुच्यते (०६७-०८१)
भक्तिमान् पुण्डरीकाक्षे (०६७-०८१)
गजो दुःखाद् विमोचितः (०६७-०८१)
तथा त्वम् अपि राजेन्द्र (०६७-०८२)
प्रपद्य शरणं हरिम् (०६७-०८२)
विमुक्तः सर्वपापेभ्यः (०६७-०८२)
प्राप्स्यसे परमां गतिम् (०६७-०८२)
महामते महाप्राज्ञ (०६८-००१)
सर्वशास्त्रविशारद (०६८-००१)
अक्षीणकर्मबन्धस् तु (०६८-००१)
पुरुषो द्विजसत्तम (०६८-००१)
मरणे यज् जपञ् जप्यं (०६८-००२)
यच् च भावं अनुस्मरन् (०६८-००२)
परं पदम् अवाप्नोति (०६८-००२)
तन् मे वद महामुने (०६८-००२)
श्रीवत्साङ्कं जगद्बीजम् (०६८-००३)
अनन्तं लोकभावनम् (०६८-००३)
पुरा नारायणं देवं (०६८-००३)
नारदः पर्यपृच्छत (०६८-००३)
भगवन् भूतभव्येश (०६८-००४)
श्रद्दधानैर् जितेन्द्रियैः (०६८-००४)
कथं भक्तैर् विचिन्त्यो ऽसि (०६८-००४)
मरणे प्रत्युपस्थिते (०६८-००४)
किं वा जप्यं जपेन् नित्यं (०६८-००५)
कल्यम् उत्थाय मानवः (०६८-००५)
स्वपन् विबुध्यन् ध्यायंश् च (०६८-००५)
तन् मे ब्रूहि सनातन (०६८-००५)
श्रुत्वा तस्य तु देवर्षेर् (०६८-००६)
वाक्यं वाक्यविशारदः (०६८-००६)
प्रोवाच भगवान् विष्णुर् (०६८-००६)
नारदं जगतो गतिः (०६८-००६)
हन्त ते कथयिष्यामि (०६८-००७)
मुने दिव्याम् अनुस्मृतिम् (०६८-००७)
मरणे याम् अनुस्मृत्य (०६८-००७)
प्राप्नोति परमां गतिम् (०६८-००७)
ओंकारम् आदितः कृत्वा (०६८-००८)
माम् अनुस्मृत्य मन्मनाः (०६८-००८)
एकाग्रप्रयतो भूत्वा (०६८-००८)
इदं मन्त्रम् उदीरयेत् (०६८-००८)
अव्यक्तं शाश्वतं देवम् (०६८-००९)
अनन्तं पुरुषोत्तमम् (०६८-००९)
प्रपद्ये प्राञ्जलिर् विष्णुम् (०६८-००९)
अच्युतं परमेश्वरम् (०६८-००९)

पुराणं परमं विष्णुम् (०६८-०१०)
अद्भुतं लोकभावनम् (०६८-०१०)
प्रपद्ये पुण्डरीकाक्षम् (०६८-०१०)
ईशं भक्तानुकम्पिनम् (०६८-०१०)
लोकनाथं प्रपन्नो ऽस्मि (०६८-०११)
अक्षरं परमं पदम् (०६८-०११)
भगवन्तं प्रपन्नो ऽस्मि (०६८-०११)
भूतभव्यभवत्प्रभुम् (०६८-०११)
स्रष्टारं सर्वभूतानाम् (०६८-०१२)
अनन्तबलपौरुषम् (०६८-०१२)
पद्मनाभं हृषीकेशं (०६८-०१२)
पपद्ये सत्यम् अव्ययम् (०६८-०१२)
हिरण्यगर्भं भूगर्भम् (०६८-०१३)
अमृतं विश्वतोमुखम् (०६८-०१३)
आभास्वरम् अनाद्यन्तं (०६८-०१३)
प्रपद्ये भास्करद्युतिम् (०६८-०१३)
सहस्रशिरसं देवं (०६८-०१४)
वैकुण्ठं तार्क्ष्यवाहनम् (०६८-०१४)
प्रपद्ये सूक्ष्मम् अचलं (०६८-०१४)
वरेण्यम् अभयप्रदम् (०६८-०१४)
नारायणं नरं हंसं (०६८-०१५)
योगात्मानं सनातनम् (०६८-०१५)
शरण्यं सर्वलोकानां (०६८-०१५)
प्रपद्ये ध्रुवम् ईश्वरम् (०६८-०१५)
यः प्रभुः सर्वलोकानां (०६८-०१६)
येन सर्वम् इदं ततम् (०६८-०१६)
चराचरगुरुर् देवः (०६८-०१६,*(११०))
स नो विष्णुः प्रसीदतु (०६८-०१६,*(११०))
यस्माज् जातः पुरा ब्रह्मा (०६८-०१७)
पद्मयोनिः पितामहः (०६८-०१७)
प्रसीदतु स नो विष्णुः (०६८-०१७)
पिता माता पितामहः (०६८-०१७)
यः पुरा प्रलये प्राप्ते (०६८-०१८)
नष्टे लोके चराचरे (०६८-०१८)
एकस् तिष्ठति योगात्मा (०६८-०१८)
स नो विष्णुः प्रसीदतु (०६८-०१८)
चतुर्भिश् च चतुर्भिश् च (०६८-*(१०९))
द्वाभ्यां पञ्चभिर् एव च (०६८-*(१०९))
हूयते च पुनर् द्वाभ्यां (०६८-*(१०९))
स नो विष्णुः प्रसीदतु (०६८-*(१०९))
पर्जन्यः पृथिवी सस्यं (०६८-०१९)
कालो धर्मः क्रिया फलम् (०६८-०१९)
गुणाकरः स नो बभ्रुर् (०६८-०१९)
वासुदेवः प्रसीदतु (०६८-०१९)
योगावास नमस् तुभ्यं (०६८-०२०)
सर्वावास वरप्रद (०६८-०२०)
यज्ञगर्भ महाभाग (०६८-०२०)
पञ्चयज्ञ नमो ऽस्तु ते (०६८-०२०)
चतुर्मूर्ते जगद्धाम (०६८-०२१)

लक्ष्म्यावास वरप्रद (०६८-०२१)
सर्वावास नमस् ते ऽस्तु (०६८-०२१)
साक्षिभूत जगत्पते (०६८-०२१)
अजेय खण्डपरशो (०६८-०२२)
विश्वमूर्ते वृषाकपे (०६८-०२२)
त्रिगर्ते पञ्चकालज्ञ (०६८-०२२)
नमस् ते ज्ञानसागर (०६८-०२२)
अव्यक्ताद् अण्डम् उत्पन्नम् (०६८-०२३)
अव्यक्ताद्यः परः प्रभुः (०६८-०२३)
यस्मात् परतरं नास्ति (०६८-०२३)
तम् अस्मि शरणं गतः (०६८-०२३)
चिन्तयन्तो हि यं नित्यं (०६८-०२४)
ब्रह्मेशानादयः प्रभुम् (०६८-०२४)
निश्चयं नाधिगच्छन्ति (०६८-०२४)
तम् अस्मि शरणं गतः (०६८-०२४)
जितेन्द्रिया महात्मानो (०६८-०२५)
ज्ञानध्यानपरायणाः (०६८-०२५)
यं प्राप्य न निवर्तन्ते (०६८-०२५)
तम् अस्मि शरणं गतः (०६८-०२५)
एकांशेन जगत् सर्वं (०६८-०२६)
यो ऽवष्टभ्य विभुः स्थितः (०६८-०२६)
अग्राह्यो निर्गुणः शास्ता (०६८-०२६)
तम् अस्मि शरणं गतः (०६८-०२६)
दिवाकरस्य सौम्यं हि (०६८-०२७)
मध्ये ज्योतिर् अवस्थितम् (०६८-०२७)
क्षेत्रज्ञम् इति यं प्राहुः (०६८-०२७)
स महात्मा प्रसीदतु (०६८-०२७)
अव्यक्तम् अनवस्थानो (०६८-०२८)
दुर्विज्ञेयः सनातनः (०६८-०२८)
आस्थितः प्रकृतिं भुङ्क्ते (०६८-०२८)
स महात्मा प्रसीदतु (०६८-०२८)
क्षेत्रज्ञः पञ्चधा भुङ्क्ते (०६८-०२९)
प्रकृतिं बहुभिर् गुणैः (०६८-०२९)
मनोगुणांश् च यो भुङ्क्ते (०६८-०२९)
स महात्मा प्रसीदतु (०६८-०२९)
सांख्या योगाश् च ये चान्ये (०६८-०३०)
सिद्धाश् चैव महर्षयः (०६८-०३०)
यं विदित्वा विमुच्यन्ते (०६८-०३०)
स महात्मा प्रसीदतु (०६८-०३०)
नमस् ते सर्वतोभद्र (०६८-०३१)
सर्वतोऽक्षिशिरोमुख (०६८-०३१)
निर्विकार नमस् ते ऽस्तु (०६८-०३१)
साक्षिभूत हृदि स्थित (०६८-०३१)
अतीन्द्रिय नमस् तुभ्यं (०६८-०३१)
लिङ्गेभ्यस् त्वं प्रमीयसे (०६८-०३१)
ये तु त्वां नाभिजानन्ति (०६८-०३२)
संसारे संसरन्ति ते (०६८-०३२)
रागद्वेषविनिर्मुक्तं (०६८-०३२)
लोभमोहविवर्जितम् (०६८-०३२)

अशरीरं शरीरस्थं (०६८-०३२)
समं सर्वेषु देहिषु (०६८-०३२)
अव्यक्तं बुद्ध्यहंकारौ (०६८-०३३)
महाभूतेन्द्रियाणि च (०६८-०३३)
त्वयि तानि न तेषु त्वं (०६८-०३३)
तेषु त्वं तानि न त्वयि (०६८-०३३)
स्रष्टा भोक्तासि कूटस्थो (०६८-०३४)
गुणानां प्रभुर् ईश्वरः (०६८-०३४)
अकर्ता हेतुरहितः (०६८-०३४)
प्रभुः स्वात्मन्य् अवस्थितः (०६८-०३४)
नमस् ते पुण्डरीकाक्ष (०६८-०३५)
पुनर् एव नमो ऽस्तु ते (०६८-०३५)
ईश्वरो ऽसि जगन्नाथ (०६८-०३५)
किम् अतः परम् उच्यते (०६८-०३५)
भक्तानां यद् धितं देव (०६८-०३५)
तद् ध्याय त्रिदशेश्वर (०६८-०३५)
मा मे भूतेषु संयोगः (०६८-०३६)
पुनर् भवतु जन्मनि (०६८-०३६)
अहंकारेण बुद्ध्या वा (०६८-०३६)
तथा सत्त्वादिभिर् गुणैः (०६८-०३६)
मा मे धर्मो ह्य् अधर्मो वा (०६८-०३७)
पुनर् भवतु जन्मनि (०६८-०३७)
विषयैर् इन्द्रियैर् वापि (०६८-०३७)
मा मे भूयात् समागमः (०६८-०३७)
पृथिवीं यातु मे घ्राणं (०६८-०३८)
यातु मे रसना जलम् (०६८-०३८)
चक्षुर् हुताशनं यातु (०६८-०३८)
स्पर्शो मे यातु मारुतम् (०६८-०३८)
शब्दो ह्य् आकाशम् अभ्येतु (०६८-०३९)
मनो वैकारिकं तथा (०६८-०३९)
अहंकारश् च मे बुद्धिं (०६८-०३९)
त्वयि बुद्धिः समेतु च (०६८-०३९)
वियोगः सर्वकरणैर् (०६८-०४०)
गुणैर् भूतैश् च मे भवेत् (०६८-०४०)
सत्त्वं रजस् तमश् चैव (०६८-०४०)
प्रकृतिं प्रविशन्तु मे (०६८-०४०)
निष्केवलं पदं चैव (०६८-०४१)
प्रयामि परमं तव (०६८-०४१)
एकीभावस् त्वयैवास्तु (०६८-०४१)
मा मे जन्म भवेत् पुनः (०६८-०४१)
नमो भगवते तस्मै (०६८-०४२)
विष्णवे प्रभविष्णवे (०६८-०४२)
त्वन्मनस् त्वद्गतपृआणस् (०६८-०४२)
त्वद्भक्तस् त्वत्परायणः (०६८-०४२)
त्वाम् एवानुस्मरे देव (०६८-०४२)
मरणे प्रत्युपस्थिते (०६८-०४२)
पूर्वदेहकृता ये मे (०६८-०४३)
व्याधयस् ते विशन्तु माम् (०६८-०४३)
आर्दयन्तु च दुःखानि (०६८-०४३)

प्रविमुञ्चामि यद् ऋणम् (०६८-०४३)
उपतिष्ठन्तु मे रोगा (०६८-०४४)
ये मया पूर्वसंचिताः (०६८-०४४)
अनृणो गन्तुम् इच्छामि (०६८-०४४)
तद् विष्णोः परमं पदम् (०६८-०४४)
अहं भगवतस् तस्य (०६८-०४५)
मम चासौ सुरेश्वरः (०६८-०४५)
तस्याहं न प्रणश्यामि (०६८-०४५)
स च मे न प्रणश्यति (०६८-०४५)
नमो भगवते तस्मै (०६८-०४६)
येन सर्वम् इदं ततम् (०६८-०४६)
तम् एव च प्रपन्नो ऽस्मि (०६८-०४६)
मम यो यस्य चाप्य् अहम् (०६८-०४६)
इमाम् अनुस्मृतिं नित्यं (०६८-०४७)
वैष्णवीं पापनाशनीम् (०६८-०४७)
स्वपञ् जाग्रत् पठेद् यस् तु (०६८-०४७)
त्रिसंध्यं वापि यः स्मरेत् (०६८-०४७)
मरणे चाप्य् अनुप्राप्ते (०६८-०४८)
यस् त्व् इमां समनुस्मरेत् (०६८-०४८)
अपि पापसमाचारः (०६८-०४८)
सो ऽपि याति परां गतिम् (०६८-०४८)
अर्चयन्न् अपि यो देवं (०६८-०४९)
गृहे वापि बलिं ददेत् (०६८-०४९)
जुह्वद् अग्निं स्मरेद् वापि (०६८-०४९)
लभते स परां गतिम् (०६८-०४९)
पौर्णमास्याम् अमावास्यां (०६८-०५०)
द्वादश्यां च विशेषतः (०६८-०५०)
श्रावयेच् छ्रद्दधानंस् तु (०६८-०५०)
ये चान्ये माम् उपाश्रिताः (०६८-०५०)
नम इत्य् एव यो ब्रूयान् (०६८-०५१)
मद्भक्तः श्रद्धयान्वितः (०६८-०५१)
तस्य स्युर् अक्षया लोकाः (०६८-०५१)
श्वपाकस्यापि नारद (०६८-०५१)
किं पुनर् ये यजन्ते मां (०६८-०५२)
साधवो विधिपूर्वकम् (०६८-०५२)
ध्यायन्ति च यथान्यायं (०६८-०५२)
ते यान्ति परमां गतिम् (०६८-०५२)
अश्वमेधसहस्राणां (०६८-०५३)
यः सहस्रं समाचरेत् (०६८-०५३)
नासौ तत् पदम् आप्नोति (०६८-०५३)
मद्भक्तैर् यद् अवाप्यते (०६८-०५३)
इष्टं दत्तं तपो ऽधीतं (०६८-०५४)
व्रतानि नियमाश् च ये (०६८-०५४)
सर्वम् एतद् विनाशान्तं (०६८-०५४)
ज्ञानस्यान्तो न विद्यते (०६८-०५४)
तस्मात् प्रदेयं साधुभ्यो (०६८-०५५)
धर्म्यं सत्त्वाभयंकरम् (०६८-०५५)
दानादीन्य् अन्तवन्तीह (०६८-०५५)
मद्भक्तो नान्तम् अश्नुते (०६८-०५५)

यो दद्याद् भगवज्ज्ञानं (०६८-०५६)
कुर्याद् वा धर्मदेशनाम् (०६८-०५६)
कृत्स्नां वा पृथिवीं दद्यान् (०६८-०५६)
न तु तुल्यं कथंचन (०६८-०५६)
कान्तारवनदुर्गेषु (०६८-०५७)
कृच्छ्रेष्व् आपत्सु संभ्रमे (०६८-०५७)
दस्युभिः संनिरुद्धश् च (०६८-०५७)
नामभिर् मां प्रकीर्तयेत् (०६८-०५७)
वराहो रक्षतु जले (०६८-०५८)
विषमेषु च वामनः (०६८-०५८)
रामो रामश् च रामश् च (०६८-*(१११))
त्रायन्तां दस्युदोषतः (०६८-*(१११))
अटव्यां नारसिंहस् तु (०६८-०५८)
सर्वतः पातु केशवः (०६८-०५८)
बद्धः परिकरस् तेन (०६८-०५९)
मोक्षाय गमनं प्रति (०६८-०५९)
सकृद् उच्चारितं येन (०६८-०५९)
हरिर् इत्य् अक्षरद्वयम् (०६८-०५९)
जन्मान्तरसहस्राणि (०६८-*(११२))
तपोज्ञानसमाधिभिः (०६८-*(११२))
नराणां क्षीणपापानां (०६८-*(११२))
कृष्णे भक्तिः प्रजायते (०६८-*(११२))
गत्वा गत्वा निवर्तने (०६८-*(११२))
चन्द्रसूर्यादयो ग्रहाः (०६८-*(११२))
अद्यापि न निवर्तन्ते (०६८-*(११२))
द्वादशाक्षरचिन्तकाः (०६८-*(११२))
न वासुदेवात् परम् अस्ति मङ्गलं (०६८-*(११२))
न वासुदेवात् परमं पवित्रम् (०६८-*(११२))
न वासुदेवात् परम् अस्ति दैवतं (०६८-*(११२))
न वासुदेवं प्रणिपत्य सीदति (०६८-*(११२))
तस्मान् माम् एव देवर्षे (०६८-०६०)
ध्यायस्वातन्द्रितः सदा (०६८-०६०)
अवाप्स्यसि ततः सिद्धिं (०६८-०६०)
पदं द्रक्ष्यसि च ध्रुवम् (०६८-०६०)
एवं स देवदेवेन (०६८-०६१)
नारदः प्रतिबोधितः (०६८-०६१)
चकार केशवे भक्तिं (०६८-०६१)
तस्मात् त्वं कुरु भूपते (०६८-०६१)
यः पठेत् परया भक्त्या (०६८-*(११३))
स गच्छेद् विष्णुसाम्यताम् (०६८-*(११३))
एतत् पुण्यं पापहरं (०६८-*(११३))
धन्यं दुःस्वप्ननाशनम् (०६८-*(११३))
पापं प्रणश्यते येन (०६९-००१)
पुण्यं येन विवर्धते (०६९-००१)
यज् जपन् सुगतिं याति (०६९-००१)
शृण्वंश् च मम तद् वद (०६९-००१)
कश्चिद् आसीद् द्विजद्रोग्धा (०६९-००२)
पिशुनः क्षत्रियाधमः (०६९-००२)
परपीडारुचिर् दुष्टः (०६९-००२)

स्वभावाद् एव निर्घृणः (०६९-००२)
परिभूताः सदा तेन (०६९-००३)
पितृदेवद्विजातयः (०६९-००३)
परदारेषु चैवास्य (०६९-००३)
बभूवाभिरतं मनः (०६९-००३)
स त्व् आयुषि परिक्षीणे (०६९-००४)
जज्ञे घोरो निशाचरः (०६९-००४)
तेन वै कर्मदोषेण (०६९-००४)
स्वेन पापकृतां वरः (०६९-००४)
क्रूरैर् एव ततो वृत्तिं (०६९-००५)
राक्षसत्वे विशेषतः (०६९-००५)
चकार कर्मभिः पापः (०६९-००५)
सर्वप्राणिविहिंसकः (०६९-००५)
तस्य पापरतस्यैवं (०६९-००६)
जग्मुर् वर्षशतानि वै (०६९-००६)
तेन वै कर्मदोषेण (०६९-००६)
नान्या वृत्तिर् अरोचत (०६९-००६)
यद् यत् पश्यति सत्त्वं स (०६९-००७)
तत् तद् आदाय राक्षसः (०६९-००७)
चखाद पुरुषव्याघ्र (०६९-००७)
बाहुगोचरम् आगतम् (०६९-००७)
एवं तस्यातिदुष्टस्य (०६९-००८)
कुर्वतः प्राणिनां वधम् (०६९-००८)
जगाम सुमहान् कालः (०६९-००८)
परिणामं तथा वयः (०६९-००८)
स ददर्श तपस्यन्तं (०६९-००९)
तापसं संश्रितव्रतम् (०६९-००९)
ऊर्ध्वबाहुं महाभागं (०६९-००९)
कृतरक्षं समन्ततः (०६९-००९)
तं दृष्ट्वा स तु दुर्बुद्धिर् (०६९-०१०)
ब्राह्मणं राक्षसाधमः (०६९-०१०)
समभ्यधावद् वेगेन (०६९-०१०)
समादातुं चिखादिषुः (०६९-०१०)
तेन रक्षा च या दिक्षु (०६९-०११)
ब्राह्मणेनाभवत् कृता (०६९-०११)
तया निरस्तं तद् रक्षो (०६९-०११)
निपपाताविदूरतः (०६९-०११)
भगवन् कीदृशीं रक्षां (०६९-०१२)
स चकार द्विजोत्तमः (०६९-०१२)
यया निर्धूतवीर्यो ऽसौ (०६९-०१२)
निरस्तो रजनीचरः (०६९-०१२)
एकाग्रचित्तो गोविन्दे (०६९-०१३)
तज् जपंस् तत्परायणः (०६९-०१३)
तपश् चचार विप्रो ऽसौ (०६९-०१३)
प्रविष्टो विष्णुपञ्जरम् (०६९-०१३)
विष्णुपञ्जरम् इच्छामि (०६९-०१४)
श्रोतुं धर्मभृतां वर (०६९-०१४)
सदा सर्वभयेभ्यस् तु (०६९-०१४)
रक्षा या परमाभवत् (०६९-०१४)

त्रिपुरं जघ्नुषः पूर्वं (०६९-०१५)
ब्रह्मणा विष्णुपञ्जरः (०६९-०१५)
शंकरस्य कुरुश्रेष्ठ (०६९-०१५)
रक्षणाय निरूपितः (०६९-०१५)
वागीशेन तु शक्रस्य (०६९-०१६)
बलं हन्तुं प्रयास्यतः (०६९-०१६)
तस्य रूपं प्रवक्ष्यामि (०६९-०१६)
तन् निबोध महीपते (०६९-०१६)
विष्णुः प्राच्यां स्थितश् चक्री (०६९-०१७)
विष्णुर् दक्षिणतो गदी (०६९-०१७)
प्रतीच्यां शार्ङ्गधृग् विष्णुर् (०६९-०१७)
विष्णुः खड्गी ममोत्तरे (०६९-०१७)
हृषीकेशो विकोणेषु (०६९-०१८)
तच्छिद्रेषु जनार्दनः (०६९-०१८)
क्रोडरूपी हरिर् भूमौ (०६९-०१८)
नरसिंहो ऽम्बरे मम (०६९-०१८)
क्षुरान्तम् अमलं चक्रं (०६९-०१९)
भ्रमत्य् एतत् सुदर्शनम् (०६९-०१९)
अस्यांशुमाला दुःप्रेक्षा (०६९-०१९)
हन्तु प्रेतनिशाचरान् (०६९-०१९)
गदा चेयं सहस्रार्चिर् (०६९-०२०)
उद्वमत्पावकोल्वणा (०६९-०२०)
रक्षोभूतपिशाचानां (०६९-०२०)
डाकिणीनां च नाशनी (०६९-०२०)
शार्ङ्गविस्फूर्जितं चैव (०६९-०२१)
वासुदेवस्य मद्रिपून् (०६९-०२१)
तिर्यङ्मनुष्यकूष्माण्ड- (०६९-०२१)
प्रेतादीन् हन्त्व् अशेषतः (०६९-०२१)
खड्गधाराज्वलज्ज्योत्स्ना- (०६९-०२२)
निर्धूता ये समाहताः (०६९-०२२)
ते यान्तु सौम्यतं सद्यो (०६९-०२२)
गरुडेनेव पन्नगाः (०६९-०२२)
ये कूष्माण्डास् तथा यक्षा (०६९-०२३)
ये दैत्या ये निशाचराः (०६९-०२३)
प्रेता विनायकाः क्रूरा (०६९-०२३)
मनुष्या जम्भकाः खगाः (०६९-०२३)
सिंहादयो ये पशवो (०६९-०२४)
दन्दसूकाश् च पन्नगाः (०६९-०२४)
सर्वे भवन्तु ते सौम्याः (०६९-०२४)
कृष्णशङ्खरवाहताः (०६९-०२४)
चित्तवृत्तिहरा ये मे (०६९-०२५)
ये जनाः स्मृतिहारकाः (०६९-०२५)
बलौजसां च हर्तारश् (०६९-०२५)
छायाविभ्रंशकाश् च ये (०६९-०२५)
ये चोपभोगहर्तारो (०६९-०२६)
ये च लक्षणनाशकाः (०६९-०२६)
कूष्माण्डास् ते प्रणश्यन्तु (०६९-०२६)
विष्णुचक्ररयाहताः (०६९-०२६)
बुद्धिस्वास्थ्यं मनःस्वास्थ्यं (०६९-०२७)

स्वास्थ्यम् ऐन्द्रियकं तथा (०६९-०२७)
ममास्तु देवदेवस्य (०६९-०२७)
वासुदेवस्य कीर्तनात् (०६९-०२७)
पृष्ठे पुरस्तान् मम दक्षिणोत्तरे (०६९-०२८)
विकोणगश् चास्तु जनार्दनो हरिः (०६९-०२८)
तद् ईड्यम् ईशानम् अनन्तम् ईश्वरं (०६९-०२८)
जनार्दनं प्रणिपतितो न सीदति (०६९-०२८)
यथा परं ब्रह्म हरिस् तथा परं (०६९-०२९)
जगत्स्वरूपश् च स एव केशवः (०६९-०२९)
ऋतेन तेनाच्युतनामकीर्तनात् (०६९-०२९)
प्रणाशम् एतु त्रिविधं ममाशुभम् (०६९-०२९)
इत्य् असाव् आत्मरक्षार्थं (०७०-००१)
न्यस्तवान् विष्णुपञ्जरम् (०७०-००१)
तेनासाध्यः स दुष्टानां (०७०-००१)
बभूव नृप रक्षसाम् (०७०-००१)
एतयारक्षया रक्षो (०७०-००२)
निर्धूतं भुवि पातितम् (०७०-००२)
जप्यावसाने विप्रो ऽसौ (०७०-००२)
ददर्श विगतौजसम् (०७०-००२)
दृष्ट्वा च कृपयाविष्टः (०७०-००३)
समाश्वास्य निशाचरम् (०७०-००३)
पप्रच्छागमने हेतुं (०७०-००३)
तं चाचष्ट यथातथम् (०७०-००३)
कथयित्वा च तत् सर्वं (०७०-००३)
राक्षसः पुनर् अब्रवीत् (०७०-००३)
प्रसीद विप्रवर्य त्वं (०७०-००४)
निर्विण्णस्यातिपापिनः (०७०-००४)
पापप्रशमनायालम् (०७०-००४)
उपदेशं प्रयच्छ मे (०७०-००४)
बहूनि पापानि मया (०७०-००५)
कृतानि बहवो हताः (०७०-००५)
कृताः स्त्रियश् च मे बह्व्यो (०७०-००५)
विधवा हतपुत्रिकाः (०७०-००५)
अनागसां च सत्त्वानाम् (०७०-००५)
अनेकानां क्षयः कृतः (०७०-००५)
सो ऽहम् इच्छामि विप्रर्षे (०७०-००६)
प्रसादात् तव सुव्रत (०७०-००६)
पापस्यास्य क्षयं कर्तुं (०७०-००६)
कुरु मे धर्मदेशनाम् (०७०-००६)
कथं क्रूरस्वभावस्य (०७०-००७)
सतस् तव निशाचर (०७०-००७)
सहसैव समायाता (०७०-००७)
जिज्ञासा धर्मवर्त्मनि (०७०-००७)
त्वाम् अत्तुम् आगतः क्षिप्तो (०७०-००८)
रक्षया कृतया त्वया (०७०-००८)
तत्संस्पर्शाच् च मे ब्रह्मन् (०७०-००८)
साध्व् एतन् मनसि स्थितम् (०७०-००८)
का सा रक्षा न तां वेद्मि (०७०-००९)
वेद्मि नास्याः परायणम् (०७०-००९)

किंत्व् अस्याः संगम् आसाद्य (०७०-००९)
निर्वेदं प्रापितं परम् (०७०-००९)
स कृपां कुरु धर्मज्ञ (०७०-०१०)
मय्य् अनुक्रोशम् आवह (०७०-०१०)
यथा पापापनोदो मे (०७०-०१०)
भवत्य् आर्य तथा कुरु (०७०-०१०)
इत्य् एवम् उक्तः स मुनिः (०७०-०११)
सदयस् तेन रक्षसा (०७०-०११)
प्रत्युवाच महाभाग (०७०-०११)
विमृश्य सुचिरं तदा (०७०-०११)
यत् त्वम् आत्थोपदेशार्थं (०७०-०१२)
निर्विण्णः स्वेन कर्मणा (०७०-०१२)
युक्तम् एतन् न पापानां (०७०-०१२)
निवृत्तेर् उपकारकम् (०७०-०१२)
करिष्ये यातुधानानां (०७०-०१३)
न त्व् अहं धर्मदेशनाम् (०७०-०१३)
तांस् त्वं पृच्छ द्विजान् सौम्य (०७०-०१३)
ये वै प्रवचने रताः (०७०-०१३)
एवम् उक्त्वा ययौ विप्रश् (०७०-०१४)
चिन्ताम् आप च राक्षसः (०७०-०१४)
कथं पापापनोदः स्याद् (०७०-०१४)
इत्य् असौ व्याकुलेन्द्रियः (०७०-०१४)
न तदा खादते सत्त्वान् (०७०-०१५)
क्षुधा संपीडितो ऽपि सन् (०७०-०१५)
षष्ठे षष्ठे तदा काले (०७०-०१५)
जन्तुम् एकम् अभक्षयत् (०७०-०१५)
स कदाचित् क्षुधाविष्टः (०७०-०१६)
पर्यटन् विपिने वने (०७०-०१६)
ददर्शाथ फलाहारम् (०७०-०१६)
अग्रतः कौशिकं द्विजम् (०७०-०१६)
तं जग्राह च भक्षार्थं (०७०-०१७)
षष्ठे काले बुभुक्षितः (०७०-०१७)
गुरोर् अर्थे फलाहारम् (०७०-०१७)
आगतं ब्रह्मचारिणम् (०७०-०१७)
गृहीतो रक्षसा तेन (०७०-०१८)
स तदा मुनिदारकः (०७०-०१८)
निराशो जीविते प्राह (०७०-०१८)
सामपूर्वं निशाचरम् (०७०-०१८)
भो भद्रमुख यत्कार्यं (०७०-०१९)
गृहीतो ऽहम् इह त्वया (०७०-०१९)
तद् ब्रवीहि यथातत्त्वम् (०७०-०१९)
अयम् अस्म्य् अनुशाधि माम् (०७०-०१९)
षष्ठे काले ममाहारः (०७०-०२०)
क्षुधितस्य त्वम् आगतः (०७०-०२०)
निःशूकस्यातिपापस्य (०७०-०२०)
निर्घृणस्य द्विजद्रुहः (०७०-०२०)
यद्य् अवश्यं त्वयाध्याहं (०७०-०२१)
भक्षणीयो निशाचर (०७०-०२१)
आयास्यामि तद् अद्यैव (०७०-०२१)

निवेद्य गुरवे फलम् (०७०-०२१)
गुरुमूले तद् आगत्य (०७०-०२२)
यत् फलग्रहणं कृतम् (०७०-०२२)
ममात्र निष्ठां प्राप्तस्य (०७०-०२२)
तत् पापाय निवेदितम् (०७०-०२२)
स त्वं मुहूर्तमात्रं माम् (०७०-०२३)
अत्रैव प्रतिपालय (०७०-०२३)
निवेद्य गुरवे यावद् (०७०-०२३)
इहागच्छाम्य् अहं फलम् (०७०-०२३)
षष्ठे काले न मे ब्रह्मन् (०७०-०२४)
कश्चिद् ग्रहणम् आगतः (०७०-०२४)
प्रमुच्यते निबोधैतद् (०७०-०२४)
इति मे पापजीविकाम् (०७०-०२४)
एक एवात्र मोक्षस्य (०७०-०२५)
तव हेतुः शृणुष्व तम् (०७०-०२५)
मुञ्चाम्य् अहम् असंदिग्धं (०७०-०२५)
यदि तत् कुरुते भवान् (०७०-०२५)
गुरोर् यन् न विरोधाय (०७०-०२६)
यन् न धर्मोपरोधकम् (०७०-०२६)
तत् करिष्याम्य् अहं रक्षो (०७०-०२६)
यन् न व्रतहरं मम (०७०-०२६)
मया निसर्गतो ब्रह्मञ् (०७०-०२७)
जातिदोषाद् विशेषतः (०७०-०२७)
निर्विवेकेन पापेन (०७०-०२७)
पापं कर्म सदा कृतम् (०७०-०२७)
आ बाल्यान् मम पापेषु (०७०-०२८)
न पुण्येषु रतं मनः (०७०-०२८)
तत्पापसंचयान् मोक्षं (०७०-०२८)
प्राप्नुयां येन तद् वद (०७०-०२८)
यानि पापानि कर्माणि (०७०-०२९)
बालत्वाच् चरितानि मे (०७०-०२९)
दुष्टां योनिम् इमां प्राप्य (०७०-०२९)
तन्मुक्तिं कथय द्विज (०७०-०२९)
यद्य् एतद् द्विजपुत्र त्वं (०७०-०३०)
ममाख्यास्यस्य् अशेषतः (०७०-०३०)
तत् क्षुधार्तात् समार्तस् त्वं (०७०-०३०)
नियतं मोक्षम् आप्स्यसि (०७०-०३०)
न चैतत् पापशीलो ऽहम् (०७०-०३१)
अद्य त्वां क्षुत्पिपासितः (०७०-०३१)
षष्ठे काले नृशंसात्मा (०७०-०३१)
भक्षयिष्यामि निर्घृणः (०७०-०३१)
एवम् उक्तो मुनिसुतस् (०७०-०३२)
तेन घोरेण रक्षसा (०७०-०३२)
चिन्ताम् अवाप महतीम् (०७०-०३२)
अशक्तस् तद् उदीरितुम् (०७०-०३२)
विमृश्य सुचिरं विप्रः (०७०-०३३)
शरणं जातवेदसम् (०७०-०३३)
जगाम ज्ञानदानाय (०७०-०३३)
संशयं परमं गतः (०७०-०३३)

यदि शुश्रूषितो वह्निर् (०७०-०३४)
गुरोः शुश्रूषणाद् अनु (०७०-०३४)
व्रतानि वा सुचीर्णानि (०७०-०३४)
सप्तार्चिः पातु मां ततः (०७०-०३४)
न मातरं न पितरं (०७०-०३५)
गौरवेण यथा गुरुम् (०७०-०३५)
यथाहम् अवगच्छामि (०७०-०३५)
तथा मां पातु पावकः (०७०-०३५)
यथा गुरुं न मनसा (०७०-०३६)
कर्मणा वचसापि वा (०७०-०३६)
अवजानाम्य् अहं तेन (०७०-०३६)
पातु सत्येन पावकः (०७०-०३६)
इत्य् एवं शपथान् सत्यान् (०७०-०३७)
कुर्वतस् तस्य तत् पुनः (०७०-०३७)
सप्तार्चिषा समादिष्टा (०७०-०३७)
प्रादुरासीत् सरस्वती (०७०-०३७)
सा चोवाच द्विजसुतं (०७०-०३७)
राक्षसग्रहणाकुलम् (०७०-०३७)
मा भैर् द्विजसुताहं त्वां (०७०-०३८)
मोक्षयाम्य् अतिसंकटात् (०७०-०३८)
यद् अस्य रक्षसः श्रेयो (०७०-०३९)
जिह्वाग्रे ऽहं स्थिता तव (०७०-०३९)
तत् सर्वं कथयिष्यामि (०७०-०३९)
ततो मोक्षम् अवाप्स्यसि (०७०-०३९)
अदृश्या रक्षसा तेन (०७०-०४०)
प्रोक्त्वेत्थं तं सरस्वती (०७०-०४०)
अदर्शनम् इता सो ऽपि (०७०-०४०)
द्विजः प्राह निशाचरम् (०७०-०४०)
श्रूयतां तव यच् छ्रेयस् (०७०-०४१)
तथान्येषां च पापिनाम् (०७०-०४१)
समस्तपापशुद्ध्यर्थं (०७०-०४१)
पुण्योपचयदं च यत् (०७०-०४१)
प्रातर् उत्थाय सततं (०७०-०४२)
मध्याह्ने ऽह्नः क्षये ऽपि वा (०७०-०४२)
अयं शस्तः सदा जापः (०७०-०४२)
सर्वपापोपशान्तिदः (०७०-०४२)
हरिं कृष्णं हृषीकेशं (०७०-०४३)
वासुदेवं जनार्दनम् (०७०-०४३)
प्रणतो ऽस्मि जगन्नाथं (०७०-०४३)
स मे पापं व्यपोहतु (०७०-०४३)
विश्वेश्वरम् अजं विष्णुम् (०७०-०४४)
अप्रमेयपराक्रमम् (०७०-०४४)
प्रणतो ऽस्मि प्रजापालं (०७०-०४४)
स मे पापं व्यपोहतु (०७०-०४४)
विष्णुम् अच्युतम् ईशानम् (०७०-०४५)
अनन्तम् अपराजितम् (०७०-०४५)
प्रणतो ऽस्मि महात्मानं (०७०-०४५)
स मे पापं व्यपोहतु (०७०-०४५)
चराचरगुरुं नाथं (०७०-०४६)

गोविन्दं शेषशायिनम् (०७०-०४६)
प्रणतो ऽस्मि परं देवं (०७०-०४६)
स मे पापं व्यपोहतु (०७०-०४६)
गोवर्धनधरं धीरं (०७०-०४७)
गोब्राह्मणहिते स्थितम् (०७०-०४७)
प्रणतो ऽस्मि गदापाणिं (०७०-०४७)
स मे पापं व्यपोहतु (०७०-०४७)
शङ्खिनं चक्रिणं शान्तं (०७०-०४८)
शार्ङ्गिणं स्रग्धरं परम् (०७०-०४८)
प्रणतो ऽस्मि पतिं लक्ष्म्याः (०७०-०४८)
स मे पापं व्यपोहतु (०७०-०४८)
दामोदरम् उदाराक्षं (०७०-०४९)
पुण्डरीकाक्षम् अव्ययम् (०७०-०४९)
प्रणतो ऽस्मि स्तुतं स्तुत्यैः (०७०-०४९)
स मे पापं व्यपोहतु (०७०-०४९)
नारायणं नरं शौरिं (०७०-०५०)
माधवं मधुसूदनम् (०७०-०५०)
प्रणतो ऽस्मि धराधारं (०७०-०५०)
स मे पापं व्यपोहतु (०७०-०५०)
केशवं केशिहन्तारं (०७०-०५१)
कंसारिष्टनिसूदनम् (०७०-०५१)
प्रणतो ऽस्मि चतुर्बाहुं (०७०-०५१)
स मे पापं व्यपोहतु (०७०-०५१)
श्रीवत्सवक्षसं श्रीशं (०७०-०५२)
श्रीधरं श्रीनिकेतनम् (०७०-०५२)
प्रणतो ऽस्मि श्रियः कान्तं (०७०-०५२)
स मे पापं व्यपोहतु (०७०-०५२)
यम् ईशं सर्वभूतानां (०७०-०५३)
ध्यायन्ति यतयो ऽक्षरम् (०७०-०५३)
वासुदेवम् अनिर्देश्यं (०७०-०५३)
तम् अस्मि शरणं गतः (०७०-०५३)
समस्तालम्बनेभ्यो ऽयं (०७०-०५४)
संहृत्य मनसो गतिम् (०७०-०५४)
ध्यायन्ति वासुदेवाख्यं (०७०-०५४)
तम् अस्मि शरणं गतः (०७०-०५४)
सर्वगं सर्वभूतं च (०७०-०५५)
सर्वस्याधातम् ईश्वरम् (०७०-०५५)
वासुदेवं परं ब्रह्म (०७०-०५५)
तम् अस्मि शरणं गतः (०७०-०५५)
परमात्मानम् अव्यक्तं (०७०-०५६)
यं प्रयान्ति सुमेधसः (०७०-०५६)
कर्मक्षये ऽक्षयं देवं (०७०-०५६)
तम् अस्मि शरणं गतः (०७०-०५६)
पुण्यपापविनिर्मुक्ता (०७०-०५७)
यं प्रविश्य पुनर्भवम् (०७०-०५७)
न योगिनः प्राप्नुवन्ति (०७०-०५७)
तम् अस्मि शरणं गतः (०७०-०५७)
ब्रह्मा भूत्वा जगत् सर्वं (०७०-०५८)
सदेवासुरमानुषम् (०७०-०५८)

यः सृजत्य् अच्युतो देवस् (०७०-०५८)
तम् अस्मि शरणं गतः (०७०-०५८)
ब्रह्मत्वे यस्य वक्त्रेभ्यश् (०७०-०५९)
चतुर्वेदमयं वपुः (०७०-०५९)
सूतं प्रभो पुरा जज्ञे (०७०-०५९)
तम् अस्मि शरणं गतः (०७०-०५९)
ब्रह्मरूपधरं देवं (०७०-०६०)
जगद्योनिं जनार्दनम् (०७०-०६०)
स्रष्टृत्वे संस्थितं सृष्टौ (०७०-०६०)
प्रणतो ऽस्मि सनातनम् (०७०-०६०)
यः पाति सृष्टं च विभुः (०७०-०६१)
स्थिताव् असुरसूदनः (०७०-०६१)
तम् आदिपुरुषं विष्णुं (०७०-०६१)
प्रणतो ऽस्मि सनातनम् (०७०-०६१)
धृता मही हता दैत्याः (०७०-०६२)
परित्रातास् तथामराः (०७०-०६२)
येन तं विष्णुम् आद्येशं (०७०-०६२)
प्रणतो ऽस्मि सनातनम् (०७०-०६२)
यज्ञैर् यजन्ति यं विप्रा (०७०-०६३)
यज्ञेशं यज्ञभावनम् (०७०-०६३)
तं यज्ञपुरुषं विष्णुं (०७०-०६३)
प्रणतो ऽस्मि सनातनम् (०७०-०६३)
वर्णाश्रमान् स्थिताव् आद्यो (०७०-०६४)
यः स्थापयति वर्त्मनि (०७०-०६४)
तम् आदिपुरुषं विष्णुं (०७०-०६४)
प्रणतो ऽस्मि सनातनम् (०७०-०६४)
कल्पान्ते रुद्ररूपो यः (०७०-०६५)
संहरत्य् अखिलं जगत् (०७०-०६५)
तम् आदिपुरुषं विष्णुं (०७०-०६५)
प्रणतो ऽस्मि जनार्दनम् (०७०-०६५)
पातालवीथीभूरादींस् (०७०-०६६)
तथा लोकान् बिभर्ति यः (०७०-०६६)
तम् अन्तपुरुषं विष्णुं (०७०-०६६)
प्रणतो ऽस्मि जनार्दनम् (०७०-०६६)
संभक्षयित्वा सकलं (०७०-०६७)
यथा सृष्टम् इदं जगत् (०७०-०६७)
यो नृत्यत्य् अतिरौद्रात्मा (०७०-०६७)
प्रणतो ऽस्मि जनार्दनम् (०७०-०६७)
सुरासुराः पितृगणा (०७०-०६८)
यक्षगन्धर्वराक्षसाः (०७०-०६८)
यस्यांशभूता देवस्य (०७०-०६८)
सर्वगं तं नमाम्य् अहम् (०७०-०६८)
समस्तदेवाः सकला (०७०-०६९)
मानुषाणां च जातयः (०७०-०६९)
यस्यांशभूता देवस्य (०७०-०६९)
सर्वगं तं नमाम्य् अहम् (०७०-०६९)
वृक्षगुल्मादयो यस्य (०७०-०७०)
तथा पशुमृगादयः (०७०-०७०)
एकांशभूता देवस्य (०७०-०७०)

सर्वगं तं नमाम्य् अहम् (०७०-०७०)
यस्मान् नान्यत् परं किंचिद् (०७०-०७१)
यस्मिन् सर्वं महात्मनि (०७०-०७१)
यः सर्वम् अव्ययो ऽनन्तः (०७०-०७१)
सर्वगं तं नमाम्य् अहम् (०७०-०७१)
यथा सर्वेषु भूतेषु (०७०-०७२)
स्थावरेषु चरेषु च (०७०-०७२)
विष्णुर् एव तथा पापं (०७०-०७२)
ममाशेषं प्रणश्यतु (०७०-०७२)
यथा विष्णुमयं सर्वं (०७०-०७३)
यत् सर्वेन्द्रियगोचरम् (०७०-०७३)
यच् च ज्ञानपरिच्छेद्यं (०७०-०७३)
पापं नश्यतु मे तथा (०७०-०७३)
प्रवृत्तं च निवृत्तं च (०७०-०७४)
कर्म विष्णुमयं यथा (०७०-०७४)
अनेकजन्मकर्मोत्थं (०७०-०७४)
पापं नश्यतु मे तथा (०७०-०७४)
यन् निशायां तथा प्रातर् (०७०-०७५)
यच् च मध्यापराह्णयोः (०७०-०७५)
संध्ययोश् च कृतं पापं (०७०-०७५)
कर्मणा मनसा गिरा (०७०-०७५)
तिष्ठता व्रजता यच् च (०७०-०७६)
शय्यासनगतेन च (०७०-०७६)
कृतं यद् अशुभं कर्म (०७०-०७६)
कायेन मनसा गिरा (०७०-०७६)
अज्ञानतो ज्ञानतो वा (०७०-०७७)
वासुदेवस्य कीर्तनात् (०७०-०७७)
तत् सर्वं विलयं यातु (०७०-०७७)
तोयस्थं लवणं यथा (०७०-०७७)
परदारपरद्रव्य- (०७०-०७८)
वाञ्छाद्रोहोद्भवं च यत् (०७०-०७८)
परिपीडोद्भवं निन्दां (०७०-०७८)
कुर्वतो यन् महात्मनाम् (०७०-०७८)
यच् च भोज्ये तथा पेये (०७०-०७९)
यच् च कण्डूयनादिषु (०७०-०७९)
तद् यातु विलयं तोये (०७०-०७९)
यथा लवणभाजनम् (०७०-०७९)
यद् बाल्ये यच् च कौमारे (०७०-०८०)
यत् पापं यौवने मम (०७०-०८०)
वयःपरिणतौ यच् च (०७०-०८०)
यच् च जन्मान्तरेषु मे (०७०-०८०)
तन् नारायणगोविन्द- (०७०-०८१)
हरिकृष्णेशकीर्तनात् (०७०-०८१)
प्रयातु विलयं तोये (०७०-०८१)
यथा लवणभाजनम् (०७०-०८१)
विष्णवे वासुदेवाय (०७०-०८२)
हरये केशवाय च (०७०-०८२)
जनार्दनाय कृष्णाय (०७०-०८२)
नमो भूयो नमो नमः (०७०-०८२)

इदं सारस्वतं स्तोत्रम् (०७०-०८३)
अशेषाघविनाशनम् (०७०-०८३)
पठतां शृण्वतां चैव (०७०-०८३)
सर्वपापविनाशनम् (०७०-०८३)
इदं यः प्रातर् उत्थाय (०७०-०८४)
प्रणिपत्य जनार्दनम् (०७०-०८४)
जपत्य् एकमनाः पापं (०७०-०८४)
समस्तं स व्यपोहति (०७०-०८४)
यस् तु संवत्सरं पूर्णं (०७०-०८५)
सायं प्रातः समाहितः (०७०-०८५)
जपत्य् एतन् नरः पुण्यं (०७०-०८५)
कृत्वा मनसि केशवम् (०७०-०८५)
शारीरं मानसं वाग्जं (०७०-०८६)
ज्ञानतो ऽज्ञानतो ऽपि वा (०७०-०८६)
कृतं तेन तु यत् पापं (०७०-०८६)
सप्त जन्मान्तराणि वै (०७०-०८६)
महापातकम् अल्पं वा (०७०-०८७)
तथा यच् चोपपातकम् (०७०-०८७)
सकलं नाशयत्य् एतत् (०७०-०८७)
तथान्यत् पुण्यम् ऋच्छति (०७०-०८७)
विप्राय सुविशिष्टाय (०७०-०८८)
तिलपात्राणि षोडश (०७०-०८८)
अहन्य् अहनि यो दद्यात् (०७०-०८८)
पठत्य् एतच् च तत् समम् (०७०-०८८)
अविप्लुतमतिश् चान्ते (०७०-०८९)
संप्राप्य स्मरणं हरेः (०७०-०८९)
विष्णुलोकम् अवाप्नोति (०७०-०८९)
सत्यम् एतन् मयोदितम् (०७०-०८९)
यथैनं पठति नित्यं (०७०-*(११४))
स्तवं सारस्वतं पुमान् (०७०-*(११४))
अपि पापसमायुक्तो (०७०-*(११४))
मोक्षं प्राप्नोत्य् असाव् अपि (०७०-*(११४))
यथैतत् सत्यम् उक्तं मे (०७०-०९०)
नात्राल्पम् अपि वै मृषा (०७०-०९०)
राक्षसग्रस्तसर्वाङ्गं (०७०-०९०)
तथा माम् एष मुञ्चतु (०७०-०९०)
एवम् उच्चारिते मुक्तः (०७०-०९१)
स तदा तेन रक्षसा (०७०-०९१)
अकामेन द्विजो भूयस् (०७०-०९१)
तम् आह रजनीचरम् (०७०-०९१)
एतद् भद्रमुखाख्यातं (०७०-०९२)
तव पातकनाशनम् (०७०-०९२)
विष्णोः सारस्वतं स्तोत्रं (०७०-०९२)
यज् जगाद सरस्वती (०७०-०९२)
हुताशनेन प्रहिता (०७०-०९३)
मम जिह्वाग्रसंस्थिता (०७०-०९३)
जगादेमं स्तवं विष्णोः (०७०-०९३)
सर्वपापप्रशान्तिदम् (०७०-०९३)
अनेनैव जगन्नाथं (०७०-०९४)

त्वम् आराधय केशवम् (०७०-०९४)
ततः पापापनोदं तु (०७०-०९४)
स्तुते प्राप्स्यसि केशवे (०७०-०९४)
अहर्निशं हृषीकेशं (०७०-०९५)
स्तवेनानेन राक्षस (०७०-०९५)
स्तौहि भक्तिं परां कृत्वा (०७०-०९५)
ततः पापाद् विमोक्ष्यसे (०७०-०९५)
स्तुतो हि सर्वपापानि (०७०-०९६)
नाशयिष्यत्य् असंशयम् (०७०-०९६)
भक्त्या राक्षसशार्दूल (०७०-०९६)
सर्वपापहरो हरिः (०७०-०९६)
ततः प्रणम्य तं विप्रं (०७०-०९७)
प्रसाद्य च निशाचरः (०७०-०९७)
शालग्रामं महाराज (०७०-०९७)
तदैव तपसे ययौ (०७०-०९७)
तत्राहर्निशम् एवैतज् (०७०-०९८)
जपञ् जप्यं नराधिप (०७०-०९८)
देवक्रियारतिर् भूत्वा (०७०-०९८)
तपस् तेपे स राक्षसः (०७०-०९८)
आराध्य च जगन्नाथं (०७०-०९९)
स तत्र पुरुषोत्तमम् (०७०-०९९)
सर्वपापविनिर्मुक्तो (०७०-०९९)
विष्णुलोकम् अवाप्तवान् (०७०-०९९)
तथा त्वम् अपि राजर्षे (०७०-१००)
सर्वपापप्रशान्तिदम् (०७०-१००)
आराधय हृषीकेशं (०७०-१००)
जपन् सारस्वतं स्तवम् (०७०-१००)
य एतत् परमं स्तोत्रं (०७०-१०१)
वासुदेवस्य मानवः (०७०-१०१)
पठिष्यति स सर्वेभ्यः (०७०-१०१)
पापेभ्यो मोक्षम् आप्स्यति (०७०-१०१)
ब्रह्मन्न् असारे संसारे (०७१-००१)
रोगादिव्याप्तमानसः (०७१-००१)
शब्दादिलुब्धः पुरुषः (०७१-००१)
किं कुर्वन् नावसीदति (०७१-००१)
स्वे महिम्नि स्थितं देवम् (०७१-००२)
अप्रमेयम् अजं विभुम् (०७१-००२)
शोकमोहविनिर्मुक्तं (०७१-००२)
विष्णुं ध्यायन् न सीदति (०७१-००२)
अप्राणचितिकं ब्रह्म (०७१-००३)
वेदान्तेषु प्रकाशितम् (०७१-००३)
आद्यं पुरुषम् ईशानं (०७१-००३)
विष्णुं ध्यायन् न सीदति (०७१-००३)
अशनाद्यैर् असंस्पृष्टं (०७१-००४)
सेवितं योगिभिः सदा (०७१-००४)
सर्वदोषविनिर्मुक्तं (०७१-००४)
विष्णुं ध्यायन् न सीदति (०७१-००४)
धामत्रयविनिर्मुक्तं (०७१-००५)
सुप्रभातं सुनिर्मलम् (०७१-००५)

निष्कलं शाश्वतं देवं (०७१-००५)
विष्णुं ध्यायन् न सीदति (०७१-००५)
क्षराक्षरविनिर्मुक्तं (०७१-००६)
जन्ममृत्युविवर्जितम् (०७१-००६)
अभयं सत्यसंकल्पं (०७१-००६)
विष्णुं ध्यायन् न सीदति (०७१-००६)
अमृतं साधनं साध्यं (०७१-००७)
यं पश्यन्ति मनीषिणः (०७१-००७)
ज्ञेयाख्यं परमात्मानं (०७१-००७)
विष्णुं ध्यायन् न सीदति (०७१-००७)
अतुलं सुखधर्माणं (०७१-००८,*(११५))
व्योमदेहं सनातनम् (०७१-००८,*(११५))
धर्माधर्मविनिर्मुक्तं (०७१-००८,*(११५))
विष्णुं ध्यायन् न सीदति (०७१-००८,*(११५))
व्यासाद्यैर् मुनिभिः सर्वैर् (०७१-००९)
ध्यानयोगपरायणैः (०७१-००९)
अर्चितं भावकुसुमैर् (०७१-००९)
विष्णुं ध्यायन् न सीदति (०७१-००९)
विष्ण्वष्टकम् इदं पुण्यं (०७१-०१०)
योगिनां प्रीतिवर्धनम् (०७१-०१०)
यः पठेत् परया प्रीत्या (०७१-०१०)
स गच्छेद् विष्णुसात्म्यताम् (०७१-०१०)
एतत् पुण्यं पापहरं (०७१-०११)
धन्यं दुःस्वप्ननाशनम् (०७१-०११)
पठतां शृण्वतां चैव (०७१-०११)
विष्णोर् माहात्म्यम् उत्तमम् (०७१-०११)
कुर्वन् भक्तिं हृषीकेशे (०७२-००१)
मानवो भृगुनन्दन (०७२-००१)
निर्वाणं समवाप्नोति (०७२-००१)
यादृशं तद् वदस्व मे (०७२-००१)
दृश्यन्ते पुरुषा भक्तिम् (०७२-००२)
उद्वहन्तो जनार्दने (०७२-००२)
तथाप्य् अनेकदेहार्ति- (०७२-००२)
मनस्तापातुरा मुने (०७२-००२)
स्मृतमात्रः सुरेन्द्रस्य (०७२-००३)
यो ऽर्तिहा मधुसूदनः (०७२-००३)
तस्यापि कर्माभिरता (०७२-००३)
दुःखभाजः कथं नराः (०७२-००३)
कैश् च दानैर् जगत्स्वामी (०७२-००४)
स्वामी नारायणो नृणाम् (०७२-००४)
उपकाराय भक्तानां (०७२-००४)
जायते स महामुने (०७२-००४)
त्वद्युक्तो ऽयम् अनुप्रश्नो (०७२-००५)
महाराज शृणुष्व तम् (०७२-००५)
यथा पृष्टम् इदं सम्यक् (०७२-००५)
कथ्यमानं यथाखिलम् (०७२-००५)
पृथिवीं रत्नसंपूर्णां (०७२-००६)
यः कृष्णाय प्रयच्छति (०७२-००६)
तस्याप्य् अन्यमनस्कस्य (०७२-००६)

सुलभो न जनार्दनः (०७२-००६)
नाराध्यते ऽच्युतो दानैर् (०७२-००७)
न होमैर् भाववर्जितैः (०७२-००७)
ऐकात्म्यं पुरुषैर् याति (०७२-००७)
तन्मयैर् एव माधवः (०७२-००७)
श्रूयते च पुराख्यातो (०७२-००८)
राजोपरिचरो वसुः (०७२-००८)
इयाज सुबहून् यज्ञाञ् (०७२-००८)
श्रद्धापूतेन चेतसा (०७२-००८)
स विप्रशापाद् राजर्षिः (०७२-००९)
कस्मिंश्चित् कारणान्तरे (०७२-००९)
आकाशचारी सहसा (०७२-००९)
प्रविवेश रसातलम् (०७२-००९)
रसातलम् अनुप्राप्तस् (०७२-०१०)
तथापि जगतः प्रभुम् (०७२-०१०)
तुष्टाव तन्मयो भूत्वा (०७२-०१०)
दिव्यैर् मन्त्रैर् जनार्दनम् (०७२-०१०)
देवानाम् एष यज्ञांशैर् (०७२-०११)
यज्वी पक्षविवर्धनः (०७२-०११)
चेदिराड् इति दैत्यानां (०७२-०११)
मतिर् आसीद् रसातले (०७२-०११)
अनेन विविधैर् यज्ञैस् (०७२-०१२)
तर्पितस् त्रिदशेश्वरः (०७२-०१२)
जघान दैत्यान् वध्यो ऽयं (०७२-०१२)
प्राप्तो ऽस्मद्गोचरं रिपुः (०७२-०१२)
इति संमन्त्र्य ते दैत्याश् (०७२-०१३)
चेदिराजजिघांसवः (०७२-०१३)
तत्समीपम् अनुप्राप्ता (०७२-०१३)
गृहीतविविधायुधाः (०७२-०१३)
परमामर्षसंयुक्तास् (०७२-०१४)
ततस् ते चेदिपुङ्गवम् (०७२-०१४)
हन्तुं न शेकुः शस्त्रैस् तु (०७२-०१४)
यत्नवन्तो ऽपि पार्थिवम् (०७२-०१४)
स चापि वसुर् आसीनः (०७२-०१५)
केशवार्पितमानसः (०७२-०१५)
जजाप मन्त्रम् ओंकारं (०७२-०१५)
प्रणवं द्वादशाक्षरम् (०७२-०१५)
ददर्श च स विश्वेशं (०७२-०१६)
ध्यानावस्थितमानसः (०७२-०१६)
कृत्वान्यविषयत्यागि (०७२-०१६)
चित्तम् अत्यन्तनिश्चलम् (०७२-०१६)
प्राग् ईशम् अक्षरं ध्यानं (०७२-०१७)
ज्ञानं ज्ञेयं जगद्गुरुम् (०७२-०१७)
संचिन्त्य वासुदेवाख्यम् (०७२-०१७)
अनिर्देश्यं परायणम् (०७२-०१७)
ततो ऽन्तर्यामिरुपेण (०७२-०१८)
प्राकृतेन च संस्थितम् (०७२-०१८)
ब्रह्मविष्णुशिवानां च (०७२-०१८)
स्वरूपैः संस्थितं त्रिधा (०७२-०१८)

पुनश् च देवगन्धर्व- (०७२-०१९)
सिद्धादिमनुजादिषु (०७२-०१९)
स्थावरान्तेषु भूतेषु (०७२-०१९)
सर्वेष्व् एव समास्थितम् (०७२-०१९)
दिक्ष्व् अम्बरधराभूभृत्- (०७२-०२०)
तोयवाय्वनलादिषु (०७२-०२०)
दृश्यादृश्येषु चैवेशं (०७२-०२०)
चिन्तयाम् आस पार्थिवः (०७२-०२०)
सर्वत्र दृष्ट्वा तं देवम् (०७२-०२१)
आत्मन्य् अपि च सर्वगम् (०७२-०२१)
सर्वं च तन्मयं दृष्ट्वा (०७२-०२१)
विरराम समाधितः (०७२-०२१)
इन्द्रियाणीन्द्रियार्थेषु (०७२-०२२)
पूर्ववत् स नराधिपः (०७२-०२२)
विनिवेश्य ततो ऽपश्यद् (०७२-०२२)
असुरान् उद्यतायुधान् (०७२-०२२)
तान् स दृष्ट्वा गृहीतार्घ्य (०७२-०२३)
एकैकस्यैव पार्थिवः (०७२-०२३)
पाद्यपूर्वेण विधिना (०७२-०२३)
पूजयाम् आस भक्तिमान् (०७२-०२३)
प्रसादं कुरु भद्रं वो (०७२-०२४)
भगवाञ् जगतः पतिः (०७२-०२४)
वासुदेवो भवान् प्राप्तो (०७२-०२४)
ममानुग्रहकाम्यया (०७२-०२४)
इत्य् एवं चेदिराजो ऽसाव् (०७२-०२५)
एकैकस्य च दानवान् (०७२-०२५)
पूजयाम् आस पाद्यादि (०७२-०२५)
निवेद्य वचसा तथा (०७२-०२५)
ते ऽपि तं चेदिराजानं (०७२-०२६)
पप्रच्छुर् असुरास् तदा (०७२-०२६)
क्व वासुदेवो ऽत्र वयं (०७२-०२६)
प्राप्ता दाक्षायणीसुताः (०७२-०२६)
इत्य् एवं वदतो दैत्यान् (०७२-०२७)
स जगाद पुनर् वसुः (०७२-०२७)
प्रणामनम्रो राजेन्द्र (०७२-०२७)
सर्वदर्शी महामतिः (०७२-०२७)
वासुदेवो जगत् सर्वं (०७२-०२८)
यच् चेङ्गं यच् च नेङ्गति (०७२-०२८)
ब्रह्मादिषु तृणान्तेषु (०७२-०२८)
स एवैको जगद्गुरुः (०७२-०२८)
अहं भवन्तो देवाद्या (०७२-०२९)
मनुष्याः पशवश् च ये (०७२-०२९)
ते ऽपि देवा जगद्धातुर् (०७२-०२९)
व्यतिरिक्ता न केशवात् (०७२-०२९)
तेनैव माया वितता (०७२-०३०)
वैष्णवी भिन्नदर्शनी (०७२-०३०)
तया स्वाङ्गेषु देवो ऽसौ (०७२-०३०)
प्रदर्शयति सर्वशः (०७२-०३०)
तद् यूयम् अहम् अन्ये च (०७२-०३१)

यच् च स्थावरजङ्गमम् (०७२-०३१)
वासुदेवात्मकं सर्वम् (०७२-०३१)
इति मत्वा नमो ऽस्तु वः (०७२-०३१)
इत्य् उक्तास् तेन ते दैत्या (०७२-०३२)
न शक्ता मनुजेश्वरम् (०७२-०३२)
यत्नवन्तो ऽपि तं हन्तुं (०७२-०३२)
प्रययुः स्वान् अथालयान् (०७२-०३२)
ततः पुरोहितं सर्वे (०७२-०३३)
काव्यं नीतिविशारदम् (०७२-०३३)
समेत्य ते यथावृत्तं (०७२-०३३)
सर्वम् अस्मै न्यवेदयन् (०७२-०३३)
अस्माकम् अत्यन्तरिपुर् (०७२-०३४)
अयं प्राप्तो रसातलम् (०७२-०३४)
देवानाम् उपकृद् ब्रह्मन् (०७२-०३४)
यज्वा चेदिपतिर् वसुः (०७२-०३४)
अस्मत्पक्षक्षयायैष (०७२-०३५)
देवानां पक्षवर्धनः (०७२-०३५)
तत्र यत् प्रतिपत्तव्यं (०७२-०३५)
तन् नो ब्रूहि महामते (०७२-०३५)
स्वगोचरम् अरिः प्राप्तः (०७२-०३६)
शत्रुपक्षोपकारकः (०७२-०३६)
न हन्तव्य इतीदं को (०७२-०३६)
नीतिमान् प्रवदिष्यति (०७२-०३६)
तस्मात् प्रगृह्य दिव्यानि (०७२-०३७)
सर्वास्त्राण्य् अमरार्दनाः (०७२-०३७)
निपातयत तं गत्वा (०७२-०३७)
चेदिराजं स्वगोचरे (०७२-०३७)
सर्वम् एतन् महाभाग (०७२-०३८)
तस्मिन्न् अस्माभिर् उद्यतैः (०७२-०३८)
कृतं न शकितो हन्तुं (०७२-०३८)
निर्यत्नो ऽपि हि पार्थिवः (०७२-०३८)
किं तद् योगफलं तस्य (०७२-०३९)
किं वा जपफलं मुने (०७२-०३९)
तपसो वा मुनिश्रेष्ठ (०७२-०३९)
विस्तरात् तद् वदस्व नः (०७२-०३९)
नित्यं संचिन्तयत्य् एष (०७२-०४०)
योगयुक्तो जनार्दनम् (०७२-०४०)
सास्य रक्षा परा मन्ये (०७२-०४०)
को हिनस्त्य् अच्युताश्रयम् (०७२-०४०)
कीर्तितः संस्मृतो ध्यातः (०७२-०४१)
पूजितः संस्तुतस् तथा (०७२-०४१)
ऐहिकामुष्मिकीं रक्षां (०७२-०४१)
करोति भगवान् हरिः (०७२-०४१)
यद् दुर्लभं यद् अप्राप्यं (०७२-०४२)
मनसो यन् न गोचरे (०७२-०४२)
तद् अप्य् अप्रार्थितं ध्यातो (०७२-०४२)
ददाति मधुसूदनः (०७२-०४२)
शरीरारोग्यम् अर्थांश् च (०७२-०४३)
भोगांश् चैवानुषङ्गिकान् (०७२-०४३)

ददाति ध्यायतां नित्यम् (०७२-०४३)
अपवर्गप्रदो हरिः (०७२-०४३)
यद् इदं चेदिराजानं (०७२-०४४)
हन्तुम् इच्छथ दानवाः (०७२-०४४)
तद् अस्य केशवाच् चित्तम् (०७२-०४४)
उपायेनापनीयताम् (०७२-०४४)
ततस् ते तद्वचः श्रुत्वा (०७२-०४५)
दानवाः कुरुपुङ्गव (०७२-०४५)
ब्रह्मरूपप्रतिच्छन्ना (०७२-०४५)
जग्मुर् यत्र स्थितो वसुः (०७२-०४५)
ददृशुस् ते महात्मानं (०७२-०४६)
प्रणतं चेदिपुङ्गवम् (०७२-०४६)
कृतपूजं जगद्धातुर् (०७२-०४६)
वासुदेवस्य पार्थिवम् (०७२-०४६)
संस्तुताव् उद्यतं शान्तं (०७२-०४७)
सर्वत्र समदर्शिनम् (०७२-०४७)
कृष्णार्पितमनोवृत्तिं (०७२-०४७)
जानुभ्याम् अवनिंगतम् (०७२-०४७)
ततः संशृण्वतां तेषां (०७२-०४८)
तुष्टाव मधुसूदनम् (०७२-०४८)
तन्नामस्मरणोद्भूत- (०७२-०४८)
पुलकश् चेदिपुङ्गवः (०७२-०४८)
जगाद यं स राजर्षिः (०७२-०४९)
स्तवं कृष्णस्य शौनक (०७२-०४९)
शृण्वतां दानवेन्द्राणां (०७२-०४९)
तन् मे पापहरं वद (०७२-०४९)
शृणु यद् देवदेवस्य (०७२-०५०)
विष्णोर् अद्भुतकर्मणः (०७२-०५०)
स्तोत्रं जगाद राजासौ (०७२-०५०)
रसातलतलं गतः (०७२-०५०)
स्तौमि देवम् अजं नित्यं (०७२-०५१)
परिणामविवर्जितम् (०७२-०५१)
अवृद्धिक्षयम् ईशानम् (०७२-०५१)
अच्युतं परतः परम् (०७२-०५१)
कल्पनाकृतनामानम् (०७२-०५२)
अनिर्देश्यम् अजं विभुम् (०७२-०५२)
मूलहेतुम् अहेतुं त्वां (०७२-०५२)
वासुदेवं नमाम्य् अहम् (०७२-०५२)
परमार्थपरैर् ईशश् (०७२-०५३)
चिन्त्यते यः प्रजाकरैः (०७२-०५३)
तं वासुदेवम् ईशेशं (०७२-०५३)
नमाम्य् अद्य गुणं परम् (०७२-०५३)
यस्माद् इदं यत्र चेदम् (०७२-०५४)
इदं यो विश्वम् अव्ययम् (०७२-०५४)
तं वासुदेवम् अमलं (०७२-०५४)
नमामि परमेश्वरम् (०७२-०५४)
ज्ञेयं ज्ञातारम् अजरं (०७२-०५५)
भोक्तारं प्रकृतेः प्रभुम् (०७२-०५५)
पुरुषस्वरूपिणं देवं (०७२-०५५)

नतो ऽस्मि पुरुषं परम् (०७२-०५५)
प्रधानादिविशेषान्त- (०७२-०५६)
स्वरूपम् अजम् अव्ययम् (०७२-०५६)
स्थूलसूक्ष्ममयं सर्वं- (०७२-०५६)
व्यापिनं तं नमाम्य् अहम् (०७२-०५६)
स्रष्टा पालयिता चान्ते (०७२-०५७)
यश् च संहारकारकः (०७२-०५७)
त्रयीमयं तं त्रिगुणं (०७२-०५७)
नतो ऽस्मि पुरुषोत्तमम् (०७२-०५७)
आब्रह्मस्थावरान्ते च (०७२-०५८)
यो जगत्य् अत्र संस्थितः (०७२-०५८)
व्यक्तरूपी च तं देवं (०७२-०५८)
नतो ऽहं विष्णुम् अव्ययम् (०७२-०५८)
नमो नमो ऽस्तु ते देव (०७२-०५९)
जगताम् ईश्वरेश्वर (०७२-०५९)
परमार्थ पराचिन्त्य (०७२-०५९)
विधातः परमेश्वर (०७२-०५९)
त्वम् आदिर् अन्तो मध्यं च (०७२-०६०)
जगतो ऽस्य जगत्पते (०७२-०६०)
जगत् त्वयि जगच् च त्वं (०७२-०६०)
जगत् त्वत्तो जगन्मय (०७२-०६०)
तवाग्निर् आसं वसुधाङ्घ्रियुग्मं (०७२-०६१)
नभः शिरश् चन्द्ररवी च नेत्रे (०७२-०६१)
समस्तलोका जठरं भुजाश् च (०७२-०६१)
दिशश् चतस्रो भगवन् नमस् ते (०७२-०६१)
यद् भूगतं यद् गगनान्तराले (०७२-०६२)
यद् वा नभस्य् अखिललोकगं च (०७२-०६२)
यत् स्थूलं सूक्ष्मं परतस् ततो ऽपि (०७२-०६२)
यद् अस्ति यन् नास्ति च तत् त्वम् ईश (०७२-०६२)
वेदाश् च वेद्यं च भगवान् अनन्तो (०७२-०६३)
वेदान्तवेद्यश् च समस्तहेतो (०७२-०६३)
वदन्ति तत् त्वा मुनयः परेशं (०७२-०६३)
त्वयि प्रसन्ने परमार्थदृश्ये (०७२-०६३)
नमो हृषीकेश तवाप्रमेय (०७२-०६४)
नमश् च तुभ्यं परमार्थसार (०७२-०६४)
विष्णो नमस् ते ऽस्तु परापरेश (०७२-०६४)
कृष्णाच्युतानन्त जगन्निवास (०७२-०६४)
नमो ऽस्तु तुभ्यं परमेश्वराय (०७२-०६५)
नमस् तथान्तःकारणस्थिताय (०७२-०६५)
प्रधानभूताय नमश् च तुभ्यम् (०७२-०६५)
व्यक्तस्वरूपेण च संस्थिताय (०७२-०६५)
संहृत्य विश्वं जलशायिने नमो (०७२-०६६)
नमश् च ते कैटभसूदनाय (०७२-०६६)
स्वनाभिपद्मोदरशायिने च (०७२-०६६)
ब्रह्मस्वरूपोपनताय चैव (०७२-०६६)
स्रष्ट्रे नमः पालयित्रे स्थितौ च (०७२-०६७)
सर्वेश तुभ्यं पुरुषोत्तमाय (०७२-०६७)
रुद्राय चान्ते क्षयहेतवे ते (०७२-०६७)
नतो ऽस्मि संहारकराय विष्णो (०७२-०६७)

जय प्रपन्नार्तिहराप्रमेय (०७२-०६८)
जयाग्निवस्वश्विमय प्रजेश (०७२-०६८)
रुद्रेन्द्रचन्द्रस्तुत देवदेव (०७२-०६८)
जयामराणाम् अरिशातनाय (०७२-०६८)
जितं त्वया सर्वग सर्वसारं (०७२-०६९)
सर्वात्मभूताखिल वेदवेद्य (०७२-०६९)
जितं जिताक्षामलचित्तदृश्य (०७२-०६९)
चराचराधार धराधरेड्य (०७२-०६९)
यज्ञाश्रयो यज्ञपुमान् अशेष (०७२-०७०)
देवेश मर्त्यासुरयज्ञभोक्तः (०७२-०७०)
त्वम् ईड्यमानो ऽभिमतं ददासि (०७२-०७०)
धराधरेशाच्युत वासुदेव (०७२-०७०)
नमस् ते देवदेव त्वं (०७२-०७१)
यथा पास्य् अखिलं जगत् (०७२-०७१)
स्थितौ तथा समस्तेभ्यो (०७२-०७१)
दोषेभ्यो मां समुद्धर (०७२-०७१)
कृष्णाच्युत हृषीकेश (०७२-०७२)
सर्वभूतेश केशव (०७२-०७२)
महात्मंस् त्राहि मां भक्तं (०७२-०७२)
वासुदेव प्रसीद मे (०७२-०७२)
इति स्तोत्रावसाने तं (०७२-०७३)
चेदिराजं ततो ऽसुराः (०७२-०७३)
जहसुः सतलाक्षेपं (०७२-०७३)
प्रोचुश् च द्विजरूपिणः (०७२-०७३)
प्राज्ञः किल प्रजापालश् (०७२-०७४)
चेदिराट् संश्रुतो भुवि (०७२-०७४)
तस् अस्य ज्ञानम् अखिलं (०७२-०७४)
विपरीतार्थम् ईदृशम् (०७२-०७४)
क्व वासुदेवः क्व भवान् (०७२-०७५)
इमाम् अन्त्यां दशां गतः (०७२-०७५)
यो भवान् विप्रशापेन (०७२-०७५)
रसातलतलाश्रयः (०७२-०७५)
भविष्यति स्मृतो देवस् (०७२-०७६)
त्राता किल तवाच्युतः (०७२-०७६)
यो ऽसाव् आप्याय्यते विप्रैर् (०७२-०७६)
अध्वरेषु हविःस्रवैः (०७२-०७६)
यो ऽन्यत्रस् त्राणकामो वा (०७२-०७७)
यज्ञभागम् अभीप्सते (०७२-०७७)
स त्राता तव गोविन्दो (०७२-०७७)
भविष्यत्य् अतिविस्मयः (०७२-०७७)
यदा त्वं भगवद्भक्तो (०७२-०७८)
विप्रशापान् निपातितः (०७२-०७८)
तदा स वासुदेवस् ते (०७२-०७८)
क्व गतो ऽल्पश्रुतो ऽव्ययः (०७२-०७८)
न वासुदेवो न हरिर् (०७२-०७९)
न गोविन्दो न केशवः (०७२-०७९)
शापं ददत्सु विप्रेषु (०७२-०७९)
परित्राणपरो भवेत् (०७२-०७९)
स त्वम् आर्तप्रलापेभ्यो (०७२-०८०)

विरमाद्य यदीच्छसि (०७२-०८०)
कुबुद्धिम् एतां संत्यज्य (०७२-०८०)
स्वपौरुषपरो भव (०७२-०८०)
न वयं पुण्डरीकाक्षं (०७२-०८१)
नानन्तं नाच्युतं हरिम् (०७२-०८१)
संश्रिता न च सीदामः (०७२-०८१)
स्वपौरुषम् उपाश्रिताः (०७२-०८१)
यद्य् अस्मद्वचनं वीर (०७२-०८२)
न मोहेन विशङ्कसे (०७२-०८२)
तदाश्रयस्व स्वं वीर्यं (०७२-०८२)
परित्यज्य विमूढताम् (०७२-०८२)
इत्य् उदीरितम् आकर्ण्य (०७२-०८३)
स तेषां चेदिपुङ्गवः (०७२-०८३)
अज्ञानपटलच्छन्नान् (०७२-०८३)
हृदयेन शुशोच तान् (०७२-०८३)
उवाच चेदिराजो वै हृदये कृतमत्सरः (०७२-*(११६))
अहो मोहो ऽयम् एतेषाम् (०७२-०८४)
अहंकारसमुद्भवः (०७२-०८४)
येन सर्वेश्वरे विष्णाव् (०७२-०८४)
एतेषाम् आवृता मतिः (०७२-०८४)
प्रकाशं च स तान् आह (०७२-०८५)
दानवान् प्रीतिपूर्वकम् (०७२-०८५)
पापतस् तत्परित्राणं (०७२-०८५)
चिकीर्षुर् वसुधाधिपः (०७२-०८५)
मैवं भो भगवद्भक्तिं (०७२-०८६)
कुरुध्वं द्विजसत्तमाः (०७२-०८६)
संसाराब्धौ मनुष्याणाम् (०७२-०८६)
एकः पोतो जनार्दनः (०७२-०८६)
यूयं वयं तथैवान्ये (०७२-०८७)
तस्य सर्वे विभूतयः (०७२-०८७)
ब्रह्मादिस्थावरान्तं हि (०७२-०८७)
तस्य देवस्य विस्तृतिः (०७२-०८७)
सुखदुःखमयो नृणां (०७२-०८८)
विपाकः कर्मणां च यः (०७२-०८८)
संशुद्धिहेतुः स्वच्छन्दात् (०७२-०८८)
सो ऽपि विप्राः प्रवर्तते (०७२-०८८)
परीक्षां च जगन्नाथः (०७२-०८९)
करोत्य् अदृढचेतसाम् (०७२-०८९)
नराणाम् अर्थविध्वंस- (०७२-०८९)
निकाशेषु जनार्दनः (०७२-०८९)
अल्पयत्नेन चायान्ति (०७२-०९०)
विमुक्तिं केशवाश्रयात् (०७२-०९०)
तद्विघाताय शक्राद्या (०७२-०९०)
यतन्ते विघ्नहेतुभिः (०७२-०९०)
यदा जनार्दने भक्तिं (०७२-०९१)
वहन् सीदति मानवः (०७२-०९१)
निर्विण्णचेताः शैथिल्यं (०७२-०९१)
मनसः कुरुते तदा (०७२-०९१)
देवानां महती शङ्का (०७२-०९२)

भक्तियुक्ता जनार्दने (०७२-०९२)
मुक्तिभाजो भविष्यन्तीत्य् (०७२-०९२)
अतस् ते परिपन्थिनः (०७२-०९२)
प्रायो भवन्ति गोविन्दे (०७२-०९३)
भक्तिव्याघातहेतवः (०७२-०९३)
विघ्नाश् चित्तविघाता हि (०७२-०९३)
विमुक्तिपरिपन्थिनः (०७२-०९३)
सत्यं शतेन विघ्नानां (०७२-०९४)
सहस्रेण तथा तपः (०७२-०९४)
विघ्नायुतेन गोविन्दे (०७२-०९४)
नृणां भक्तिर् निवार्यते (०७२-०९४)
स्वं चापि कर्म पुरुषः (०७२-०९५)
शुभाशुभम् उपागतम् (०७२-०९५)
भुङ्क्ते किम् अत्र देवस्य (०७२-०९५)
गर्ह्यते येन केशवः (०७२-०९५)
मर्यादां च कृतां तेन (०७२-०९६)
यो भिनत्ति स मानवः (०७२-०९६)
न विष्णुभक्तो मन्तव्यः (०७२-०९६)
साधु धर्मार्चनो हरिः (०७२-०९६)
न पुष्पैर् न च धूपेन (०७२-०९७)
नोपहारानुलेपनैः (०७२-०९७)
तोषं प्रयाति गोविन्दः (०७२-०९७)
स्वकर्माभ्यर्चितो यथा (०७२-०९७)
ब्राह्मणा देवदेवेन (०७२-०९८)
मुखात् सृष्टा महात्मना (०७२-०९८)
देवानाम् अपि संपूज्य (०७२-०९८)
भूमिदेवा द्विजोत्तमाः (०७२-०९८)
अनुवृत्तिः सदा कार्या (०७२-०९८)
तेषां वर्णैर् अनुव्रतैः (०७२-०९८)
ते पूज्यास् ते नमस्कार्यास् (०७२-०९९)
तोषणीयाश् च यत्नतः (०७२-०९९)
तेषु तुष्टेष्व् अशेषाणां (०७२-०९९)
देवानां प्रीतिर् उत्तमा (०७२-०९९)
तेषां मया यद् अज्ञानाज् (०७२-१००)
ज्ञानाद् वा कृतम् अप्रियम् (०७२-१००)
तेनापि तुष्ट एवाहं (०७२-१००)
विष्णोर् अंशा द्विजोत्तमाः (०७२-१००)
क्रियावान् मम पोतो ऽयं (०७२-१०१)
भूतलाद् यो रसातले (०७२-१०१)
पतितस्यातिभीमे ऽस्मिन् (०७२-१०१)
दुरुत्तारे भवार्णवे (०७२-१०१)
रसातलतलोत्तारं (०७२-१०२)
न हि वाञ्छाम्य् अहं द्विजाः (०७२-१०२)
संसारगर्ताद् उत्तारं (०७२-१०२)
वृणोम्य् आराधनाद् धरेः (०७२-१०२)
यथाहं नाभिवाञ्छामि (०७२-१०३)
भोगान् आराध्य केशवम् (०७२-१०३)
तेन सत्येन विष्णुर् मे (०७२-१०३)
सर्वदोषान् व्यपोहतु (०७२-१०३)

यथा न माता न पिता (०७२-१०४)
नात्मा न सुहृदः सुताः (०७२-१०४)
कृष्णालापात् प्रियतरास् (०७२-१०४)
तथा मां पातु केशवः (०७२-१०४)
यथा विष्णुमयं सर्वम् (०७२-१०५)
एतत् पश्याम्य् अहं जगत् (०७२-१०५)
तथा मम मनोदोषान् (०७२-१०५)
अशेषान् स व्यपोहतु (०७२-१०५)
जाता विष्णुविलोमेषु (०७२-१०६)
भवत्स्व् अपि दया मम (०७२-१०६)
यथा तेनाद्य सत्येन (०७२-१०६)
भवन्तः सन्तु तन्मयाः (०७२-१०६)
यथा नाहं भवद्द्वेषान् (०७२-१०७)
न संहर्षाद् ब्रवीम्य् अहम् (०७२-१०७)
कृपयैव तथा सर्वे (०७२-१०७)
भवन्तः सन्तु तन्मयाः (०७२-१०७)
यो यो न भक्तो गोविन्दे (०७२-१०८)
तत्र तत्र कृपा यथा (०७२-१०८)
ममारिवर्गे ऽपि तथा (०७२-१०८)
भक्तिर् वो ऽस्तु जनार्दने (०७२-१०८)
एवम् उच्चारिते तेषां (०७२-१०९)
दैत्यानां तत्क्षणात् तथा (०७२-१०९)
तस्मिन् राजन्य् अभून् मैत्री (०७२-१०९)
तथान्येषु च जन्तुषु (०७२-१०९)
देवदेवे ऽप्य् अभूद् भक्तिर् (०७२-११०)
भावो नष्टस् तथासुरः (०७२-११०)
स्वरूपधारिणश् चैनं (०७२-११०)
प्रणम्यासुरपुङ्गवाः (०७२-११०)
प्रत्यूचुः पार्थिवं विष्णु- (०७२-११०)
भक्तं सद्ब्रह्मचारिणम् (०७२-११०)
चेदिभूपाल भद्रं ते (०७२-१११)
भवतो ऽतुलविक्रम (०७२-१११)
संसारे त्वत्समैः सङ्गः (०७२-१११)
पुण्यभाजां प्रवर्तते (०७२-१११)
वयं स्वजातिदोषेण (०७२-११२)
देवपक्षविरोधिनः (०७२-११२)
भवन्तम् आगता हन्तुं (०७२-११२)
देवप्रीणनतत्परम् (०७२-११२)
यदा न शक्तितो हन्तुम् (०७२-११३)
अस्माभिस् त्वं निरायुधः (०७२-११३)
विष्णुध्यानमहारक्षा- (०७२-११३)
कक्षान्तरगतः प्रभो (०७२-११३)
त्याजयद्भिस् तथा भक्तिं (०७२-११४)
केशवाद् इति दर्शितम् (०७२-११४)
वैफल्यम् अतिपुण्येषु (०७२-११४)
विष्णुशुश्रूषणा नृणाम् (०७२-११४)
स त्वं देवातिदेवस्य (०७२-११५)
विष्णोर् अमिततेजसः (०७२-११५)
अनुग्राह्यो यथा तेयम् (०७२-११५)

अच्युते निश्चला मतिः (०७२-११५)
दिष्ट्या क्रोधाभिभूतानाम् (०७२-११६)
अस्माकं त्वन्निवर्हणे (०७२-११६)
मतिर् जाता यतः प्राप्ता (०७२-११६)
त्वत्सङ्गाद् दुर्लभा मतिः (०७२-११६)
कुरुष्व च प्रसादं त्वं (०७२-११७)
प्रणतानां नरेश्वर (०७२-११७)
शत्राव् अपि कृपाशीलं (०७२-११७)
यन् नो दुष्टम् अभून् मनः (०७२-११७)
दिशां वैमल्यं विमलं (०७२-११८)
चक्षुषश् चोपपादितम् (०७२-११८)
भवता दुष्टतां एताम् (०७२-११८)
आसुरीम् अपमार्जता (०७२-११८)
दुष्टाः स्म वर्षपूगानि (०७२-११९)
यद् यातानि वृथैव नः (०७२-११९)
विषयाक्षिप्तचित्तानां (०७२-११९)
कृष्णे भक्तिम् अकुर्वताम् (०७२-११९)
कर्मभूमौ मनुष्याणां (०७२-१२०)
तद् एव विफलं दिनम् (०७२-१२०)
यद् अच्युतकथालाप- (०७२-१२०)
ध्यानार्चारहितं गतम् (०७२-१२०)
इत्य् उक्त्वा ते ऽसुरा भूयः (०७२-१२१)
प्रसाद्य च तथा वसुम् (०७२-१२१)
विष्णौ भक्तिपरा यातास् (०७२-१२१)
तीव्रसंयोगिनो ऽलयन् (०७२-१२१)
स चापि चेदिराट् तस्माद् (०७२-१२२)
देवदेवेन चक्रिणा (०७२-१२२)
पातालाद् उद्धृतः पश्चात् (०७२-१२२)
संसारगहनाद् अपि (०७२-१२२)
इत्य् एतत् सर्वम् आख्यातं (०७२-१२३)
यन् मां त्वं परिपृच्छसि (०७२-१२३)
यथावसीदन्ति नरा (०७२-१२३)
भक्तिमन्तो ऽपि केशवे (०७२-१२३)
दृढा जनार्दने भक्तिर् (०७२-१२४)
यदैवाव्यभिचारिणी (०७२-१२४)
तदा कियत् स्वर्गसुखं (०७२-१२४)
सैव निर्वाणहेतुकी (०७२-१२४)
इत्य् एतद् असुरैः सार्धं (०७२-१२५)
संवादं यः पुरा वसोः (०७२-१२५)
पठिष्यत्य् अखिलं भक्त्या (०७२-१२५)
स तल्लोकम् उपैष्यति (०७२-१२५)
जगत्प्रभुं देवदेवम् (०७३-००१)
अशेषेशम् जनार्दनम् (०७३-००१)
प्रणिपत्याहम् एतं त्वां (०७३-००१)
यत् पृच्छामि तद् उच्यताम् (०७३-००१)
यैर् उपायैः प्रदानैर् वा (०७३-००२)
नराणाम् अमरार्चितः (०७३-००२)
प्रीतिमान् पुण्डरीकाक्षो (०७३-००२)
भवत्य् आचक्ष्व तन् मम (०७३-००२)

ये स्वधर्मे स्थिता वर्णा (०७३-००३)
विप्राद्याः कुरुनन्दन (०७३-००३)
विधर्मेषु न वर्तन्ते (०७३-००३)
प्रीतिमांस् तेषु केशवः (०७३-००३)
ब्रह्मचारिगृहस्थाद्या (०७३-००४)
न च्यवन्त्य् आश्रमाच् च ये (०७३-००४)
स्वधर्मतो हरिस् तेषां (०७३-००४)
प्रीतिमान् एव सर्वदा (०७३-००४)
ये न दम्भेन वर्तन्ते (०७३-००५)
नरा भूतेष्व् अलोलुपाः (०७३-००५)
त्यक्तग्राम्यादिसंगाश् च (०७३-००५)
तेषु प्रीतिः परा हरेः (०७३-००५)
दातारो नापहर्तारः (०७३-००६)
परस्वानाम् अमायिनः (०७३-००६)
ये नरास् तेषु गोविन्दः (०७३-००६)
पुत्रेष्व् इव सदा हितः (०७३-००६)
येषां नराणां न मतिर् (०७३-००७)
जिह्वा वासत्यम् उज्झति (०७३-००७)
ते प्रिया वासुदेवस्य (०७३-००७)
ये च द्विजपरायणाः (०७३-००७)
कर्मणा मनसा वाचा (०७३-००८)
ये न हिंसानुवर्तिनः (०७३-००८)
ते नरा वासुदेवस्य (०७३-००८)
प्रियाः पाण्डुकुलोद्वह (०७३-००८)
सर्वदेवेषु ये विष्णुं (०७३-००९)
सर्वभूतेष्व् अवस्थितम् (०७३-००९)
मन्यन्ते वासुदेवस्य (०७३-००९)
ते प्रियाः पुत्रवत् सदा (०७३-००९)
ब्रह्माद्यं स्थावरान्तं च (०७३-०१०)
भूतग्रामं जनार्दनात् (०७३-०१०)
ये च पश्यन्त्य् अभेदेन (०७३-०१०)
ते विष्णोः सततं प्रियाः (०७३-०१०)
देववेदद्विजातीनां (०७३-०११)
निन्दायां ये न मानवाः (०७३-०११)
प्रीतिभाजो भवन्तीष्टास् (०७३-०११)
ते सदा शार्ङ्गधन्विनः (०७३-०११)
प्रियाणाम् अथ सर्वेषां (०७३-०१२)
देवदेवस्य स प्रियः (०७३-०१२)
आपत्स्व् अपि सदा यस्य (०७३-०१२)
भक्तिर् अव्यभिचारिणी (०७३-०१२)
तस्मात् प्रियत्वं कृष्णस्य (०७३-०१३)
वाञ्छता निजधर्मजैः (०७३-०१३)
गुणैर् आत्मा सदा योज्यो (०७३-०१३)
न दूरे गुणिनो हरिः (०७३-०१३)
येषां न गृद्धिः पारक्ये (०७३-०१४)
दारे द्रव्ये च चेतसः (०७३-०१४)
हिंसायां च मनुष्याणां (०७३-०१४)
ते कृष्णेनावलोकिताः (०७३-०१४)
वेदाः प्रमाणं स्मृतयो (०७३-०१५)

येषां सन्मार्गसेविनाम् (०७३-०१५)
परोपकारसक्तानां (०७३-०१५)
ते कृष्णेनावलोकिताः (०७३-०१५)
कलिकल्मषदोषेण (०७३-०१६)
येषां नोपहता मतिः (०७३-०१६)
पाषण्डानुगता नैव (०७३-०१६)
ते कृष्णेनावलोकिताः (०७३-०१६)
येषां क्लेशो गुरोर् अर्थे (०७३-०१७)
देवविप्रोद्भवो ऽपि वा (०७३-०१७)
न विवित्सासमुद्भूतस् (०७३-०१७)
ते कृष्णेनावलोकिताः (०७३-०१७)
स्वपन्तः संस्थिता यान्तस् (०७३-०१८)
तिष्ठन्तश् च जनार्दनम् (०७३-०१८)
ये चिन्तयन्त्य् अविरतं (०७३-०१८)
ते कृष्णेनावलोकिताः (०७३-०१८)
यथात्मनि तथापत्ये (०७३-०१९)
येषां अद्रोहिणी मतिः (०७३-०१९)
समस्तसत्त्वजातेषु (०७३-०१९)
ते कृष्णेनावलोकिताः (०७३-०१९)
देवपूजाम् अनुदिनं (०७३-०२०)
गुरुविप्रार्थसत्क्रियाम् (०७३-०२०)
ये कुर्वन्ति नरा विद्धि (०७३-०२०)
ते कृष्णेनावलोकिताः (०७३-०२०)
सुवर्णं रत्नम् अथवा (०७३-०२१)
पारक्यं विजने वने (०७३-०२१)
विलोक्य नैति यो लोभं (०७३-०२१)
तं अवैहि हरेः प्रियम् (०७३-०२१)
देवान् पितॄंस् तथापन्नान् (०७३-०२२)
अतिथीञ् जामयो ऽध्वगान् (०७३-०२२)
यो बिभर्ति विजानीहि (०७३-०२२)
तं नरं भगवत्प्रियम् (०७३-०२२)
न क्रोधम् एति क्रुद्धेभ्यः (०७३-०२३)
सहते यो निराक्रियाम् (०७३-०२३)
तं विजानीहि भर्तव्यं (०७३-०२३)
देवदेवस्य शार्ङ्गिनः (०७३-०२३)
परलोकप्रतीकार- (०७३-०२४)
करणाय सदोद्यमम् (०७३-०२४)
कुर्वन्न् आलक्ष्यताम् एति (०७३-०२४)
केशवेनावलोकितः (०७३-०२४)
नात्मसंस्तवम् अन्येषां (०७३-०२५)
न निन्दां चार्थलिप्सया (०७३-०२५)
करोति पुरुषव्याघ्र (०७३-०२५)
यस्य नारायणो हृदि (०७३-०२५)
सर्वभूतदयां सत्यम् (०७३-०२६)
अक्रोधं धर्मशीलताम् (०७३-०२६)
भजन्ते पुरुषा देवे (०७३-०२६)
गोविन्दे हृदये स्थिते (०७३-०२६)
न कलौ न परद्रव्ये (०७३-०२७)
परदाराश्रिता मतिः (०७३-०२७)

नराणां जायते राजन् (०७३-०२७)
गोविन्दे हृदयस्थिते (०७३-०२७)
क्षमां करोति क्रुद्धेषु (०७३-०२८)
दयां मूढेषु मानवः (०७३-०२८)
मुदं च धर्मशीलेषु (०७३-०२८)
गोविन्दे हृदये स्थिते (०७३-०२८)
यदा बिभेत्य् अधर्मादेर् (०७३-०२९)
धर्मादींश् च यदेच्छति (०७३-०२९)
तदा कुरुवरश्रेष्ठ (०७३-०२९)
नरः कृष्णेन वीक्षितः (०७३-०२९)
पुत्रदारगृहक्षेत्र- (०७३-०३०)
द्रव्यादेर् ममतां नरः (०७३-०३०)
नायास्यति जगन्नाथे (०७३-०३०)
हृषीकेशे पराङ्मुखे (०७३-०३०)
कलौ कृतयुगं तेषां (०७३-०३१)
क्लेशास् तेषां सुखाधिकाः (०७३-०३१)
येषां शरीरग्रहणे (०७३-०३१)
हरिशुश्रूषणे मतिः (०७३-०३१)
यदा नेच्छति पापानि (०७३-०३२)
यदा पुण्यानि वाञ्छति (०७३-०३२)
ज्ञेयस् तदा मनुष्येण (०७३-०३२)
हृदये ऽस्य हरिः स्थितः (०७३-०३२)
परमार्थे मतिः पुंसाम् (०७३-०३३)
असारे तु भवार्णवे (०७३-०३३)
कथं भवति राजेन्द्र (०७३-०३३)
विष्वक्सेन पराङ्मुखे (०७३-०३३)
श्रद्दधानो दयाशीलः (०७३-०३४)
समलोष्टाश्मकाञ्चनः (०७३-०३४)
परार्थे मानवः कृष्णे (०७३-०३४)
प्रसन्ने नृप जायते (०७३-०३४)
वहतो ऽपि सदा कृष्णे (०७३-०३५)
भक्तिम् अव्यभिचारिणीम् (०७३-०३५)
पाणिष्व् असमदृग्बुद्धेः (०७३-०३५)
सुलभो नैव केशवः (०७३-०३५)
ये दाम्भिका भिन्नवृत्ता (०७३-०३६)
ये च धर्मध्वजोच्छ्रयाः (०७३-०३६)
दुर्लभो भगवान् देवस् (०७३-०३६)
तेषां सुयतताम् अपि (०७३-०३६)
कामलोभाश्रितं येषां (०७३-०३७)
चित्तं क्रोधादिदूषितम् (०७३-०३७)
तेषां जन्मसहस्रे ऽपि (०७३-०३७)
न मतिः केशवाश्रया (०७३-०३७)
हेयां कृष्णाश्रयां वृत्तिं (०७३-०३८)
मन्यन्ते हेतुसंश्रिताः (०७३-०३८)
अवियोपहतज्ञाना (०७३-०३८)
ये ऽज्ञाने ज्ञानमानिनः (०७३-०३८)
वेदवादविरोधेन (०७३-०३९)
कूटयुक्तिम् अपाश्रिताः (०७३-०३९)
ये केशवस् तद्धृदये (०७३-०३९)

न कदाचित् प्रियातिथिः (०७३-०३९)
मानुषं तं मनुष्यत्वे (०७३-०४०)
मन्यमानाः कुबुद्धयः (०७३-०४०)
कर्माणि ये ऽस्य निन्दन्ति (०७३-०४०)
न तेषां निष्कृतिर् नृणाम् (०७३-०४०)
केचिद् वदन्ति तं देवं (०७३-०४१)
मनुष्यं चाल्पमेधसः (०७३-०४१)
तिर्यक्त्वं चापरे विष्णुं (०७३-०४१)
मायया तस्य मोहिताः (०७३-०४१)
देवत्वम् अपि कृष्णस्य (०७३-०४२)
यस्य निन्दा महात्मनः (०७३-०४२)
स्तुतिं तस्य कथं शक्ताः (०७३-०४२)
कर्तुम् ईशस्य मानवाः (०७३-०४२)
व्यापित्वं शाश्वतत्वं च (०७३-०४३)
जन्मभावविवर्जितम् (०७३-०४३)
यदास्य प्रोच्यते कास्य (०७३-०४३)
स्तुतिर् अर्थे तथा स्थितौ (०७३-०४३)
सर्वेश्वरेश्वरः कृष्णः (०७३-०४४)
प्रोच्यते यदि पण्डितः (०७३-०४४)
तथापि स्वल्पम् एवोक्तं (०७३-०४४)
भूतार्थे कतमा स्तुतिः (०७३-०४४)
आब्रह्मस्तम्बपर्यन्ते (०७३-०४५)
संसारे यस्य संस्थितिः (०७३-०४५)
निन्दापि तस्य न नृभिः (०७३-०४५)
कर्तुम् ईशस्य शक्यते (०७३-०४५)
यदा काणाश् च कूण्ठाश् च (०७३-०४६)
मूढो दुर्बुद्धिर् आतुरः (०७३-०४६)
सर्वगत्वात् स एवैकस् (०७३-०४६)
तदासौ निन्द्यते कथम् (०७३-०४६)
स्रष्टा पालयिता हर्ता (०७३-०४७)
जगतो ऽस्य जगच् च सः (०७३-०४७)
यष्टा याजयिता याज्यः (०७३-०४७)
स एव भगवान् हरिः (०७३-०४७)
दाता दानं तथादाता (०७३-०४८)
कर्ता कार्यं तथा क्रियाः (०७३-०४८)
हन्ता घातयिता हिंस्यो (०७३-०४८)
हार्यं हर्ता च यः स्वयम् (०७३-०४८)
सर्वकारणभूतस्य (०७३-०४९)
तस्येशस्य महात्मनः (०७३-०४९)
कः करोति स्तुतिं विष्णोर् (०७३-०४९)
निन्दां वा पृथिवीपते (०७३-०४९)
तस्मात् सर्वेश्वरो विष्णुर् (०७३-०५०)
न स्तोतुं न च निन्दितुम् (०७३-०५०)
शक्यते सर्वभूतत्वाच् (०७३-०५०)
चोक्षाचोक्षस्वरूपिणा (०७३-०५०)
स्तुतेः पादाद् यतो नान्यद् (०७३-०५१)
उत्कृष्टम् उपलभ्यते (०७३-०५१)
तस्याप्य् उच्चारणेनेशो (०७३-०५१)
न स्तोतुं शक्यते हरिः (०७३-०५१)

भूतार्थवादस्तुतये (०७३-०५२)
न निन्दायै विधीयते (०७३-०५२)
यतो ऽतः सर्वभूतस्य (०७३-०५२)
का निन्दा तस्य का स्तुतिः (०७३-०५२)
येन सर्वात्मना तत्र (०७३-०५३)
हृदयं संनिवेशितम् (०७३-०५३)
अपि मौनवतस् तस्य (०७३-०५३)
सुलभो ऽयं जनार्दनः (०७३-०५३)
तस्मात् त्वं कुरुशार्दूल (०७३-०५४)
स्वधर्मपरिपालनम् (०७३-०५४)
कुरु विष्णुं च हृदये (०७३-०५४)
सर्वव्यापिनम् ईश्वरम् (०७३-०५४)
तन्मना भव तद्भक्तस् (०७३-०५५)
तद्याजी तं नमस्कुरु (०७३-०५५)
विष्णोर् एवं प्रियत्वं त्वम् (०७३-०५५)
आशु यास्यसि पार्थिव (०७३-०५५)
यं स्तुवन् स्तव्यताम् एति (०७३-०५६)
वन्द्यमानश् च वन्द्यताम् (०७३-०५६)
तम् ईश्वरेश्वरं विष्णुं (०७३-०५६)
हृदये संनिवेशय (०७३-०५६)
संपूज्य यं पूज्यतमो (०७३-०५७)
भवत्य् अत्र जगत्त्रये (०७३-०५७)
तम् ईश्वरेश्वरं विष्णुं (०७३-०५७)
हृदये कुरु पार्थिव (०७३-०५७)
स्ववर्णकर्माभिरतः (०७३-०५८)
कुरु चित्ते जनार्दनम् (०७३-०५८)
एष शास्त्रार्थसद्भावः (०७३-०५८)
किम् उक्तैर् बहुविस्तरैः (०७३-०५८)
यस्मिन् प्रसन्नचित्तस् त्वं (०७३-०५९)
यस्मिन् कोपम् उपैषि च (०७३-०५९)
ताव् उभाव् अपि तद्भूतौ (०७३-०५९)
चिन्तयन् सिद्धिम् एष्यसि (०७३-०५९)
यत्र यत्र स्थितं चेतः (०७३-०६०)
प्रीत्या स्नेहेन वा तव (०७३-०६०)
तं तं चिन्तय गोविन्दं (०७३-०६०)
मनसः स्थैर्यकारणात् (०७३-०६०)
स्वपन् विबुद्ध्यन्न् उत्तिष्ठन् (०७३-०६१)
स्थितो भुञ्जन् पिबन् व्रजन् (०७३-०६१)
सर्वगं सर्वकर्तारं (०७३-०६१)
विष्णुं सर्वत्र चिन्तय (०७३-०६१)
यथाग्निसंगात् कनकम् (०७३-०६२)
अपदोषं प्रजायते (०७३-०६२)
संश्लिष्टं वासुदेवेन (०७३-०६२)
मनुष्याणां तथा मनः (०७३-०६२)
यज्विनो यं नमस्यन्ति (०७३-०६३)
यं नमस्यन्ति देवताः (०७३-०६३)
योगिनो यं नमस्यन्ति (०७३-०६३)
तं नमस्यं नमाम्य् अहम् (०७३-०६३)
भूयश् च शृणु राजेन्द्र (०७४-००१)

यज् जगाद जनार्दनः (०७४-००१)
नागपर्यङ्कशयने (०७४-००१)
पृष्टः क्षीराब्धिकन्यया (०७४-००१)
पुरा शयानं गोविन्दं (०७४-००२)
प्रावृट्काले महोदधौ (०७४-००२)
शेषभोगिमहाभोगे (०७४-००२)
वीच्यम्बुकणशीतले (०७४-००२)
वक्षःस्थलस्थिता देवी (०७४-००३)
जगन्माता जगत्पतिम् (०७४-००३)
अनन्यासक्तदृष्टिं च (०७४-*(११७))
किम् अप्य् एकाग्रमानसम् (०७४-*(११७))
श्रीवत्सवक्षसं लक्ष्मीः (०७४-००३)
करसंवाहनादृता (०७४-००३)
योगनिद्रावसानस्थम् (०७४-००४)
अच्युतं जगतः पतिम् (०७४-००४)
पप्रच्छ पुण्डरीकाक्षं (०७४-००४)
पुण्डरीककरा हरिम् (०७४-००४)
सृष्टं जगद् इदं सर्वं (०७४-००५)
बहुशश् चोपसंहृतम् (०७४-००५)
त्वया जगत्पते चात्र (०७४-००५)
किं कश्चिद् दयितस् तव (०७४-००५)
देवान् मनुष्यान् गन्धर्वान् (०७४-००६)
यक्षविद्याधरासुरान् (०७४-००६)
सृष्ट्वा सृष्टान् निर्घृणत्वाद् (०७४-००६)
उपसंहरते भवान् (०७४-००६)
कश्चिद् एतेषु भूतेषु (०७४-००७)
देवादिषु तवाच्युत (०७४-००७)
द्वेषो ऽस्ति प्रीतिर् अथवा (०७४-००७)
समः सर्वत्र वा भवान् (०७४-००७)
समो ऽस्मि सर्वभूतेषु (०७४-००८)
न मे द्वेष्यो ऽस्ति न प्रियः (०७४-००८)
तथापि गुणगृह्यो ऽहं (०७४-००८)
प्रत्येकहृदयस्थितः (०७४-००८)
अन्तरात्मनि सर्वस्य (०७४-००९)
लोकस्याहम् अवस्थितः (०७४-००९)
पुण्यापुण्यकृतौ तेषु (०७४-००९)
प्रीतिद्वेषौ शुभे मम (०७४-००९)
पुण्यं प्रीत्यनुभावेन (०७४-०१०)
साधु बुद्धिषु वर्तते (०७४-०१०)
द्वेषानुभावेनापुण्यं (०७४-०१०)
फलदं तेषु भामिनि (०७४-०१०)
श्रूयतां च महाभागे (०७४-०११)
नरेषु शुभचारिषु (०७४-०११)
सततं येषु मे प्रीतिस् (०७४-०११)
तथाप्रीतिर् वरानने (०७४-०११)
प्रलयोत्पत्तितत्त्वज्ञा (०७४-०१२)
आत्मज्ञानपराश् च ये (०७४-०१२)
एते स्वकर्मणा भद्रे (०७४-०१२)
मम प्रीतिपथं गताः (०७४-०१२)

वाङ्मनःकायिकीं हिंसां (०७४-०१३)
ये न कुर्वन्ति कुत्रचित् (०७४-०१३)
सर्वमैत्रा नरा लक्ष्मि (०७४-०१३)
दयितास् ते सदा मम (०७४-०१३)
स्वकीयद्रव्यसंतुष्टा (०७४-०१४)
निवृत्ताश् चौर्यकर्मणः (०७४-०१४)
सत्यशीलदयायुक्ता (०७४-०१४)
नरा मम सदा प्रियाः (०७४-०१४)
मातृस्वसृसुतातुल्यान् (०७४-०१५)
परदारांश् च ये नराः (०७४-०१५)
मन्यन्ते ते च मे लक्ष्मि (०७४-०१५)
दृढं प्रियतमाः सदा (०७४-०१५)
न कामान् न च संरम्भान् (०७४-०१६)
न द्वेषाद् ये च भामिनि (०७४-०१६)
संत्यजन्ति स्वकं कर्म (०७४-०१६)
ते ऽतीव दयिता मम (०७४-०१६)
विश्वास्याः सर्वभूतानाम् (०७४-०१७)
अहिंस्राश् च दयालवः (०७४-०१७)
त्यक्तानृतकथा देवि (०७४-०१७)
मनुष्या दयिता मम (०७४-०१७)
धर्मलब्धांस् तु ये भोगान् (०७४-०१८)
भुञ्जते नातिकीकटाः (०७४-०१८)
परलोकाविरोधेन (०७४-०१८)
ते ममातिप्रिया नराः (०७४-०१८)
न लोभे न च कार्पण्ये (०७४-०१९)
न स्तेये न च मत्सरे (०७४-०१९)
येषां मतिर् मनुष्याणां (०७४-०१९)
ते ऽतीव दयिता मम (०७४-०१९)
धर्मलब्धेषु दारेषु (०७४-०२०)
ऋतुकालाभिगामिनः (०७४-०२०)
गृहस्थकर्माभिरता (०७४-०२०)
नरास् ते दयिता मम (०७४-०२०)
पररन्ध्रेषु जात्यन्धाः (०७४-०२१)
परदारेष्व् अपुंसकाः (०७४-०२१)
परापवादे ये मूका (०७४-०२१)
दयितास् ते नरा मम (०७४-०२१)
परापवादं निन्दां च (०७४-०२२)
परमर्मावघट्टनम् (०७४-०२२)
ये न कुर्वन्ति पुरुषास् (०७४-०२२)
ते देवि मम वल्लभाः (०७४-०२२)
सत्यां श्लक्ष्णां निराबाधां (०७४-०२३)
मधुरां प्रीतिदायिनीम् (०७४-०२३)
ये वाचम् ईरयन्ति स्म (०७४-०२३)
ते मनुष्या मम प्रियाः (०७४-०२३)
ये ब्राह्मणार्थे संत्यज्य (०७४-०२४)
सद्यः स्वम् अपि जीवितम् (०७४-०२४)
यतन्ते परया भक्त्या (०७४-०२४)
ते देवि दयिता मम (०७४-०२४)
साक्षाद् देवम् इवायान्तं (०७४-०२५)

या पतिं नित्यम् अर्चति (०७४-०२५)
पादशौचादिभिर् नारी (०७४-०२५)
तस्या नाहं सुदुर्लभः (०७४-०२५)
पूर्णचन्द्रम् इवोद्यतं (०७४-०२६)
भर्तारं या गृहागतम् (०७४-०२६)
हृष्टा पश्यति तां विद्धि (०७४-०२६)
दयितां योषितं मम (०७४-०२६)
ते भक्ता ये सदा विप्रान् (०७४-०२७)
पूजयन्त्य् अब्धिसंभवे (०७४-०२७)
यथाविभवतो भक्त्या (०७४-०२७)
स्वकर्माभिरता नराः (०७४-०२७)
श्रुतिस्मृत्युदितं धर्मं (०७४-०२८)
मनसापि न ये नराः (०७४-०२८)
समुल्लङ्घ्य प्रवर्तन्ते (०७४-०२८)
ते भक्ता मम भामिनि (०७४-०२८)
ब्रह्मरूपधरस्यास्यान् (०७४-०२९)
मम वेदा विनिःसृताः (०७४-०२९)
मन्वादिरूपिणश् चैव (०७४-०२९)
समस्ताः स्मृतयः स्मृताः (०७४-०२९)
श्रुतिः स्मृतिर् ममैवाज्ञा (०७४-०३०)
ताम् उल्लङ्घ्य यजेच् छुभे (०७४-०३०)
सर्वस्वेनापि मां देवि (०७४-०३०)
नाप्नोत्य् आज्ञाविघातकृत् (०७४-०३०)
यः स्वधर्मान् न चलति (०७४-०३१)
हिंसाधौ यो न सज्यते (०७४-०३१)
वहतस् तस्य मद्भक्तिं (०७४-०३१)
सदैवाहं न दुर्लभः (०७४-०३१)
एतद् देवि मयाख्यातं (०७४-०३२)
यत् पृष्टो ऽहम् इह त्वया (०७४-०३२)
प्रियाणां मम सर्वेषां (०७४-०३२)
शृणु यो ऽतितरं प्रियः (०७४-०३२)
ब्राह्मणः क्षत्रियो वैश्यः (०७४-०३३)
शूद्रश् च वरवर्णिनि (०७४-०३३)
स्वधर्माद् अचलन् देवि (०७४-०३३)
दयावान् सर्वजन्तुषु (०७४-०३३)
सत्यवाच् छौचसंपन्नो (०७४-०३४)
न द्रोही न च मत्सरी (०७४-०३४)
वाङ्मनःकर्मभिः शान्तो (०७४-०३४)
दयितः सततं मम (०७४-०३४)
एवं श्रीर् देवदेवेन (०७४-०३५)
प्राग् उक्ता हरिमेधसा (०७४-०३५)
तवापि हि नरश्रेष्ठ (०७४-०३५)
यथावत् कथितं मया (०७४-०३५)
संवादम् एतद् देवस्य (०७४-०३६)
सह लक्ष्म्या जगत्पतेः (०७४-०३६)
यः शृणोति स पापेभ्यः (०७४-०३६)
समस्तेभ्यः प्रमुच्यते (०७४-०३६)
भूयो ऽखिलं जगद्धातुर् (०७५-००१)
वासुदेवस्य भार्गव (०७५-००१)

सम्यगाराधनायालं (०७५-००१)
क्रियायोगं ब्रवीहि मे (०७५-००१)
यत् फलं केशवस्यार्चा (०७५-००२)
प्रतिष्ठाप्य लभेन् नरः (०७५-००२)
यच् च देवकुलं विष्णोः (०७५-००२)
कारयित्वा फलं लभेत् (०७५-००२)
यद् दीपधूपपुष्पाणां (०७५-००३)
गन्धानां च निवेदने (०७५-००३)
ध्वजादिदाने यत् पुण्यं (०७५-००३)
यत् पुण्यं गीतवादिते (०७५-००३)
तथा पवित्रपठने (०७५-००४)
जयशब्दाद्युदीरणे (०७५-००४)
संमार्जनादौ यत् पुण्यं (०७५-००४)
नमस्कारे प्रदक्षिणे (०७५-००४)
शीर्णस्फुटितसंस्कार- (०७५-००५)
करणे चापि यत् फलम् (०७५-००५)
तन् मे विस्तरतः सर्वं (०७५-००५)
भगवन् वक्तुम् अर्हसि (०७५-००५)
यैश् चोपवासैर् भगवान् (०७५-००६)
नरैर् आराध्यते हरिः (०७५-००६)
तेषां फलं च यत् कृत्स्नं (०७५-००६)
तन् ममाचक्ष्व विस्तरात् (०७५-००६)
संक्षेपात् पूर्वम् एवैतद् (०७५-००७)
भवतः कथितं मया (०७५-००७)
विस्तरेण महाराज (०७५-००७)
श्रूयतां ब्रुवतो मम (०७५-००७)
अदितिर् नाम देवानां (०७५-००८)
माता परमदुश्चरम् (०७५-००८)
तपश् चचार वर्षाणां (०७५-००८)
सहस्रं पृथिवीपते (०७५-००८)
आराधनाय कृष्णस्य (०७५-००९)
वाग्यता वायुभोजना (०७५-००९)
दैत्यैर् निराकृतान् दृष्ट्वा (०७५-००९)
तनयान् कुरुनन्दन (०७५-००९)
वृथापुत्राहम् अस्मीति (०७५-०१०)
निर्वेदात् प्रणता हरिम् (०७५-०१०)
तुष्टाव वाग्भिर् इष्टाभिः (०७५-०१०)
परमार्थावबोधिनी (०७५-०१०)
शरण्यं शरणं विष्णुं (०७५-*(११८))
प्रणता भक्तवत्सलम् (०७५-*(११८))
देवदैत्यनृपश्चाप- (०७५-०१०)
व्योमवाय्वादिरूपिणम् (०७५-०१०)
नमः स्मृतार्तिनाशाय (०७५-०११)
नमः पुष्करमालिने (०७५-०११)
नमः परमकल्याण- (०७५-०११)
कल्याणायादिवेधसे (०७५-०११)
नमः पङ्कजनेत्राय (०७५-०१२)
नमः पङ्कजनाभये (०७५-०१२)
नमः पङ्कजसंभूति- (०७५-०१२)

संभवायात्मयोनये (०७५-०१२)
श्रियः कान्ताय दान्ताय (०७५-०१३)
दान्तदृश्याय चक्रिणे (०७५-०१३)
नमः शङ्खासिहस्ताय (०७५-०१३)
नमः कनकरेतसे (०७५-०१३)
तथात्मज्ञानविज्ञान- (०७५-०१४)
योगचित्तात्मयोगिने (०७५-०१४)
निर्गुणाय विशेषाय (०७५-०१४)
हरये ब्रह्मरूपिणे (०७५-०१४)
जगत् प्रतिष्ठितं यत्र (०७५-०१५)
जगता यो न दृश्यते (०७५-०१५)
नमः स्थूलातिसूक्ष्माय (०७५-०१५)
तस्मै देवाय शङ्खिने (०७५-०१५)
यं न पश्यन्ति पश्यन्तो (०७५-०१६)
जगद् अप्य् अखिलं नराः (०७५-०१६)
अपश्यद्भिर् जगद् यच् च (०७५-०१६)
दृश्यते स्वहृदि स्थितः (०७५-०१६)
बहिर्ज्योतिषि लक्ष्यो यो (०७५-*(११९))
लक्ष्यते ज्योतिषः परः (०७५-*(११९))
यस्मिन्न् एतद् यतश् चैतद् (०७५-०१७)
यश् चैतद् अखिलं जगत् (०७५-०१७)
तस्मै समस्तजगताम् (०७५-०१७)
आधाराय नमो नमः (०७५-०१७)
आद्यः प्रजापतिपतिर् (०७५-०१८)
यः पितॄणां परः पतिः (०७५-०१८)
पतिः सुराणां यस् तस्मै (०७५-०१८)
नमः कृष्णाय वेधसे (०७५-०१८)
यः प्रवृत्तैर् निवृत्तैश् च (०७५-०१९)
कर्मभिर् विभुर् इज्यते (०७५-०१९)
स्वर्गापवर्गफलदो (०७५-०१९)
नमस् तस्मै गदाधृते (०७५-०१९)
यश् चिन्त्यमानो मनसा (०७५-०२०)
सद्यः पापं व्यपोहति (०७५-०२०)
नमस् तस्मै विशुद्धाय (०७५-०२०)
परस्मै हरिमेधसे (०७५-०२०)
यं प्रविश्याखिलाधारम् (०७५-०२१)
ईशानम् अजम् अव्ययम् (०७५-०२१)
न पुनर् जन्ममरणे (०७५-०२१)
प्राप्नुवन्ति नमामि तम् (०७५-०२१)
यो यज्ञे यज्ञपरमैर् (०७५-०२२)
इज्यते यज्ञसंस्थितिः (०७५-०२२)
तं यज्ञपुरुषं विष्णुं (०७५-०२२)
नमामि प्रभुम् ईश्वरम् (०७५-०२२)
गीयते सर्ववेदेषु (०७५-०२३)
वेदविद्भिर् विदां गतिः (०७५-०२३)
यस् तस्मै वेदवेद्याय (०७५-०२३)
विष्णवे जिष्णवे नमः (०७५-०२३)
यतो विश्वं समुद्भूतं (०७५-०२४)
यस्मिंश् च लयम् एष्यति (०७५-०२४)

विश्वोद्भवप्रतिष्ठाय (०७५-०२४)
नमस् तस्मै महात्मने (०७५-०२४)
ब्रह्मादिस्तम्बपर्यन्तं (०७५-०२५)
विना येन तताम् इमाम् (०७५-०२५)
मायां नालं समुत्तर्तुं (०७५-०२५)
तम् उपेन्द्रं नमाम्य् अहम् (०७५-०२५)
यम् आराध्य विशुद्धेन (०७५-*(१२०))
मनसा कर्मणा गिरा (०७५-*(१२०))
हरत्य् अविद्याम् अखिलां (०७५-*(१२०))
तम् उपेन्द्रं नमाम्य् अहम् (०७५-*(१२०))
विषादतोषरोषाद्यैर् (०७५-*(१२०))
यो ऽजस्रं सुखदुःखजैः (०७५-*(१२०))
नृत्यत्य् अखिलभूतस्थस् (०७५-*(१२०))
तम् उपेन्द्रं नमाम्य् अहम् (०७५-*(१२०))
यो ऽन्नतोयस्वरूपस्थो (०७५-०२६)
बिभर्त्य् अखिलम् ईश्वरः (०७५-०२६)
विश्वं विश्वपतिं विष्णुं (०७५-०२६)
तं नमामि प्रजापतिम् (०७५-०२६)
मूर्तं तमो ऽसुरमयं (०७५-०२७)
तद्वधाद् विनिहन्ति यः (०७५-०२७)
रात्रिजं सूर्यरूपी च (०७५-०२७)
तम् उपेन्द्रं नमाम्य् अहम् (०७५-०२७)
कपिलादिस्वरूपस्थो (०७५-०२८)
यश् चाज्ञानमयं तमः (०७५-०२८)
हन्ति ज्ञानप्रदानेन (०७५-०२८)
तम् उपेन्द्रं नमाम्य् अहम् (०७५-०२८)
यस्याक्षिणी चन्द्रसूर्यौ (०७५-०२९)
सर्वलोकशुभाशुभम् (०७५-०२९)
पश्येते कर्म सततं (०७५-०२९)
तम् उपेन्द्रं नमाम्य् अहम् (०७५-०२९)
यस्मिन् सर्वेश्वरे सर्वं (०७५-०३०)
सत्यम् एतन् मयोदितम् (०७५-०३०)
नानृतं तम् अजं विष्णुं (०७५-०३०)
नमामि प्रभवाव्ययम् (०७५-०३०)
यथैतत् सत्यम् उक्तं मे (०७५-०३१)
भूयश् चातो जनार्दनः (०७५-०३१)
सत्येन तेन सकलाः (०७५-०३१)
पूर्यन्तां मे मनोरथाः (०७५-०३१)
एवं स्तुतो ऽथ भगवान् (०७५-०३२)
वासुदेव उवाच ताम् (०७५-०३२)
अदृश्यः सर्वभूतानां (०७५-०३२)
तस्याः संदर्शने स्थितः (०७५-०३२)
मनोरथांस् त्वम् अदिते (०७५-०३३)
यान् इच्छस्य् अभिपूरितान् (०७५-०३३)
तांस् तान् प्राप्स्यसि धर्मज्ञे (०७५-०३३)
मत्प्रसादाद् असंशयम् (०७५-०३३)
शृणुष्व च महाभागे (०७५-०३४)
वरं यस् ते हृदि स्थितः (०७५-०३४)
तं प्रयच्छामि नियतं (०७५-*(१२२))

मात्र कार्या विचारणा (०७५-*(१२२))
मद्दर्शनं हि विफलं (०७५-०३४)
न कदाचिद् भविष्यति (०७५-०३४)
यदि देव प्रसन्नस् त्वं (०७५-०३५)
भक्ताया भक्तवत्सल (०७५-०३५)
त्रैलोक्याधिपतिः पुत्रस् (०७५-०३५)
तद् अस्तु मम वासवः (०७५-०३५)
हृतराज्यो हृतश् चास्य (०७५-०३६)
यज्ञभागो महासुरैः (०७५-०३६)
त्वयि प्रसन्ने वरद (०७५-०३६)
तं प्राप्नोतु सुतो मम (०७५-०३६)
हृतं राज्यं न दुःखाय (०७५-०३७)
मम पुत्रस्य केशव (०७५-०३७)
सपत्नाद् आयतिभ्रंशो (०७५-०३७)
बाधां नः कुरुते हृदि (०७५-०३७)
कृतः प्रसादो हि मया (०७५-०३८)
तव देवि यथेप्सितः (०७५-०३८)
स्वांशेन चैव ते गर्भे (०७५-०३८)
संभविष्यामि कश्यपात् (०७५-०३८)
तव गर्भसमुद्भूतः (०७५-०३९)
सुतस् ते ये सुरारयः (०७५-०३९)
तान् अहं निहनिष्यामि (०७५-०३९)
निर्वृता भव नन्दिनि (०७५-०३९)
प्रसीद देवदेवेश (०७५-०४०)
नमस् ते विश्वभावन (०७५-०४०)
नाहं त्वाम् उदरेणेश (०७५-०४०)
वोढुं शक्ष्यामि केशव (०७५-०४०)
यस्मिन् प्रतिष्ठितं विश्वं (०७५-०४१)
यो विश्वं स्वयम् ईश्वर (०७५-०४१)
तद् अहं नोदरेण त्वां (०७५-०४१)
वोढुं शक्ष्यामि दुर्धरम् (०७५-०४१)
सत्यम् आत्थ महाभागे (०७५-०४२)
मयि सर्वम् इदं जगत् (०७५-०४२)
प्रतिष्ठितं न मां शक्ता (०७५-०४२)
वोढुं सेन्द्रा दिवौकसः (०७५-०४२)
किन्त्व् अहं सकलांल् लोकान् (०७५-०४३)
सदेवासुरमानुषान् (०७५-०४३)
जङ्गमाजङ्गमं सर्वं (०७५-०४३)
त्वां च देवि सकाश्यपाम् (०७५-०४३)
धारयिष्यामि भद्रं ते (०७५-०४३)
तव गर्भशयो ऽदिते (०७५-०४३)
न ते ग्लानिर् न ते खेदो (०७५-०४४)
गर्भस्थे भविता मयि (०७५-०४४)
दाक्षायणि प्रसादं ते (०७५-०४४)
करोम्य् अन्यैः सुदुर्लभम् (०७५-०४४)
गर्भस्थे मयि पुत्राणां (०७५-०४५)
तव यो ऽरिर् भविष्यति (०७५-०४५)
तेजसस् तस्य हानिं च (०७५-०४५)
करिष्ये मा व्यथां कृताः (०७५-०४५)

एवम् उक्त्वा ततः सद्यो (०७५-०४६)
गतो ऽन्तर्धानम् ईश्वरः (०७५-०४६)
सापि कालेन तं गर्भम् (०७५-०४६)
अवाप कुरुसत्तम (०७५-०४६)
गर्भस्थिते ततः कृष्णे (०७५-०४७)
चचाल सकला क्षितिः (०७५-०४७)
चकम्पिरे महाशैला (०७५-०४७)
जग्मुः क्षोभम् अथाब्धयः (०७५-०४७)
यतो यतो ऽदितिर् यान्ती (०७५-०४८)
ददाति ललितं पदम् (०७५-०४८)
ततस् ततः क्षितिः खेदान् (०७५-०४८)
ननाम वसुधाधिप (०७५-०४८)
दैत्यानाम् अपि सर्वेषां (०७५-०४९)
गर्भस्थे मधुसूदने (०७५-०४९)
बभूव तेजसो हानिर् (०७५-०४९)
यथोक्तं परमेष्ठिना (०७५-०४९)
निस्तेजसो ऽसुरान् दृष्ट्वा (०७६-००१)
समस्तान् असुरेश्वरः (०७६-००१)
प्रह्लादम् अथ पप्रच्छ (०७६-००१)
बलिर् आत्मपितामहम् (०७६-००१)
तात निस्तेजसो दैत्या (०७६-००२)
निर्दग्धा इव वह्निना (०७६-००२)
किम् एते सहसैवाद्य (०७६-००२)
ब्रह्मदण्डहता इव (०७६-००२)
दुरिष्टं किं नु दैत्यानां (०७६-००३)
किं कृत्या वैरिनिर्मिता (०७६-००३)
नाशायैषां समुद्भूता (०७६-००३)
येन निस्तेजसो ऽसुराः (०७६-००३)
इत्य् आसुरवरस् तेन (०७६-००४)
पृष्टः पौत्रेण पार्थिव (०७६-००४)
चिरं ध्यात्वा जगादेदम् (०७६-००४)
असुरेन्द्रं तदा बलिम् (०७६-००४)
चलन्ति गिरयो भूमिर् (०७६-००५)
जहाति सहजां धृतिम् (०७६-००५)
सद्यः समुद्राः क्षुभिता (०७६-००५)
दैत्या निस्तेजसः कृताः (०७६-००५)
सूर्यादयो यथा पूर्वं (०७६-००६)
तथा गच्छन्ति न ग्रहाः (०७६-००६)
देवानां च परा लक्ष्मीः (०७६-००६)
कारणैर् अनुमीयते (०७६-००६)
महद् एतन् महाबाहो (०७६-००७)
कारणं दानवेश्वर (०७६-००७)
न ह्य् अल्पम् इति मन्तव्यं (०७६-००७)
त्वया कार्यं सुरार्दन (०७६-००७)
इत्य् उक्त्वा दानवपतिं (०७६-००८)
प्रह्लादः सो ऽसुरोत्तमः (०७६-००८)
अत्यन्तभक्तो देवेशं (०७६-००८)
जगाम मनसा हरिम् (०७६-००८)
स ध्यानपथगं कृत्वा (०७६-००९)

प्रह्लादः स्वं मनो ऽसुरः (०७६-००९)
विचारयाम् आस ततो (०७६-००९)
यतो देवो जनार्दनः (०७६-००९)
स ददर्शोदरे ऽदित्याः (०७६-०१०)
प्रह्लादो वामनाकृतिम् (०७६-०१०)
अन्तःस्थान् बिभ्रतं सप्त (०७६-०१०)
लोकान् आदिप्रजापतिम् (०७६-०१०)
तद् अन्तश् च वसून् रुद्रान् (०७६-०११)
अश्विनौ मरुतस् तथा (०७६-०११)
साध्यान् विश्वे तथादित्यान् (०७६-०११)
गन्धर्वोरगराक्षसान् (०७६-०११)
विरोचनं सतनयं (०७६-०१२)
बलिं चासुरनायकम् (०७६-०१२)
जम्भं कुजम्भं नरकं (०७६-०१२)
बाणम् अन्यांस् तथासुरान् (०७६-०१२)
आत्मानम् उर्वीगगनं (०७६-०१३)
वायुम् अम्भो हुताशनम् (०७६-०१३)
समुद्राद्रिद्रुमसरित्- (०७६-०१३)
सरांसि पशवो मृगान् (०७६-०१३)
वयोमनुष्यान् अखिलांस् (०७६-०१४)
तथैव च सरीसृपान् (०७६-०१४)
समस्तलोकस्रष्टारं (०७६-०१४)
ब्रह्माणं भवम् एव च (०७६-०१४)
ग्रहनक्षत्रताराश् च (०७६-०१५)
दक्षाद्यांश् च प्रजापतीन् (०७६-०१५)
संपश्यन् विस्मयाविष्टः (०७६-०१५)
प्रकृतिस्थः क्षणात् पुनः (०७६-०१५)
प्रह्लादः प्राह दैत्येन्द्रं (०७६-०१६)
बलिं वैरोचनिं तदा (०७६-०१६)
वत्स ज्ञातं मया सर्वं (०७६-०१७)
यदर्थं भवताम् इयम् (०७६-०१७)
तेजसो हानिर् उत्पन्ना (०७६-०१७)
तच् छृणु त्वम् अशेषतः (०७६-०१७)
देवदेवो जगद्योनिर् (०७६-०१८)
अयोनिर् जगदादिकृत् (०७६-०१८)
अनादिर् आदिर् विश्वस्य (०७६-०१८)
वरेण्यो वरदो हरिः (०७६-०१८)
परापराणां परमः (०७६-०१९)
परः परवताम् अपि (०७६-०१९)
प्रभुः प्रमाणं मानानां (०७६-०१९)
सप्तलोकगुरोर् गुरुः (०७६-०१९)
स्थितिं कर्तुं जगन्नाथः (०७६-*(१२३))
सो ऽदित्या गर्भतां गतः (०७६-*(१२३))
प्रभुः प्रभूणाम् परमः पराणाम् (०७६-०२०)
अनादिमध्यो भगवान् अनन्तः (०७६-०२०)
त्रैलोक्यम् अंशेन सनाथम् एष (०७६-०२०)
कर्तुं महात्मादितिजो ऽवतीर्णः (०७६-०२०)
न यस्य रुद्रो न च पद्मयोनिर् (०७६-०२१)
नेन्द्रो न सूर्येन्दुमरीचिमिश्राः (०७६-०२१)

जानन्ति दैत्याधिप यत् स्वरूपं (०७६-०२१)
स वासुदेवः कलयावतीर्णः (०७६-०२१)
यो ऽसौ कलांशेन नृसिंहरूपी (०७६-०२२)
जघान पूर्वं पितरम् अशेषः (०७६-०२२)
यः सर्वयोगीशमनोनिवासः (०७६-०२२)
स वासुदेवः कलयावतीर्णः (०७६-०२२)
यम् अक्षरं वेदविदो विदित्वा (०७६-०२३)
विशन्ति तं ज्ञानविधूतपापाः (०७६-०२३)
यस्मिन् प्रविष्टा न पुनर् भवन्ति (०७६-०२३)
तं वासुदेवं प्रणमामि देवम् (०७६-०२३)
भूतान्य् अशेषाणि यतो भवन्ति (०७६-०२४)
यथोर्मयस् तोयनिधेर् अजस्रम् (०७६-०२४)
लयं च यस्मिन् प्रलये प्रयान्ति (०७६-०२४)
तं वासुदेवं प्रणमाम्य् अचिन्त्यम् (०७६-०२४)
न यस्य रूपं न बलं प्रभावो (०७६-०२५)
न च स्वभावः परमस्य पुंसः (०७६-०२५)
विज्ञायते सर्वपितामहाद्यैस् (०७६-०२५)
तं वासुदेवं प्रणमाम्य् अचिन्त्यम् (०७६-०२५)
रूपस्य चक्षुर् ग्रहणे त्वग् एषा (०७६-०२६)
स्पर्शग्रहीत्री रसना रसस्य (०७६-०२६)
श्रोत्रं च शब्दग्रहणे नराणां (०७६-०२६)
घ्राणं च गन्धग्रहणे नियुक्तम् (०७६-०२६)
न घ्राणचक्षुःश्रवणादिभिर् यः (०७६-०२७)
सर्वेश्वरो वेदितुम् अव्ययात्मा (०७६-०२७)
शक्यस् तम् ईड्यं मनसैव देवं (०७६-०२७)
ग्राह्यं नतो ऽहं हरिम् ईशितारम् (०७६-०२७)
येनैकदंष्ट्राग्रसमुद्धृतेयं (०७६-०२८)
धराचला धारयतीह सर्वम् (०७६-०२८)
ग्रस्त्वा स शेते सकलं जगद् यस् (०७६-०२८)
तम् ईड्यम् ईशं प्रणतो ऽस्मि विष्णुम् (०७६-०२८)
अंशावतीर्णेन च येन गर्भे (०७६-०२९)
हृतानि तेजांसि महासुराणाम् (०७६-०२९)
नमामि तं देवम् अनन्तम् ईशम् (०७६-०२९)
अशेषसंसारतरोः कुठारम् (०७६-०२९)
देवो जगद्योनिर् अयं महात्मा (०७६-०३०)
स षोडशांशेन महासुरेन्द्र (०७६-०३०)
सुरेन्द्रमातुर् जठरं प्रविष्टो (०७६-०३०)
हृतानि वस् तेन बले वपूंषि (०७६-०३०)
तात को ऽयं हरिर् नाम (०७६-०३१)
यतो न भयम् आगतम् (०७६-०३१)
सन्ति मे शतशो दैत्या (०७६-०३१)
वासुदेवबलाधिकाः (०७६-०३१)
विप्रचित्तिः शिबिः शङ्कुर् (०७६-०३२)
अयःशङ्कुस् तथैव च (०७६-०३२)
अयःशिरा अश्वशिरा (०७६-०३२)
भङ्गकारो महाहनुः (०७६-०३२)
प्रतापी प्रघसः शंभुः (०७६-०३३)
कुर्कुराक्षश् च दुर्जयः (०७६-०३३)
एते चान्ये च मे सन्ति (०७६-०३३)

दैतेया दानवास् तथा (०७६-०३३)
महाबला महावीर्या (०७६-०३४)
भूभारधरणक्षमाः (०७६-०३४)
येषाम् एकैकशः कृष्णो (०७६-०३४)
न वीर्यार्धेन संमितः (०७६-०३४)
पौत्रस्यैतद् वचः श्रुत्वा (०७६-०३५)
प्रह्लादो दैत्यपुङ्गवः (०७६-०३५)
धिग् धिग् इत्य् आह स बलिं (०७६-०३५)
वैकुण्ठाक्षेपवादिनम् (०७६-०३५)
विनाशम् उपयास्यन्ति (०७६-०३६)
मन्ये दैतेयदानवाः (०७६-०३६)
येषां त्वम् ईदृशो राजा (०७६-०३६)
दुर्बुद्धिर् अविवेकवान् (०७६-०३६)
देवदेवं महाभागं (०७६-०३७)
वासुदेवम् अजं विभुम् (०७६-०३७)
त्वाम् ऋते पापसंकल्पं (०७६-०३७)
को ऽन्य एवं वदिष्यति (०७६-०३७)
य एते भवता प्रोक्ताः (०७६-०३८)
समस्ता दैत्यदानवाः (०७६-०३८)
सब्रह्मकास् तथा देवाः (०७६-०३८)
स्थावरान्ताश् च भूतयः (०७६-०३८)
त्वं चाहं च जगच् चेदं (०७६-०३९)
साद्रिद्रुमनदीनदम् (०७६-०३९)
समुद्रद्वीपलोकाश् च (०७६-०३९)
यच् चेङ्गं यच् च नेङ्गति (०७६-०३९)
यस्यातिवन्द्यवन्द्यस्य (०७६-०४०)
व्यापिनः परमात्मनः (०७६-०४०)
एकांशांशकलाजन्म (०७६-०४०)
कस् तम् एवं प्रवक्ष्यति (०७६-०४०)
ऋते विनाशाभिमुखं (०७६-०४१)
त्वाम् एकम् अविवेकिनम् (०७६-०४१)
दुर्बुद्धिम् अजितात्मानं (०७६-०४१)
वृद्धानां शासनातिगम् (०७६-०४१)
शोच्यो ऽहं यस्य वै गेहे (०७६-०४२)
जातस् तव पिताधमः (०७६-०४२)
यस्य त्वम् ईदृशः पुत्रो (०७६-०४२)
देवदेवावमन्यकः (०७६-०४२)
तिष्ठत्व् अनेकसंसार- (०७६-०४३)
संहृताघविनाशनी (०७६-०४३)
कृष्णे भक्तिर् अहं तावद् (०७६-०४३)
अवेक्ष्यो भवतो न किम् (०७६-०४३)
न मे प्रियतरः कृष्णाद् (०७६-०४४)
अपि देहो ऽयम् आत्मनः (०७६-०४४)
इति जानात्य् अयं लोको (०७६-०४४)
भवांश् च दितिजाधमः (०७६-०४४)
जानन्न् अपि प्रियतरं (०७६-०४५)
प्राणेभ्यो ऽपि हरिं मम (०७६-०४५)
निन्दां करोषि च कथम् (०७६-०४५)
अकुर्वन् गौरवं मम (०७६-०४५)

विरोचनस् तव गुरुर् (०७६-०४६)
गुरुस् तस्याप्य् अहं बले (०७६-०४६)
ममापि सर्वजगतां (०७६-०४६)
गुरुर् नारायणो गुरुः (०७६-०४६)
निन्दां करोषि तस्मिंस् त्वं (०७६-०४७)
कृष्णे गुरुगुरोर् गुरौ (०७६-०४७)
यस्मात् तस्माद् इहैश्वर्याद् (०७६-०४७)
अचिराद् भ्रंशम् एष्यसि (०७६-०४७)
मा देवो मा जगन्नाथो (०७६-०४८)
बले मासौ जनार्दनः (०७६-०४८)
भवत्व् अहम् अवेक्ष्यस् ते (०७६-०४८)
प्रीतिमान् अत्र मे गुरुः (०७६-०४८)
एतावन्मात्रम् अप्य् अत्र (०७६-०४९)
निन्दता जगतो गुरुम् (०७६-०४९)
नापेक्षिता वयं यस्मात् (०७६-०४९)
तस्माच् छापं ददामि ते (०७६-०४९)
यथा मे शिरसश् छेदाद् (०७६-०५०)
इदं गुरुतरं बले (०७६-०५०)
त्वयोक्तम् अच्युताक्षेपि (०७६-०५०)
राज्यभ्रष्टस् तथा पत (०७६-०५०)
यथा न कृष्णाद् अपरं (०७६-०५१)
परित्राणं भवार्णवे (०७६-०५१)
तथाचिरेण पश्येयं (०७६-०५१)
भवन्तं राज्यविच्युतम् (०७६-०५१)
इति दैत्यपतिः श्रुत्वा (०७६-०५२)
गुरोर् वचनम् अप्रियम् (०७६-०५२)
प्रसादयाम् आस गुरुं (०७६-०५२)
प्रणिपत्य पुणः पुनः (०७६-०५२)
प्रसीद तात मा कोपं (०७६-०५३)
कुरु मोहहते मयि (०७६-०५३)
बलावलेपमत्तेन (०७६-०५३)
मयैतद् वाक्यम् ईरितम् (०७६-०५३)
मोहोपहतविज्ञानः (०७६-०५४)
पापो ऽहं दितिजोत्तम (०७६-०५४)
यच् छप्तो ऽस्मि दुराचारस् (०७६-०५४)
तत् साधु भवता कृतम् (०७६-०५४)
राज्यभ्रंशं वसुभ्रंशं (०७६-०५५)
संप्राप्स्यामीति न त्व् अहम् (०७६-०५५)
विषण्णो ऽस्मि यथा तात (०७६-०५५)
तवैवाविनये कृते (०७६-०५५)
त्रैलोक्यराज्यम् ऐश्वर्यम् (०७६-०५६)
अन्यद् वा नातिदुर्लभम् (०७६-०५६)
संसारे दुर्लभास् तात (०७६-०५६)
गुरवो ये भवद्विधाः (०७६-०५६)
तत् प्रसीद न मे कोपं (०७६-०५७)
कर्तुम् अर्हसि दैत्यप (०७६-०५७)
त्वत्कोपहेतुदुष्टो ऽहं (०७६-०५७)
परितप्ये न शापतः (०७६-०५७)
वत्स कोपेन मोहो मे (०७६-०५८)

जनितस् तेन ते मया (०७६-०५८)
शापो दत्तो विवेकश् च (०७६-०५८)
मोहेनापहृतो मम (०७६-०५८)
यदि मोहेन मे ज्ञानं (०७६-०५९)
नाक्षिप्तं स्यान् महासुर (०७६-०५९)
तत् कथं सर्वगं ज्ञानन् (०७६-०५९)
हरिं कंचिच् छापाम्य् अहम् (०७६-०५९)
यो ऽयं शापो मया दत्तो (०७६-०६०)
भवतो ऽसुरपुङ्गव (०७६-०६०)
भाव्यम् एतेन नूनं ते (०७६-०६०)
तस्मात् त्वं मा विषीदथाः (०७६-०६०)
अद्यप्रभृति देवेशे (०७६-०६१)
भगवत्य् अच्युते हरौ (०७६-०६१)
भवेथा भक्तिमान् ईशः (०७६-०६१)
स ते त्राता भविष्यति (०७६-०६१)
शापं प्राप्य च मां वीर (०७६-०६२)
संस्मरेथाः स्मृतस् त्वया (०७६-०६२)
तथा तथा यतिष्यामि (०७६-०६२)
श्रेयसा योक्ष्यते यथा (०७६-०६२)
एवम् उक्त्वा स दैत्येन्द्रो (०७६-०६३)
विरराम महामतिः (०७६-०६३)
अजायत स गोविन्दो (०७६-०६३)
भगवान् वामनाकृतिः (०७६-०६३)
अवतीर्णे जगन्नाथे (०७६-०६४)
तस्मिन् सर्वम् अशीशमत् (०७६-०६४)
यद् आसुरम् अभूद् दुःखं (०७६-०६४)
देवानाम् अदितेस् तथा (०७६-०६४)
ववुर् वाताः सुखस्पर्शा (०७६-०६५)
नीरजस्कम् अभून् नभः (०७६-०६५)
धर्मे च सर्वभूतानां (०७६-०६५)
तदा मतिर् अजायत (०७६-०६५)
नोद्वेगश् चाप्य् अभूद् देहे (०७६-०६६)
मनुजानां जनेश्वर (०७६-०६६)
तथा हि सर्वभूतानां (०७६-०६६)
भूम्यम्बरदिवौकसाम् (०७६-०६६)
तं जातमात्रं भगवान् (०७६-०६७)
ब्रह्मा लोकपितामहः (०७६-०६७)
जातकर्मादिकाः कृत्वा (०७६-०६७)
क्रियास् तुष्टाव पार्थिव (०७६-०६७)
जयाद्येश जयाजेय (०७६-०६८)
जय सर्वात्मकात्मक (०७६-०६८)
जय जन्मजरापेत (०७६-०६८)
जयानन्त जयाच्युत (०७६-०६८)
जयाजित जयाशेष (०७६-०६९)
जयाव्यक्त स्थिते जय (०७६-०६९)
परमार्थार्थ सर्वज्ञ (०७६-०६९)
ज्ञान ज्ञेयात्मनिःसृत (०७६-०६९)
जयाशेषजगत्साक्षिन्त् (०७६-०७०)
जय कर्तर् जगद्गुरोः (०७६-०७०)

जगतो जगदन्ते ऽन्त (०७६-०७०)
स्थितौ पालयिता जय (०७६-०७०)
जयाखिल जयाशेष (०७६-०७१)
जयाखिलहृदि स्थित (०७६-०७१)
जयादिमध्यान्तमय (०७६-०७१)
सर्वज्ञानमयोत्तम (०७६-०७१)
मुमुक्षुभिर् अनिर्देश्य (०७६-०७२)
स्वयंदृष्ट जयेश्वर (०७६-०७२)
योगिभिर् मुक्तिफलद (०७६-०७२)
दमादिगुणभूषणैः (०७६-०७२)
जयातिसूक्ष्म दुर्ज्ञेय (०७६-०७३)
जगत् स्थूल जगन्मय (०७६-०७३)
जय स्थूलातिसूक्ष्म त्वं (०७६-०७३)
जयातीन्द्रिय सेन्द्रिय (०७६-०७३)
जय स्वमायायोगस्थ (०७६-०७४)
शेषभोगशयाक्षर (०७६-०७४)
जयैकदंष्ट्राप्रान्तान्त (०७६-०७५)
समुद्धृतवसुंधर (०७६-०७४)
नृकेसरिन् जयाराति- (०७६-०७५)
वक्षःस्थलविदारण (०७६-०७५)
सांप्रतं जय विश्वात्मन् (०७६-०७५)
मायावामन केशव (०७६-०७५)
निजमायापटच्छन्न (०७६-०७६)
जगद्धातर् जनार्दन (०७६-०७६)
जयाचिन्त्य जयानेक- (०७६-०७६)
स्वरूपैकविध प्रभो (०७६-०७६)
वर्धस्व वर्धितानेक- (०७६-०७७)
विकारप्रकृते हरे (०७६-०७७)
त्वय्य् एषा जगताम् ईश (०७६-०७७)
संस्थिता धर्मपद्धतिः (०७६-०७७)
न त्वाम् अहं न चेशानो (०७६-०७८)
नेन्द्राद्यास् त्रिदशा हरे (०७६-०७८)
ज्ञातुम् ईशा न मुनयः (०७६-०७८)
सनकाद्या न योगिनः (०७६-०७८)
त्वन्मायापटसंवीते (०७६-०७९)
जगत्य् अत्र जगत्पते (०७६-०७९)
कस् त्वां वेत्स्यति सर्वेशं (०७६-०७९)
त्वत्प्रसादं विना नरः (०७६-०७९)
त्वम् एवाराधितो यस्य (०७६-०८०)
प्रसादसुमुखः प्रभो (०७६-०८०)
स एव केवलं देव (०७६-०८०)
वेत्ति त्वां नेतरो जनः (०७६-०८०)
तद् ईश्वरेश्वरेशान (०७६-०८१)
विभो वर्धस्व भावन (०७६-०८१)
प्रभावायास्य विश्वस्य (०७६-०८१)
विश्वात्मन् पृथुलोचन (०७६-०८१)
एवं स्तुतो हृषीकेशः (०७६-०८२)
स तदा वामनाकृतिः (०७६-०८२)
प्रहस्य भावगम्भीरम् (०७६-०८२)

उवाचाब्जसमुद्भवम् (०७६-०८२)
स्तुतो ऽहं भवता पूर्वम् (०७६-०८३)
इन्द्राद्यैः कश्यपेन च (०७६-०८३)
मया च वः प्रतिज्ञातम् (०७६-०८३)
इन्द्रस्य भुवनत्रयम् (०७६-०८३)
भूयश् चाहं स्तुतो ऽदित्या (०७६-०८४)
तस्याश् चापि प्रतिश्रुतम् (०७६-०८४)
यथा शक्राय दास्यामि (०७६-०८४)
त्रैलोक्यं हतकण्टकम् (०७६-०८४)
सो ऽहं तथा करिष्यामि (०७६-०८५)
यथेन्द्रो जगतः पतिः (०७६-०८५)
भविष्यति सहस्राक्षः (०७६-०८५)
सत्यम् एतद् ब्रवीमि ते (०७६-०८५)
ततः कृष्णाजिनं ब्रह्मा (०७६-०८६)
हृषीकेशाय दत्तवान् (०७६-०८६)
यज्ञोपवीतं भगवान् (०७६-०८६)
ददौ तस्मै बृहस्पतिः (०७६-०८६)
आषाढम् अददद् दण्डं (०७६-०८७)
मरीचिर् ब्रह्मणः सुतः (०७६-०८७)
कमण्डलुं वसिष्ठश् च (०७६-०८७)
कौश्यं वेदम् अथाङ्गिराः (०७६-०८७)
अक्षसूत्रं च पुलहः (०७६-०८७)
पुलस्त्यः सितवाससी (०७६-०८७)
उपतस्थुश् च तं वेदाः (०७६-०८८)
प्रणवस्वरभूषणाः (०७६-०८८)
शास्त्राण्य् अशेषाणि तथा (०७६-०८८)
सांख्ययोगोक्तयश् च याः (०७६-०८८)
स वामनो जटी दण्डी (०७६-०८९)
छत्त्री धृतकमण्डलुः (०७६-०८९)
सर्वदेवमयो भूप (०७६-०८९)
बलेर् अध्वरम् अभ्ययात् (०७६-०८९)
यत्र यत्र पदं भूप (०७६-०९०)
भूभागे वामनो ददौ (०७६-०९०)
ददाति भूमिर् विवरं (०७६-०९०)
तत्र तत्रातिपीडिता (०७६-०९०)
स वामनो जडगतिर् (०७६-०९१)
मृदु गच्छन् सपर्वताम् (०७६-०९१)
साब्धिद्वीपवतीं सर्वां (०७६-०९१)
चालयाम् आस मेदिनीम् (०७६-०९१)
ततः संशयम् आपन्नाः (०७६-*(१२४))
सर्वे दैतेयदानवाः (०७६-*(१२४))
सपर्वतवनाम् उर्वीं (०७७-००१)
दृष्ट्वा संक्षुभितां बलिः (०७७-००१)
पप्रच्छोशनसं शुक्रं (०७७-००१)
प्रणिपत्य कृताञ्जलिः (०७७-००१)
आचार्य क्षोभम् आयाति (०७७-००२)
साब्धिभूभृद्वरा मही (०७७-००२)
कस्माच् च नासुरान् भागान् (०७७-००२)
प्रतिगृह्णन्ति वह्नयः (०७७-००२)

इति पृष्टो ऽथ बलिना (०७७-००३)
काव्यो वेदविदां वरः (०७७-००३)
उवाच दैत्याधिपतिं (०७७-००३)
चिरं ध्यात्वा महामतिः (०७७-००३)
अवतीर्णो जगद्योनिः (०७७-००४)
कश्यपस्य गृहे हरिः (०७७-००४)
वामनेनेह रूपेण (०७७-००४)
परमात्मा सनातनः (०७७-००४)
स नूनं यज्ञम् आयाति (०७७-००५)
तव दानवपुङ्गव (०७७-००५)
तत्पदन्यासविक्षोभाद् (०७७-००५)
इयं प्रचलिता मही (०७७-००५)
कम्पन्ते गिरयश् चामी (०७७-००६)
क्षुभिता मकरालयाः (०७७-००६)
नैनं भूतपतिं भूमिः (०७७-००६)
समर्था वोढुम् ईश्वरम् (०७७-००६)
सदेवासुरगन्धर्व- (०७७-००७)
यक्षराक्षसपन्नगा (०७७-००७)
अनेनैव धृता भूमिर् (०७७-००७)
आपो ऽग्निः पवनो नभः (०७७-००७)
धारयत्य् अखिलान् देव- (०७७-००७)
मनुष्यादीन् महासुर (०७७-००७)
इयम् अस्य जगद्धातुर् (०७७-००८)
माया कृष्णस्य गह्वरी (०७७-००८)
धार्यधारकभावेन (०७७-००८)
यया संपिण्डितं जगत् (०७७-००८)
तत्संनिधानाद् असुरा (०७७-००९)
न भागार्हाः सुरद्विषः (०७७-००९)
भुञ्जते चासुरान् भागान् (०७७-००९)
अमी ते न तवाग्नयः (०७७-००९)
शुक्रस्य वचनं श्रुत्वा (०७७-*(१२५))
हृष्टरोमाब्रवीद् बलिः (०७७-*(१२५))
धन्यो ऽहं कृतपुण्यश् च (०७७-०१०)
यन् मे यज्ञपतिः स्वयम् (०७७-०१०)
यज्ञम् अभ्यागतो ब्रह्मन् (०७७-०१०)
मत्तः को ऽन्यो ऽधिकः पुमान् (०७७-०१०)
यं योगिनः सदोद्युक्ताः (०७७-०११)
परमात्मानम् अव्ययम् (०७७-०११)
द्रष्टुम् इच्छन्ति देवो ऽसौ (०७७-०११)
मदध्वरम् उपैष्यति (०७७-०११)
होता भागप्रदो यस्य (०७७-०१२)
यम् उद्गाता च गायति (०७७-०१२)
तम् अध्वरेश्वरं विष्णुं (०७७-०१२)
मत्तः को ऽन्य उपैष्यति (०७७-०१२)
सर्वेश्वरेश्वरे विष्णौ (०७७-०१३)
ममाध्वरम् उपागते (०७७-०१३)
यन् मया चार्य कर्तव्यं (०७७-०१३)
तन् ममादेष्टुम् अर्हसि (०७७-०१३)
यज्ञभागभुजो देवा (०७७-०१४)

वेदप्रामाण्यतो ऽसुर (०७७-०१४)
त्वया तु दानवा दैत्या (०७७-०१४)
यज्ञभागभुजः कृताः (०७७-०१४)
अयं च देवः सत्त्वस्थः (०७७-०१५)
करोति स्थितिपालनम् (०७७-०१५)
निसृष्टेश् चायम् अन्ते च (०७७-०१५)
स्वयम् अत्ति प्रजाः प्रभुः (०७७-०१५)
त्वयानुबन्धी भविता (०७७-०१६)
नूनं विष्णुः स्थितौ स्थितः (०७७-०१६)
विदित्वैतन् महाभाग (०७७-०१६)
कुरु यत् ते मनोगतम् (०७७-०१६)
त्वयास्य दैत्याधिपते (०७७-०१७)
स्वल्पके ऽपि हि वस्तुनि (०७७-०१७)
प्रतिज्ञा नैव वोढव्या (०७७-०१७)
वाच्यं साम तथाफलम् (०७७-०१७)
कृतकृत्यस्य देवस्य (०७७-*(१२६))
देवार्थं चैव कुर्वतः (०७७-*(१२६))
नालं दातुं धनं देवेत्य् (०७७-०१८)
एवं वाच्यं तु याचतः (०७७-०१८)
कृष्णस्य देवभूत्यर्थं (०७७-०१८)
प्रवृत्तस्य महासुर (०७७-०१८)
ब्रह्मन् कथम् अहं ब्रूयाम् (०७७-०१९)
अन्येनापि हि याचितः (०७७-०१९)
नास्तीति किमु देवेन (०७७-०१९)
संसाराघौघहारिणा (०७७-०१९)
व्रतोपवासैर् विविधैर् (०७७-०२०)
यः प्रतिग्राह्यते हरिः (०७७-०२०)
स चेद् वक्ष्यति देहीति (०७७-०२०)
गोविन्दः किम् अतो ऽधिकम् (०७७-०२०)
यदर्थम् उपहाराढ्या (०७७-०२१)
दमशौचगुणान्वितैः (०७७-०२१)
यज्ञाः क्रियन्ते देवेशः (०७७-०२१)
स मां देहीति वक्ष्यति (०७७-०२१)
तत् साधु सुकृतं कर्म (०७७-०२२)
तपः सुचरितं च नः (०७७-०२२)
यन् मया दत्तम् ईशेशः (०७७-०२२)
स्वयम् आदास्यते हरिः (०७७-०२२)
नास्तीत्य् अहं गुरो वक्ष्ये (०७७-०२३)
तम् अप्य् आगतम् ईश्वरम् (०७७-०२३)
यदि तद् वञ्च्यते प्राप्ते (०७७-०२३)
नूनम् अस्मद्विधः फलैः (०७७-०२३)
यज्ञे ऽस्मिन् यदि यज्ञेशो (०७७-०२४)
याचते मां जनार्दनः (०७७-०२४)
निजमूर्धानम् अप्य् अद्य (०७७-०२४)
तद् दास्याम्य् अविचारितम् (०७७-०२४)
नास्तीति यन् मया नोक्तम् (०७७-०२५)
अन्येषाम् अपि याचताम् (०७७-०२५)
वक्ष्यामि कथम् आयाते (०७७-०२५)
तद् अनभ्यस्तम् अच्युते (०७७-०२५)

श्लाघ्य एव हि धीराणां (०७७-०२६)
दानाद् आपत्समागमः (०७७-०२६)
नाबाधाकारि यद् दानं (०७७-०२६)
तद् अङ्गमलवत् कथम् (०७७-०२६)
मद्राज्ये नासुखी कश्चिन् (०७७-०२७)
न दरिद्रो न चातुरः (०७७-०२७)
नातृषितो न चोद्विग्नो (०७७-०२७)
न स्रगादिविवर्जितः (०७७-०२७)
हृष्टतुष्टः सुगन्धी च (०७७-०२८)
तृप्तः सर्वसुखान्वितः (०७७-०२८)
जनः सर्वो महाभाग (०७७-०२८)
किमुताहं सदा सुखी (०७७-०२८)
एतद् विशिष्टपात्रोत्थं (०७७-०२९)
दानबीजफलं मम (०७७-०२९)
विदितं भृगुशार्दूल (०७७-०२९)
मयैतत् त्वत्प्रसादतः (०७७-०२९)
एतद् विजानतो दान- (०७७-०३०)
बीजं पतति चेद् गुरो (०७७-०३०)
जनार्दने महापात्रे (०७७-०३०)
किं न प्राप्तं ततो मया (०७७-०३०)
मत्तो दानम् अवाप्येशो (०७७-०३१)
यदि पुष्णाति देवताः (०७७-०३१)
उपभोगान्वयगुणं (०७७-०३१)
दानं श्लाघ्यतरं ततः (०७७-०३१)
मत्प्रसादपरो नूनं (०७७-०३२)
यज्ञेनाराधितो हरिः (०७७-०३२)
तेनाभ्येति न संदेहो (०७७-०३२)
दर्शनाद् उपकारकृत् (०७७-०३२)
अथ कोपेन वाभ्येति (०७७-०३३)
देवभागोपरोधिनम् (०७७-०३३)
मां निहन्तुम् अतो ऽपि स्याद् (०७७-०३३)
वधः श्लाघ्यतरो ऽच्युतात् (०७७-०३३)
यन्मयं सर्वम् एवेदं (०७७-०३४)
नाप्राप्य यस्य विद्यते (०७७-०३४)
स मां याचितुम् अभ्येति (०७७-०३४)
नानुग्रहम् ऋते हरिः (०७७-०३४)
यः सृजत्य् आत्मभूः सर्वं (०७७-०३५)
चेतसैवापहन्ति च (०७७-०३५)
स मां हन्तुं हृषीकेशः (०७७-०३५)
कथं यत्नं करिष्यति (०७७-०३५)
एतद् विदित्वा तु गुरो (०७७-०३६)
दानविघ्नपरेण मे (०७७-०३६)
नैव भाव्यं जगन्नाथे (०७७-०३६)
गोविन्दे समुपस्थिते (०७७-०३६)
इत्य् एवं वदतस् तस्य (०७७-०३७)
प्राप्तस् तत्र जगपतिः (०७७-०३७)
सर्वदेवमयो ऽचिन्त्यो (०७७-०३७)
मायावामनरूपधृक् (०७७-०३७)
तं दृष्ट्वा यज्ञवाटान्तः- (०७७-०३८)

प्रविष्टम् असुराः प्रभुम् (०७७-०३८)
जग्मुः प्रभावतः क्षोभं (०७७-०३८)
तेजसा तस्य निष्प्रभाः (०७७-०३८)
जेपुश् च मुनयस् तत्र (०७७-०३९)
ये समेता महाध्वरे (०७७-०३९)
बलिश् चैवाखिलं जन्म (०७७-०३९)
मेने सफलम् आत्मनः (०७७-०३९)
ततः संक्षोभम् आपन्नो (०७७-०४०)
न कश्चित् किंचिद् उक्तवान् (०७७-०४०)
प्रत्येको देवदेवेशं (०७७-०४०)
पूजयाम् आस चेतसा (०७७-०४०)
अथासुरपतिं प्रह्वं (०७७-०४१)
दृष्ट्वा मुनिवरांश् च तान् (०७७-०४१)
देवदेवपतिः साक्षाद् (०७७-०४१)
विष्णुर् वामनरूपधृक् (०७७-०४१)
तुष्टाव यज्ञं वह्निंश् च (०७७-०४२)
यजमानम् अथ र्त्विजः (०७७-०४२)
यज्ञकराधिकारस्थान् (०७७-०४२)
सदस्यान् द्रव्यसंपदम् (०७७-०४२)
ततः प्रसन्नम् अखिलं (०७७-०४३)
वामनं प्रति तत्क्षणात् (०७७-०४३)
यज्ञवाटस्थितं वीरं (०७७-०४३)
साधु साध्व् इत्य् उदीरयन् (०७७-०४३)
स चार्घम् आदाय बलिः (०७७-०४४)
प्रोद्भूतपुलकस् तदा (०७७-०४४)
पूजयाम् आस गोविन्दं (०७७-०४४)
प्राह चेदं वचो ऽसुरः (०७७-०४४)
सुवर्णरत्नसंघातं (०७७-०४५)
गजाश्वम् अमितं तथा (०७७-०४५)
स्त्रियो वस्त्राण्य् अलंकारान् (०७७-०४५)
गावो ग्रामांश् च पुष्कलान् (०७७-०४५)
सर्वस्वं सकलाम् उर्वीं (०७७-०४६)
भवतो वा यद् ईप्सितम् (०७७-०४६)
तद् ददामि वृणुष्व त्वं (०७७-०४६)
ममार्थी सततं प्रियः (०७७-०४६)
इत्य् उक्तो दैत्यपतिना (०७७-०४७)
प्रीतिगर्वान्वितं वचः (०७७-०४७)
प्राह सस्मितगम्भीरं (०७७-०४७)
भगवान् वामनाकृतिः (०७७-०४७)
ममाग्निशरणार्थाय (०७७-०४८)
देहि राजन् पदत्रयम् (०७७-०४८)
सुवर्णग्रामरत्नादि (०७७-०४८)
तद् अर्थिभ्यः प्रदीयताम् (०७७-०४८)
त्रिभिः प्रयोजनं किं ते (०७७-०४९)
पदैः पदवतां वर (०७७-०४९)
शतं शतसहस्रं वा (०७७-०४९)
पदानां मार्गतां भवान् (०७७-०४९)
एतावता दैत्यपते (०७७-०५०)
कृतकृत्यो ऽस्मि मार्गताम् (०७७-०५०)

अन्येषाम् अर्थिनां वित्तम् (०७७-०५०)
इच्छया दास्यते भवान् (०७७-०५०)
एतच् छ्रुत्वा तु गदितं (०७७-०५१)
वामनस्य महात्मनः (०७७-०५१)
वाचयाम् आस तत् तस्मै (०७७-०५१)
वामनाय पदत्रयम् (०७७-०५१)
पाणौ तु पतिते तोये (०७७-०५२)
वामनो भूतभावनः (०७७-०५२)
सर्वदेवमयं रूपं (०७७-०५२)
दर्शयाम् आस तत्क्षणात् (०७७-०५२)
चन्द्रसूर्यौ च नयने (०७७-०५३)
द्यौः शिरश् चरणौ क्षितिः (०७७-०५३)
पादाङ्गुल्यः पिशाचाश् च (०७७-०५३)
हस्ताङ्गुल्यश् च गुह्यकाः (०७७-०५३)
विश्वेदेवाश् च जानुस्था (०७७-०५४)
जङ्घे साध्याः सुरोत्तमाः (०७७-०५४)
यक्षा नखेषु संभूता (०७७-०५४)
रेखास्व् अप्सरसः स्थिताः (०७७-०५४)
दृष्टिर् धिष्ण्यान्य् अशेषाणि (०७७-०५५)
केशाः सूर्यांशवः प्रभो (०७७-०५५)
तारका रोमकूपाणि (०७७-०५५)
रोमाणि च महर्षयः (०७७-०५५)
बाहवो विदिशस् तस्य (०७७-०५६)
दिशः श्रोत्रं महात्मनः (०७७-०५६)
अश्विनौ श्रवणौ तस्य (०७७-०५६)
नासा वायुर् महाबलः (०७७-०५६)
प्रसादश् चन्द्रमा देवो (०७७-०५७)
मनो धर्मः समाश्रितः (०७७-०५७)
सत्यम् अस्याभवद् वाणी (०७७-०५७)
जिह्वा देवी सरस्वती (०७७-०५७)
ग्रीवादितिर् देवमाता (०७७-०५८)
विद्यास् तद्वलयस् तथा (०७७-०५८)
स्वर्गद्वारम् अभून् मैत्रं (०७७-०५८)
त्वष्टा पूषा च वै भ्रुवौ (०७७-०५८)
मुखं वैश्वानरश् चास्य (०७७-०५९)
वृषणौ तु प्रजापतिः (०७७-०५९)
हृदयं च परं ब्रह्म (०७७-०५९)
पुंस्त्वं वै कश्यपो मुनिः (०७७-०५९)
पृष्ठे ऽस्य वसवो देवा (०७७-०६०)
मरुतः सर्वसंधिषु (०७७-०६०)
सर्वसूक्तानि दशना (०७७-०६०)
ज्योतींषि विमलप्रभाः (०७७-०६०)
वक्षःस्थले तथा रुद्रो (०७७-०६१)
धैर्ये चास्य महार्णवः (०७७-०६१)
उदरे चास्य गन्धर्वा (०७७-०६१)
मरुतश् च महाबलाः (०७७-०६१)
लक्ष्मीर् मेधा धृतिः कान्तिः (०७७-०६१)
सर्वविद्याश् च वै कटिः (०७७-०६१)
सर्वज्योतींषि यानीह (०७७-०६२)

तपश् च परमं महत् (०७७-०६२)
तस्य देवातिदेवस्य (०७७-०६२)
तेजः प्रोद्भूतम् उत्तमम् (०७७-०६२)
स्तनौ कुक्षौ च वेदाश् च (०७७-०६३)
जानू चास्य महामखाः (०७७-०६३)
इष्टयः पशुबन्धाश् च (०७७-०६३)
द्विजानां चेष्टितानि च (०७७-०६३)
तस्य देवमयं रूपं (०७७-०६४)
दृष्ट्वा विष्णोर् महाबलाः (०७७-०६४)
उपसर्पन्ति दैतेयाः (०७७-०६४)
पतंगा इव पावकम् (०७७-०६४)
प्रमथ्य सर्वान् असुरान् (०७७-०६५)
पादहस्ततलैर् विभुः (०७७-०६५)
कृत्वा रूपं महाकायं (०७७-०६५)
स जहाराशु मेदिनीम् (०७७-०६५)
तस्य विक्रमतो भुमिं (०७७-०६६)
चन्द्रादित्यौ स्तनान्तरे (०७७-०६६)
नभो विक्रममाणस्य (०७७-०६६)
सक्थिदेशे स्थिताव् उभौ (०७७-०६६)
परं विक्रममाणस्य (०७७-०६७)
जानुमूले प्रभाकरौ (०७७-०६७)
विष्णोर् आस्ताम् महीपाल (०७७-०६७)
देवपालनकर्मणि (०७७-०६७)
जित्वा लोकत्रयं कृत्स्नं (०७७-०६८)
हत्वा चासुरपुङ्गवान् (०७७-०६८)
पुरंदराय त्रैलोक्यं (०७७-०६८)
ददौ विष्णुर् उरुक्रमः (०७७-०६८)
सुतलं नाम पातालम् (०७७-०६९)
अधस्ताद् वसुधातलात् (०७७-०६९)
बलेर् दत्तं भगवता (०७७-०६९)
विष्णुना प्रभविष्णुना (०७७-०६९)
अथ दैत्येश्वरं प्राह (०७७-०७०)
विष्णुः सर्वेश्वरेश्वरः (०७७-०७०)
यत् त्वया सलिलं दत्तं (०७७-०७१)
गृहीतं पाणिना मया (०७७-०७१)
कल्पप्रमाणं तस्मात् ते (०७७-०७१)
भविष्यत्य् आयुर् उत्तमम् (०७७-०७१)
वैवस्वते तथातीते (०७७-०७२)
बले मन्वन्तरे ततः (०७७-०७२)
सावर्णके च संप्राप्ते (०७७-०७२)
भवान् इन्द्रो भविष्यति (०७७-०७२)
सांप्रतं देवराजाय (०७७-०७३)
त्रैलोक्यम् अखिलं मया (०७७-०७३)
दत्तं चतुर्युगानां वै (०७७-०७३)
साधिका ह्य् एकसप्ततिः (०७७-०७३)
नियन्तव्या मया सर्वे (०७७-०७४)
ये तस्य परिपन्थिनः (०७७-०७४)
तेनाहं परया भक्त्या (०७७-०७४)
पूर्वम् आराधितो बले (०७७-०७४)

सुतलं नाम पातालं (०७७-०७५)
तम् आसाद्य मनोरमम् (०७७-०७५)
वसासुर ममादेशं (०७७-०७५)
यथावत् परिपालयन् (०७७-०७५)
तत्र दिव्यवनोपेते (०७७-०७६)
प्रासादशतसंकुले (०७७-०७६)
प्रोत्फुल्लपद्मसरसि (०७७-०७६)
स्रवच्छुद्धसरिद्वरे (०७७-०७६)
सुगन्धिधूपसंबाधे (०७७-०७७)
वराभरणभूषितः (०७७-०७७)
स्रक्चन्दनादिदिग्धाङ्गो (०७७-०७७)
नृत्यगीतमनोरमैः (०७७-०७७)
उपभुञ्जन् महाभोगान् (०७७-०७८)
विविधान् दानवेश्वर (०७७-०७८)
ममाज्ञया कालम् इमं (०७७-०७८)
तिष्ठ स्त्रीशतसंवृतः (०७७-०७८)
यावत् सुरैश् च विप्रैश् च (०७७-०७९)
न विरोधं करिष्यसि (०७७-०७९)
तावद् एतान् महाभोगान् (०७७-०७९)
अवाप्स्यस्य् असुरोत्तम (०७७-०७९)
यदा च देवविप्राणां (०७७-०८०)
विरुद्धान्य् आचरिष्यसि (०७७-०८०)
बन्धिष्यन्ति तथा पाशा (०७७-०८०)
वारुणास् त्वाम् असंशयम् (०७७-०८०)
एतद् विदित्वा भवता (०७७-०८१)
मयाज्ञप्तम् अशेषतः (०७७-०८१)
न विरोधः सुरैः कार्यो (०७७-०८१)
विप्रैर् वा दैत्यसत्तम (०७७-०८१)
इत्य् एवम् उक्तो देवेन (०७७-०८२)
विष्णुना प्रभविष्णुना (०७७-०८२)
बलिः प्राह महाराज (०७७-०८२)
प्रणिपत्य कृताञ्जलिः (०७७-०८२)
तत्रासतो मे पाताले (०७७-०८३)
भगवन् भवदाज्ञया (०७७-०८३)
किं भविष्यत्य् उपादानम् (०७७-०८३)
उपभोगोपपादकम् (०७७-०८३)
आप्यायितो येन देव (०७७-*(१२७))
स्मरेयं त्वाम् अहं सदा (०७७-*(१२७))
दानान्य् अविधिदत्तानि (०७७-०८४)
श्राद्धान्य् अश्रोत्रियाणि च (०७७-०८४)
हुतान्य् अश्रद्धया यानि (०७७-०८४)
तानि दास्यन्ति ते फलम् (०७७-०८४)
अदक्षिणास् तथा यज्ञाः (०७७-०८५)
क्रियाश् चाविधिना कृताः (०७७-०८५)
फलानि तव दास्यन्ति (०७७-०८५)
अधीतान्य् अव्रतानि च (०७७-०८५)
बलेर् वरम् इदं दत्त्वा (०७७-०८६)
शक्राय त्रिविदं तथा (०७७-०८६)
व्यापिना तेन रूपेण (०७७-०८६)

जगामादर्शनं हरिः (०७७-०८६)
शशास च यथा पूर्वम् (०७७-०८७)
इन्द्रस् त्रैलोक्यम् ऊर्जितम् (०७७-०८७)
सिषेव च परान् कामान् (०७७-०८७)
बलिः पातालम् आश्रितः (०७७-०८७)
इत्य् एतद् देवदेवस्य (०७७-०८८)
विष्णोर् माहात्म्यम् उत्तमम् (०७७-०८८)
वामनस्य पठेद् यस् तु (०७७-०८८)
सर्वपापैः प्रमुच्यते (०७७-०८८)
बलिप्रह्लादसंवादं (०७७-०८९)
मन्त्रितं बलिशुक्रयोः (०७७-०८९)
बलिविष्ण्वोश् च कथितं (०७७-०८९)
यः स्मरिष्यति मानवः (०७७-०८९)
नाधयो व्याधयो वास्य (०७७-०९०)
न च मोहाकुलं मनः (०७७-०९०)
भविष्यति कुरुश्रेष्ठ (०७७-०९०)
पुंसस् तस्य कदाचन (०७७-०९०)
च्युतराज्यो निजं राज्यम् (०७७-०९१)
इष्टप्राप्तिं वियोगवान् (०७७-०९१)
अवाप्नोति महाभाग (०७७-०९१)
नरः श्रुत्वा कथाम् इमाम् (०७७-०९१)
पाताले निवसन् वीरस् (०७८-००१)
तदा वैरोचनिर् बलिः (०७८-००१)
कामोपभोगसंप्राप्त्या (०७८-००१)
मुदं प्राप परां विभुः (०७८-००१)
अलंबुषा मिश्रकेशी (०७८-००२)
पुण्डरीकाथ वामना (०७८-००२)
घृताची मेनका रम्भा (०७८-००२)
ननृतुस् तस्य संनिधौ (०७८-००२)
प्रजगुर् देवगन्धर्वा (०७८-००३)
विश्वावसुपुरोगमाः (०७८-००३)
तुष्टुवुश् च महाभाग (०७८-००३)
बलिं सिद्धाः सचारणाः (०७८-००३)
तस्मिन् संगीतगीता तु (०७८-००४)
वीणावेणुरवाकुले (०७८-००४)
स्रगादिभूषितो दैत्यः (०७८-००४)
पपौ पानम् अनुत्तमम् (०७८-००४)
शर्करासवमाध्विकां (०७८-००५)
पुष्पासवफलासवम् (०७८-००५)
दिव्याः प्रसन्नाश् च सुरास् (०७८-००५)
तदर्हाणि मधूनि च (०७८-००५)
परावदंशान् मधुरांल् (०७८-००६)
लवणांस् तिक्तकाण् कटून् (०७८-००६)
कषायांश् च महाराज (०७८-००६)
सुमृष्टान्य् अपराणि च (०७८-००६)
सुहृट्सुजनसंबन्धि- (०७८-००७)
भृत्यवर्गसमन्वितः (०७८-००७)
बुभुजे पातालगतस् (०७८-००७)
तदा वैरोचनिर् बलिः (०७८-००७)

प्रासादाः काञ्चनाः सर्वे (०७८-००८)
सुवर्णमणिमण्डिताः (०७८-००८)
स्फाटिकामलसोपाना (०७८-००८)
मुक्ताहारशतोज्ज्वलाः (०७८-००८)
तेषु सर्वेषु दैतेया (०७८-००९)
बलेः संबन्धिबान्धवाः (०७८-००९)
नृत्यवाद्यादिमुदिता (०७८-००९)
बुभुजुर् विषयान् प्रियान् (०७८-००९)
बलिश् च भगवान् दैत्यो (०७८-०१०)
दैत्योरगशतैर् वृतः (०७८-०१०)
उपगीयमानो बुभुजे (०७८-०१०)
यथेष्टं विषयान् प्रियान् (०७८-०१०)
पत्नी विन्ध्यावली नाम (०७८-०११)
तस्य दैत्यपतेर् अभूत् (०७८-०११)
सर्वलक्षणसंपूर्णा (०७८-०११)
श्रीर् इवाब्जं विनापरा (०७८-०११)
न देवी नापि गन्धर्वी (०७८-०१२)
नाप्सरा न च मानुषी (०७८-०१२)
तस्या रूपेण सदृशी (०७८-०१२)
बभूव मनुजेश्वर (०७८-०१२)
सा तु पीनायतश्रोणी (०७८-०१३)
मृद्वङ्गी मधुरस्वरा (०७८-०१३)
घनोन्नतकुचा सुभ्रूः (०७८-०१३)
सस्मितायतलोचना (०७८-०१३)
मृद्वल्पपाणिपादाब्जा (०७८-०१४)
सुमध्या गजगामिनी (०७८-०१४)
सुकेशी सुमुखी श्यामा (०७८-०१४)
सर्वैर् योषिद्गुणैर् युता (०७८-०१४)
तनया मेरुसावर्णेर् (०७८-०१५)
दौहित्री मृगमोकिनः (०७८-०१५)
वपुषा रूपसंपदा (०७८-*(१२८))
पौतना मृगलोचना (०७८-*(१२८))
पत्नी सहस्रद्वितये (०७८-०१५)
प्रधाना तस्य साभवत् (०७८-०१५)
तया तु रमतस् तस्य (०७८-०१६)
रमणीये रसातले (०७८-०१६)
शक्तिर् आसीद् अनुदिनं (०७८-०१६)
विवेकप्रतिलोमिनी (०७८-०१६)
कदाचिद् रमतस् तस्य (०७८-०१७)
दैत्यराजस्य पार्थिव (०७८-०१७)
तीक्ष्णांशुर् मध्यमां वीथीं (०७८-०१७)
ययौ वैषुवतीं रविः (०७८-०१७)
यदा यदा च विषुवं (०७८-०१८)
भास्करः प्रतिपद्यते (०७८-०१८)
तदा तदा हरेश् चक्रं (०७८-०१८)
पाताले परिवर्तते (०७८-०१८)
स्रवन्ति योषितां गर्भास् (०७८-०१९)
तस्य धारांशुतापिताः (०७८-०१९)
सहसा दैत्यपत्नीनां (०७८-०१९)

यासु पुंसां समुद्भवः (०७८-०१९)
निस्तेजसो दैत्यभटा (०७८-०१९)
भवन्ति च महीपते (०७८-०१९)
तद् दृष्ट्वा सहसायान्तम् (०७८-०२०)
आदित्यशततेजसम् (०७८-०२०)
ज्वालामालासुदुःप्रेक्ष्यं (०७८-०२०)
विष्णुचक्रं सुदर्शनम् (०७८-०२०)
हाहाकृतम् अभूत् सर्वं (०७८-०२०)
पातालम् अरिसूदन (०७८-०२०)
जेपुर् ये मुनयस् तत्र (०७८-०२१)
सार्घपात्रा महोरगाः (०७८-०२१)
बभूवुः प्रणताश् चान्ये (०७८-०२१)
सिद्धगन्धर्वचारणाः (०७८-०२१)
वैक्लव्यं चागताः सर्वाः (०७८-०२१)
स्त्रियः परपुरंजय (०७८-०२१)
तद् दृष्ट्वा व्याकुलीभूतं (०७८-०२२)
पातालम् असुरास् ततः (०७८-०२२)
ये तस्थुः पौरुषपरास् (०७८-०२२)
ते हताः शतनेमिना (०७८-०२२)
भ्राम्यता तेन चक्रेण (०७८-०२३)
सप्तलोकविचारिणा (०७८-०२३)
समस्तजगदाधार- (०७८-०२३)
करमुक्तेन वेगिना (०७८-०२३)
तन् निषूदितदैत्यौघं (०७८-०२४)
दैत्यस्त्रीगर्भहानिदम् (०७८-०२४)
श्रुत्वा चक्रं महाचक्रो (०७८-०२४)
निश्चक्राम गृहाद् बलिः (०७८-०२४)
आः किम् एतद् इतीत्य् उक्त्वा (०७८-०२५)
स तु मद्यमहोद्धतः (०७८-०२५)
विमलं खड्गम् आदाय (०७८-०२५)
शतचन्द्रं च भानुमत् (०७८-०२५)
निर्यान्तम् अथ वेगेन (०७८-०२६)
तम् उदारपराक्रमम् (०७८-०२६)
विध्यावली नाम शुभा (०७८-०२६)
दधार दयितं पतिम् (०७८-०२६)
उवाच च परिष्वज्य (०७८-०२७)
क्रोधताम्रेक्षणं बलिम् (०७८-०२७)
कल्याणी गुणदोषज्ञा (०७८-०२७)
प्रणयान् मृदुभाषिणी (०७८-०२७)
दैत्यराज न कोपस्य (०७८-०२८)
वशम् आगन्तुम् अर्हसि (०७८-०२८)
विमृश्य तज्ज्ञः सामादीन् (०७८-०२८)
प्रयुञ्जीत बलाबलम् (०७८-०२८)
किम् एतत् कस्य वा कुत्र (०७८-०२९)
किंनिमित्तम् इहागतम् (०७८-०२९)
चक्रम् इत्थं विचार्य त्वं (०७८-०२९)
क्रोधं याहि प्रशाम्य वा (०७८-०२९)
एतत् किल जगद्धातुश् (०७८-०३०)
चक्रं विष्णोः सुदर्शनम् (०७८-०३०)

प्रतिषण्मासम् अभ्येति (०७८-०३०)
दैत्यगर्भविनाशनम् (०७८-०३०)
पुङ्गर्भान् निखिलान् एतद् (०७८-०३१)
दानवानां महासुर (०७८-०३१)
विनाशयत्य् अनन्तरां (०७८-०३१)
सर्वदुष्टनिबर्हणम् (०७८-०३१)
करोति दुःखम् अतुलं (०७८-०३२)
घातनात् प्रतिपक्षजम् (०७८-०३२)
पुरुषाणां न सर्वत्र (०७८-०३२)
संस्थिता जगतः पतेः (०७८-०३२)
मयि त्वयि तथान्यत्र (०७८-०३३)
यथा विष्णुर् व्यवस्थितः (०७८-०३३)
तस्यैतच् चक्रम् आयान्तं (०७८-०३३)
पुरुषः को न पूजयेत् (०७८-०३३)
यस्याधिक्षेपजा राजंस् (०७८-०३४)
तव त्रैलोक्यविच्युतिः (०७८-०३४)
तस्य चक्रं जगन्मूर्तेः (०७८-०३४)
समुपैषि रुषा कथम् (०७८-०३४)
सदृशे पुरुषे क्रोधं (०७८-०३५)
नरः कुर्वीत दैत्यप (०७८-०३५)
न तु सर्वेश्वरे विष्णौ (०७८-०३५)
यत्र सर्वं प्रतिष्ठितम् (०७८-०३५)
तत् प्रसीद महाभाग (०७८-०३६)
समुपैहि जगत्पतिम् (०७८-०३६)
शरण्यं शरणं विष्णुं (०७८-०३६)
यं प्रणम्य न सीदति (०७८-०३६)
यस्मिन् प्रसन्ने त्रैलोक्यं (०७८-०३७)
त्वत्तः प्राप्तः शचीपतिः (०७८-०३७)
भ्रष्टश् च यदधिक्षेपात् (०७८-०३७)
तं त्वं शरणम् आव्रज (०७८-०३७)
यत्र सर्वेश्वरे सर्वं (०७८-०३८)
सर्वभूते जगत् स्थितम् (०७८-०३८)
तस्य चक्रम् उपैहि त्वं (०७८-०३८)
विनयाद् असुराधिप (०७८-०३८)
सर्वकारणभूतस्य (०७८-०३९)
देवदेवस्य चक्रिणः (०७८-०३९)
कश् चक्रम् अतिवर्तेत (०७८-०३९)
मर्त्यधर्मा महासुर (०७८-०३९)
चक्रम् अत्र जगद्धातुः (०७८-०४०)
करोति स्थितिपालनम् (०७८-०४०)
विपक्षासुरसंभूति- (०७८-०४०)
गर्भविस्रंसनात् प्रभो (०७८-०४०)
प्रसाद्य चक्रनामानं (०७८-०४१)
गोविन्दं जगतो गुरुम् (०७८-०४१)
श्रेयसे सर्वधर्मज्ञ (०७८-०४१)
शरणं व्रज केशवम् (०७८-०४१)
संस्मरस्व च दैत्येन्द्र (०७८-०४२)
प्रह्लादं स्वपितामहम् (०७८-०४२)
भ्रष्टराज्येन भवता (०७८-०४२)

स्मर्तव्यो ऽहम् इति प्रभो (०७८-०४२)
स व्याजहार भगवांस् (०७८-०४३)
तवानुग्रहकाम्यया (०७८-०४३)
संस्मर्यतां महाभाग (०७८-०४३)
सर्वधर्मभृतां वरः (०७८-०४३)
विष्णुभक्तो महाबाहुः (०७८-०४३)
स ते श्रेयो ऽभिधास्यति (०७८-०४३)
एतद् वचनम् आकर्ण्य (०७८-०४४)
तदा वैरोचनिर् बलिः (०७८-०४४)
ययौ तदार्घम् आदाय (०७८-०४४)
विष्णोश् चक्रस्य पूजकः (०७८-०४४)
स ददर्श समायान्तम् (०७८-०४५)
अनन्तकरसङ्गिनम् (०७८-०४५)
चक्रम् अक्षयचक्रस्य (०७८-०४५)
विश्वस्य परिपालकम् (०७८-०४५)
सस्मार च बलिः सर्वं (०७८-०४६)
प्रह्लादवचनं नृप (०७८-०४६)
जगाद यच् च गोविन्दः (०७८-०४६)
प्रसादसुमुखः प्रभुः (०७८-०४६)
भक्तिनम्रस् ततो भूत्वा (०७८-०४७)
भूतभव्यभवत्प्रभोः (०७८-०४७)
तुष्टाव वासुदेवस्य (०७८-०४७)
चक्रम् अव्यक्तमूर्तिनः (०७८-०४७)
ज्वालामालाकरालान्तम् (०७८-०४८)
उद्यदिन्दुसमप्रभम् (०७८-०४८)
मध्याह्नार्कसमाभासं (०७८-०४८)
तेजसः पिण्डसंस्थितम् (०७८-०४८)
तं दृष्ट्वा तेजसा राशिम् (०७८-०४९)
उपसंगम्य चा विभुम् (०७८-०४९)
उवाच दैत्यशार्दूलः (०७८-०४९)
प्रणिपत्य कृताञ्जलिः (०७८-०४९)
अनन्तस्याप्रमेयस्य (०७८-०५०)
विश्वमूर्तेर् महात्मनः (०७८-०५०)
नमामि चक्रिणश् चक्रं (०७८-०५०)
करसङ्गि सुदर्शनम् (०७८-०५०)
सहस्रम् इव सूर्याणां (०७८-०५१)
संघातं विद्युताम् इव (०७८-०५१)
कालाग्निम् इव यच् चक्रं (०७८-०५०)
तद् विष्णोः प्रणमाम्य् अहम् (०७८-०५१)
दुष्टराहुगलच्छेद- (०७८-०५२)
शोणितारुणतारकम् (०७८-०५२)
तन् नमामि हरेश् चक्रं (०७८-०५२)
शतनेमि सुदर्शनम् (०७८-०५२)
यस्यारकेषु शक्राद्या (०७८-०५३)
लोकपाला व्यवस्थिताः (०७८-०५३)
तदन्तर् वसवो रुद्रास् (०७८-०५३)
तथैव मरुतां गणाः (०७८-०५३)
धारायां द्वादशादित्याः (०७८-०५४)
समस्ताश् च हुताशनाः (०७८-०५४)

धाराजाले ऽब्धयः सर्वे (०७८-०५४)
नाभिमध्ये प्रजापतिः (०७८-०५४)
समस्तनेमिष्व् अखिला (०७८-०५५)
यस्य विद्याः प्रतिष्ठिताः (०७८-०५५)
यस्य रूपम् अनिर्देश्यम् (०७८-०५५)
अपि योगिभिर् उत्तमैः (०७८-०५५)
यद् भ्रमत् सुरसङ्घानां (०७८-०५६)
तेजसः परिबृंहणम् (०७८-०५६)
दैत्यौजसां च नाशाय (०७८-०५६)
तन् नमामि सुदर्शनम् (०७८-०५६)
भ्रमन् मतमहावेग- (०७८-*(१२९))
विभ्रान्ताखिलखेचरम् (०७८-*(१२९))
तन् नमामि हरेश् चक्रम् (०७८-*(१२९))
अनन्तारं सुदर्शनम् (०७८-*(१२९))
नक्षत्रवद्वह्निकण- (०७८-*(१३०))
व्याप्तं कृत्स्नं नभस्तलम् (०७८-*(१३०))
तन् नमामि हरेश् चक्रं (०७८-*(१३०))
करसङ्गि सुदर्शनम् (०७८-*(१३०))
स्वभावतेजसा युक्तं (०७८-०५७)
यद् अर्काग्निमयं महत् (०७८-०५७)
विशेषतो हरेर् गत्वा (०७८-०५७)
सर्वदेवमयं करम् (०७८-०५७)
दुर्वृत्तदैत्यमथनं (०७८-०५८)
जगतः परिपालकम् (०७८-०५८)
तन् नमामि हरेश् चक्रं (०७८-०५८)
दैत्यचक्रहरं परम् (०७८-०५८)
करोतु मे सदा शर्म (०७८-०५९)
धर्मतां च प्रयातु मे (०७८-०५९)
प्रसादसुमुखे कृष्णे (०७८-०५९)
तस्य चक्रं सुदर्शनम् (०७८-०५९)
स्वभावतेजसा युक्तं (०७८-*(१३१))
मध्याह्नार्कसमप्रभम् (०७८-*(१३१))
प्रसीद संयुगे ऽरिणां (०७८-०६०)
सुदर्शनसुदर्शनम् (०७८-०६०)
विद्युज्ज्वालामहाकक्षं (०७८-०६०)
दहान्तर् मम यत् तमः (०७८-०६०)
जहि नो विषयग्राहि (०७८-०६१)
मनो ग्रहविचेष्टितम् (०७८-०६१)
विस्फोटयाखिलां मायां (०७८-०६१)
कुरुष्व विमलां मतिम् (०७८-०६१)
एवं संस्थूयमानं तद् (०७८-०६२)
वह्निपिण्डोपमं महत् (०७८-०६२)
बभूव प्रकटं चक्रं (०७८-०६२)
दैत्यचक्रपतेस् तदा (०७८-०६२)
ददर्श स महाबाहुः (०७८-०६३)
प्रभामण्डलदुर्दृशम् (०७८-०६३)
अग्निज्वालागतं ताम्रं (०७८-०६३)
तप्तचक्रम् इवापरम् (०७८-०६३)
भ्रमतस् तस्य चक्रस्य (०७८-०६४)

नाभिमध्ये महीपते (०७८-०६४)
त्रैलोक्यम् अखिलं दैत्यो (०७८-०६४)
दृष्टवान् भूर्भुवादिकम् (०७८-०६४)
मेर्वादीन् अखिलाञ् शैलान् (०७८-०६५)
गङ्गाद्याः सरितस् तथा (०७८-०६५)
क्षीराब्धिप्रमुखांश् चाब्धीन् (०७८-०६५)
द्वीपाञ् जम्ब्वादिसंज्ञितान् (०७८-०६५)
वैमानिकान् सगन्धर्वान् (०७८-०६६)
सूर्यादींश् च तथा ग्रहान् (०७८-०६६)
नक्षत्रतारकाकाशं (०७८-०६६)
शक्रादींश् च दिवौकसः (०७८-०६६)
रुद्रादित्यांश् च मरुतां (०७८-०६७)
साध्यानां च महीपते (०७८-०६७)
संनिधानं निरीक्ष्यासौ (०७८-०६७)
दैत्यानां विस्मितो ऽभवत् (०७८-०६७)
ततः प्रणम्यार्तिहरं सुराणाम् (०७८-०६८)
अपारसारं परमायुधं हरेः (०७८-०६८)
नमो नमस् ते ऽस्त्व् इति दैत्यराजः (०७८-०६८)
प्रोवाच भूयो ऽपि नमो नमस् ते (०७८-०६८)
यन् नो ऽशुभं चेतसि वायुवेग (०७८-०६९)
यन् नो ऽशुभं वाचि हुताशनोत्थ (०७८-०६९)
यच् चाशुभं कायकृतं हरेस् तद् (०७८-०६९)
वरायुधं त्वं प्रशमं नयाशु (०७८-०६९)
प्रसीद सत्कारकृतं ममाघं (०७८-०७०)
प्रयातु ते नाशम् अनन्तवीर्य (०७८-०७०)
सतां च सन्मार्गवतां मनांसि (०७८-०७०)
स्थिरीभवन्त्व् अच्युतपादयुग्मे (०७८-०७०)
एवं स्तुते ततस् तस्मिन् (०७९-००१)
विष्णुचक्रे सुदर्शने (०७९-००१)
पुष्पवृष्टिर् बलेर् मूर्ध्नि (०७९-००१)
निपपातान्तरिक्षतः (०७९-००१)
परिहृत्य च दैत्येन्द्रं (०७९-००१)
ययौ चक्रं यथेच्छया (०७९-००१)
भ्रमद् एव च दैत्यानां (०७९-*(१३२))
ययौ तद्भयम् आवहत् (०७९-*(१३२))
ततस् तद् अद्भुतं दृष्ट्वा (०७९-००२)
चक्रस्यागमनं हरेः (०७९-००२)
पूर्ववत्स्मरणं प्राप्य (०७९-००२)
सस्मार स्वपितामहम् (०७९-००२)
गच्छता पूर्वम् आर्येण (०७९-००३)
स्मर्तव्यो ऽहम् इतीरितम् (०७९-००३)
तं स्मरिष्यामि दैत्येन्द्रं (०७९-००३)
स नः श्रेयो ऽभिधास्यति (०७९-००३)
इत्य् एतद् अधिसंस्मृत्य (०७९-००४)
बलिर् आत्मपितामहम् (०७९-००४)
सस्मार दैत्याधिपतिं (०७९-००४)
प्रह्लादं भगवत्प्रियम् (०७९-००४)
संस्मृतश् च स पातालम् (०७९-००५)
आजगाम महामतिः (०७९-००५)

चक्रोद्यतकरः साक्षाद् (०७९-००५)
भगवान् इव केशवः (०७९-००५)
तम् आगतम् अथोत्थाय (०७९-००६)
यथावत् स महामतिः (०७९-००६)
अभिवाद्य बलिर् भक्त्या (०७९-००६)
निवेद्यार्घम् अभाषत (०७९-००६)
तातांह्रिदर्शनाद् अद्य (०७९-००७)
पावितो ऽस्म्य् अपकल्मषः (०७९-००७)
दिवश् च्युतो ऽप्य् अहं मन्ये (०७९-००७)
शक्राद् आत्मानम् उत्तमम् (०७९-००७)
त्रैलोक्यहरणाद् उग्रं (०७९-००८)
यद् दुःखं हृदये मम (०७९-००८)
तच् छान्तं पादसंपर्कम् (०७९-००८)
उपेत्य भवतो मम (०७९-००८)
इति संस्तूय दत्त्वा च (०७९-००९)
वरासनम् उदारधीः (०७९-००९)
पर्युपासत राजेन्द्रो (०७९-००९)
दैत्यानां स्वपितामहम् (०७९-००९)
तम् उपासीनम् अनघः (०७९-०१०)
प्रह्लादो दैत्यपुङ्गवः (०७९-०१०)
प्रत्युवाच महात्मानं (०७९-०१०)
बलिं वैरोचनिं नृप (०७९-०१०)
बले ब्रूहि यदर्थं ते (०७९-०११)
स्मृतो ऽहम् अरिसूदन (०७९-०११)
तवोपकारणे विद्धि (०७९-०११)
धर्मे मां सततोद्यतम् (०७९-०११)
तातेनाहं पुरा ज्ञप्तो (०७९-०१२)
भ्रष्टराज्येन ते बले (०७९-०१२)
संस्मर्तव्यो ऽस्म्य् असंदिग्धं (०७९-०१२)
श्रेयो वक्ष्याम्य् अहं तदा (०७९-०१२)
सो ऽहं राज्यपरिभ्रष्टो (०७९-०१३)
विषयासक्तिदूषितः (०७९-०१३)
इन्द्रियैर् अवशस् तात (०७९-०१३)
यत् कार्यं तत् प्रशाधि माम् (०७९-०१३)
यदि मद्-वचनं तात (०७९-०१४)
श्रद्धधासि हितं बले (०७९-०१४)
तं देवदेवम् अनघं (०७९-०१४)
प्रयाहि शरणं हरिम् (०७९-०१४)
शब्दादिष्व् अनुरक्तानि (०७९-०१५)
तवाक्षाण्य् असुराधिप (०७९-०१५)
शब्दादयश् च गोविन्दे (०७९-०१५)
सन्त्य् एव व्यवहारतः (०७९-०१५)
गीतकैर् गीयतां विष्णुर् (०७९-०१६)
मनोहारिभिर् आत्मनः (०७९-०१६)
अन्यालम्बनतश् चित्तम् (०७९-०१६)
आकृष्याधत्स्व केशवे (०७९-०१६)
गन्धान् उदारान् भक्षांश् च (०७९-०१७)
स्रजो वासांसि चासुर (०७९-०१७)
प्रयच्छ देवदेवाय (०७९-०१७)

तच्छेषाण्य् उपयुञ्ज च (०७९-०१७)
यत्र यत्र च ते प्रीतिर् (०७९-०१८)
विषये दितिजेश्वर (०७९-०१८)
तत् तम् अच्युतम् उद्दिश्य (०७९-०१८)
विप्रेभ्यः प्रतिपादय (०७९-०१८)
सर्वभूतेषु गोविन्दो (०७९-०१९)
बहुरूपो व्यवस्थितः (०७९-०१९)
इति मत्वा महाबाहो (०७९-०१९)
सर्वभूतहितो भव (०७९-०१९)
आत्मानम् अच्युतं विद्धि (०७९-०२०)
शत्रुं च रिपुम् आत्मनः (०७९-०२०)
इतिज्ञानवतः कोपस् (०७९-०२०)
तव कुत्र भविष्यति (०७९-०२०)
शब्दादयो ये विषया (०७९-०२१)
विषयी यश् च पुरुषः (०७९-०२१)
तद् अशेषं विजानीहि (०७९-०२१)
स्वरूपं परमात्मनः (०७९-०२१)
परमात्मा च भगवान् (०७९-०२२)
विष्वक्सेनो जनार्दनः (०७९-०२२)
तद्भक्तिमान् भागवतो (०७९-०२२)
नाल्पपुण्यो हि जायते (०७९-०२२)
भगवच्छासनालम्बी (०७९-०२३)
भगवच्छासनप्रियः (०७९-०२३)
भगवद्भक्तिम् आस्थाय (०७९-०२३)
वत्स भागवतो भव (०७९-०२३)
भगवान् भूतकृद् भव्यो (०७९-०२४)
भूतानां प्रभवो हि यः (०७९-०२४)
भावेन तं भजस्वेशं (०७९-०२४)
भवभङ्गकरं हरिम् (०७९-०२४)
भजस्व भावेन विभुं (०७९-०२५)
भगवन्तं महेश्वरम् (०७९-०२५)
ततो भागवतो भूत्वा (०७९-०२५)
भवबन्धाद् विमोक्ष्यसे (०७९-०२५)
सर्वभूते मनस् तस्मिन् (०७९-०२६)
समाधाय महामते (०७९-०२६)
प्राप्स्यसे परमाह्लाद- (०७९-०२६)
कारिणीं परमां गतिम् (०७९-०२६)
यत्रानन्दपरं ज्ञानं (०७९-*(१३३))
सर्वदुःखविवर्जितम् (०७९-*(१३३))
तत्र चित्तं समावेष्टुं (०७९-०२७)
न शक्नोति भवान् यदि (०७९-०२७)
तदभ्यासपरस् तस्मिन् (०७९-०२७)
कुरु योगं दिवानिशम् (०७९-०२७)
तत्राप्य् असामर्थ्यवतः (०७९-०२८)
क्रियायोगो महात्मना (०७९-०२८)
ब्रह्मणा यः समाख्यातस् (०७९-०२८)
तन्मनाः सततं भव (०७९-०२८)
करोषि यानि कर्माणि (०७९-०२९)
तानि देवे जगत्पतौ (०७९-०२९)

समर्पयस्व भद्रं ते (०७९-०२९)
ततः कर्म प्रहास्यसि (०७९-०२९)
क्षीणकर्मा महाबाहो (०७९-०३०)
शुभाशुभविवर्जितः (०७९-०३०)
लयम् अभ्येति गोविन्दे (०७९-०३०)
तद् ब्रह्म परमं महत् (०७९-०३०)
भोक्तुम् इच्छसि दैत्येन्द्र (०७९-०३१)
कर्मणाम् अथ चेत् फलम् (०७९-०३१)
ततस् तम् अर्चयेशेशं (०७९-०३१)
ततः कर्मफलोदयः (०७९-०३१)
यो ऽर्थम् इच्छति दैत्येन्द्र (०७९-०३२)
स समाराध्य केशवम् (०७९-०३२)
निःसंशयम् अवाप्नोति (०७९-०३२)
धुन्धुमारो यथा नृपः (०७९-०३२)
अत्रिगेहसमुद्भूतं (०७९-०३३)
दत्तात्रेयस्वरूपिणम् (०७९-०३३)
राज्यम् आराध्य गोविन्दं (०७९-०३३)
कार्तवीर्यस् तथाप्तवान् (०७९-०३३)
धर्मं कृष्णप्रसादेन (०७९-०३४)
मुद्गलो जाजलिः कुणिः (०७९-०३४)
प्रापुर् अन्ये तथा कामान् (०७९-०३४)
नरेन्द्रा नहुषादयः (०७९-०३४)
जनकः सुध्वजो नाम (०७९-०३५)
जनकः समितिध्वजः (०७९-०३५)
धर्मध्वजस् तथा मुक्तिं (०७९-०३५)
केशवाराधनाद् गतः (०७९-०३५)
तथान्ये मुनयो दैत्य (०७९-०३६)
राजानश् च सहस्रशः (०७९-०३६)
प्रापुर् मुक्तिं महाभागाः (०७९-०३६)
कृत्वा भक्तिं जनार्दने (०७९-०३६)
यथा हि ज्वलितो वह्निस् (०७९-०३७)
तमोहानिं तदर्थिनाम् (०७९-०३७)
शीतहानिं तथान्येषां (०७९-०३७)
स्वेदं स्वेदाभिलाषिणाम् (०७९-०३७)
करोति क्षुधितानां च (०७९-०३८)
भोज्यपाकं तथोत्कटम् (०७९-०३८)
तथैव कामान् भूतेशः (०७९-०३८)
स ददाति यथेप्सितान् (०७९-०३८)
तद् एतद् अखिलं ज्ञात्वा (०७९-०३९)
यत् तवेष्टं शृणुष्व तत् (०७९-०३९)
कल्पद्रुमाद् इव हरेर् (०७९-०३९)
यत् ते मनसि वर्तते (०७९-०३९)
एतत् प्रह्लादवचनं (०७९-०४०)
निशाम्य दितिजेश्वरः (०७९-०४०)
प्रत्युवाच महाभागं (०७९-०४०)
प्रणिपत्य पितामहम् (०७९-०४०)
संप्राप्तस्यामृतस्येव (०७९-०४१)
तव वाक्यस्य नास्ति मे (०७९-०४१)
तृप्तिर् एतद् अहं तात (०७९-०४१)

श्रोतुम् इच्छामि विस्तरात् (०७९-०४१)
अक्षीणकर्मा पुरुषो (०७९-०४२)
मरणे समुपस्थिते (०७९-०४२)
कीदृशं लोकम् आयाति (०७९-०४२)
यः संस्मरति केशवम् (०७९-०४२)
यथा च वासुदेवस्य (०७९-०४३)
स्मरणं तात मानवैः (०७९-०४३)
मुमूर्षुभिः प्रकर्तव्यं (०७९-०४३)
तन् ममाचक्ष्व विस्तरात् (०७९-०४३)
किं जप्यं कीदृशं रूपं (०७९-०४४)
स्मर्तव्यं च हरेस् तदा (०७९-०४४)
कथं ध्येयं च विद्वद्भिस् (०७९-०४४)
तद् आचक्ष्व यथातथम् (०७९-०४४)
साधु वत्स त्वया प्रश्नः (०७९-०४५)
सुगुह्यो ऽयम् उदाहृतः (०७९-०४५)
तपसां तात सर्वेषां (०७९-०४५)
तपो नानशनात् परम् (०७९-०४५)
कथ्यते च महाबाहो (०७९-०४६)
संवादो ऽयं पुरातनः (०७९-०४६)
भगीरथस्य राजर्षेर् (०७९-०४६)
ब्रह्मणश् च प्रजापतेः (०७९-०४६)
अतीत्यामरलोकं च (०७९-०४७)
गवां लोकं च मानद (०७९-०४७)
ऋषिलोकं च यो ऽगच्छद् (०७९-०४७)
भगीरथ इति श्रुतः (०७९-०४७)
तं दृष्ट्वा स वचः प्राह (०७९-०४८)
ब्रह्मा लोकपितामहः (०७९-०४८)
कथं भगीरथागास् त्वम् (०७९-०४८)
इमं देशं दुरासदम् (०७९-०४८)
न हि देवा न गन्धर्वा (०७९-०४९)
न मनुष्या भगीरथ (०७९-०४९)
आयान्त्य् अतप्ततपसः (०७९-०४९)
कथं वै त्वम् इहागतः (०७९-०४९)
निःशङ्कम् अन्नम् अददं ब्राह्मणेभ्यः (०७९-०५०)
शतं सहस्राणि सदैव दायम् (०७९-०५०)
ब्राह्मणं व्रतं नित्यम् आस्थाय विद्वन् (०७९-०५०)
न त्व् एवाहं तस्य फलाद् इहागाम् (०७९-०५०)
दशैकरात्रान् दश पञ्चरात्रान् (०७९-०५१)
एकादशैकादशकांस् तथैव (०७९-०५१)
ज्योतिष्टोमानां च शतं यद् इष्टं (०७९-०५१)
फलेन तेनापि न चागतो ऽहम् (०७९-०५१)
यच् चावसं जाह्नवीतीरनित्यः (०७९-०५२)
शतं समास् तप्यमानस् तपो ऽहम् (०७९-०५२)
प्रदाय तत्राश्वतरीसहस्रं (०७९-०५२)
फलेन तस्यापि न चागतो ऽहम् (०७९-०५२)
दश धेनुसहस्राणि (०७९-०५३)
मणिरत्नविभूषिताः (०७९-०५३)
दशार्बुदानि चाश्वानाम् (०७९-०५३)
अयुतानि च विंशतिः (०७९-०५३)

पुष्करेषु द्विजातिभ्यः (०७९-०५३)
प्रादां गाश् च सहस्रशः (०७९-०५३)
सुवर्णचन्द्रोत्तमधारिणीनां (०७९-०५४)
कन्योत्तमानाम् अददं स्रग्विणीनाम् (०७९-०५४)
षष्टिं सहस्राणि विभूषितानां (०७९-०५४)
जाम्बूनदैर् आभरणैर् न तेन (०७९-०५४)
दशार्बुदान्य् अददं गोसवे यास् त्व् (०७९-०५५)
एकैकशो दश गा लोकनाथ (०७९-०५५)
समानवत्साः पयसा समन्विताः (०७९-०५५)
सुवर्णकांस्योपदुहा न तेन (०७९-०५५)
अहन्य् अहनि विप्रेषु (०७९-०५६)
एकैकं त्रिंशतो ऽददम् (०७९-०५६)
गृष्टीनां क्षीरदात्रीणां (०७९-०५६)
रोहिणीनां शतानि च (०७९-०५६)
दोग्ध्रीणां वै गवां चैव (०७९-०५७)
प्रयुतानि दशैव तु (०७९-०५७)
प्रादां दशगुणं ब्रह्मन् (०७९-०५७)
न च तेनाहम् आगतः (०७९-०५७)
कोटीश् च काञ्चनस्याष्टौ (०७९-०५८)
प्रादां ब्रह्मन् दश त्व् अहम् (०७९-०५८)
एकैकस्मिन् क्रतौ तेन (०७९-०५८)
फलेनाहं न चागतः (०७९-०५८)
वाजिनां श्यामकर्णानां (०७९-०५९)
हरितानां पितामह (०७९-०५९)
प्रादां हेमस्रजां ब्रह्मन् (०७९-०५९)
कोटीर् दश च सप्त च (०७९-०५९)
ईषादन्तान् महाकायान् (०७९-०६०)
काञ्चनस्रग्विभूषितान् (०७९-०६०)
पत्नीवतः सहस्राणि (०७९-०६०)
प्रायच्छं दश सप्त च (०७९-०६०)
अलंकृतानां देवेश (०७९-०६१)
दिव्यैः कनकभूषणैः (०७९-०६१)
रथानां काञ्चनाङ्गानां (०७९-०६१)
सहस्राण्य् अददं दश (०७९-०६१)
सप्त चान्यानि युक्तानां (०७९-०६१)
वाजिभिः समलंकृतैः (०७९-०६१)
दक्षिणावयवाः केचिद् (०७९-०६२)
देवैर् ये संप्रकीर्तिताः (०७९-०६२)
वाजपेयेषु दशसु (०७९-०६२)
प्रादां तेनापि नागतः (०७९-०६२)
शक्रतुल्यप्रभावानाम् (०७९-०६३)
ईज्यया विक्रमेण च (०७९-०६३)
सहस्रं निष्ककण्ठानां (०७९-०६३)
प्रददन् दक्षिणाम् अहम् (०७९-०६३)
विजित्य नृपतीन् सर्वान् (०७९-०६४)
मखैर् इष्ट्वा पितामह (०७९-०६४)
अष्टाभ्यो राजसूयेभ्यो (०७९-०६४)
न च तेनाहम् आगतः (०७९-०६४)
स्रोतश् च यावद् गङ्गायां (०७९-०६५)

छिन्नम् आसीज् जगत्पते (०७९-०६५)
दक्षिणाभिः प्रवृत्ताभिर् (०७९-०६५)
मम नागं च तत्कृते (०७९-०६५)
वाजिनां च सहस्रे द्वे (०७९-०६६)
सुवर्णमणिभूषिते (०७९-०६६)
वारणानां शतं चाहम् (०७९-०६६)
एकैकस्य त्रिधाददम् (०७९-०६६)
वरं ग्रामशतं चाहम् (०७९-०६६)
एकैकस्य त्रिधाददम् (०७९-०६६)
तपस्वी नियताहारः (०७९-०६७)
शमम् आस्थाय वाग्यतः (०७९-०६७)
दीर्घकालं हिमवति (०७९-०६७)
गङ्गायाश् च दुरुत्सहाम् (०७९-०६७)
मूर्ध्ना धारां महादेवः (०७९-०६८)
शिरसा याम् अधारयत् (०७९-०६८)
न तेनाप्य् अहम् आगच्छं (०७९-०६८)
फलेनेह पितामह (०७९-०६८)
शम्याक्षेपैर् अयजं देवदेव (०७९-०६९)
तथा क्रतूनाम् अयुतैश् चापि यतः (०७९-०६९)
त्रयोदशद्वादशाहैश् च देव (०७९-०६९)
सपुण्डरीकैर् न च तेषां फलेन (०७९-०६९)
अष्टौ सहस्राणि ककुद्मिनाम् अहं (०७९-०७०)
शुक्लर्षभाणाम् अदं ब्राह्मणेभ्यः (०७९-०७०)
पत्नीश् चैषाम् अददं निष्ककण्ठीस् (०७९-०७०)
तेषां फलेनेह न चागतो ऽस्मि (०७९-०७०)
हिरण्यरत्नरचितान् (०७९-०७१)
अददं रत्नपर्वतान् (०७९-०७१)
धनधान्यसहस्रांश् च (०७९-०७१)
ग्रामात्र् शतसहस्रशः (०७९-०७१)
शतं शतानां गृष्टीनाम् (०७९-०७२)
अददं चाप्य् अतन्द्रितः (०७९-०७२)
इष्ट्वानेकैर् महायज्ञैर् (०७९-०७२)
ब्राह्मणेभ्यो धनेन च (०७९-०७२)
एकादशाहैर् अयजं सुदक्षिणैर् (०७९-०७३)
द्विर् द्वादशाहैर् अश्वमेधैश् च देव (०७९-०७३)
बृहद्भिर् द्वादशाहैश् च (०७९-*(१३५))
अश्वमेधैः पितामह (०७९-*(१३५))
अर्कायणैः षोडशभिश् च ब्रह्मंस् (०७९-०७३)
तेषां फलेनेह न चागतो ऽस्मि (०७९-०७३)
निष्क्रामकं चाप्य् अददं योजनानां (०७९-०७४)
द्विर् विस्तीर्णं काञ्चनपादपानाम् (०७९-०७४)
वनं चूतानां रत्नविभूषितानाम् (०७९-०७४)
न चैव तेषाम् आगतो ऽहं फलेन (०७९-०७४)
तुरायणं तु व्रतम् अप्रधृष्यम् (०७९-०७५)
अक्रोधनो ऽकरवं त्रिंशतो ऽब्दान् (०७९-०७५)
शतं गवाम् अष्ट शतानि चाहं (०७९-०७५)
दिने दिने प्राददं ब्राह्मणेभ्यः (०७९-०७५)
पयस्विनीनां अथ रोहिणीनां (०७९-०७६)
तथैव चाप्य् अनडुहां लोकनाथ (०७९-०७६)

प्रादाम् नित्यं ब्राह्मणेभ्यः सुरेश (०७९-०७६)
नेहागतस् तेन फलेन चाहम् (०७९-०७६)
त्रिंशतं विधिवद् वह्नीन् (०७९-०७७)
अयजं यच् च नित्यशः (०७९-०७७)
अष्टाभिः सर्वमेधैश् च (०७९-०७७)
नृमेधैर् द्विगुणैस् तथा (०७९-०७७)
दशभिर् विश्वजिद्भिश् च (०७९-०७८)
स्तोभैर् अष्टादशोत्तरैः (०७९-०७८)
न चैव तेषां देवेश (०७९-०७८)
फलेनाहम् इहागमम् (०७९-०७८)
सरव्यां बाहुदायां च (०७९-०७९)
गयायाम् अथ नैमिषे (०७९-०७९)
गवां शतानाम् अयुतम् (०७९-०७९)
अददं न च तेन वै (०७९-०७९)
उत्क्रान्तिकाले गोविन्दं (०७९-०८०)
स्मरन्न् अनशनस्थितः (०७९-०८०)
त्यक्तवान् अस्मि यद् देहं (०७९-०८०)
तेनेदृक् प्राप्तवान् फलम् (०७९-०८०)
एवम् एतद् इतीत्य् आह (०७९-०८१)
ब्रह्मा लोकपितामहः (०७९-०८१)
भगीरथं महीपालं (०७९-०८१)
पुण्यलोकनिवासिनम् (०७९-०८१)
तद् एतद् उक्तं तपसां (०७९-०८२)
समस्तानां महामते (०७९-०८२)
गुणैर् अनशनं ब्रह्मा (०७९-०८२)
प्रधानतरम् अब्रवीत् (०७९-०८२)
त्यजत्य् अनशनस्थो हि (०७९-०८३)
प्राणान् यः संस्मरन् हरिम् (०७९-०८३)
स याति विष्णुसालोक्यं (०७९-०८३)
यावद् इन्द्राश् चतुर्दश (०७९-०८३)
अतीतानागतानीह (०७९-०८४)
कुलानि पुरुषर्षभ (०७९-०८४)
पुनात्य् अनशनं कुर्वन् (०७९-०८४)
सप्त सप्त च सप्त च (०७९-०८४)
श्लोकाश् चात्र महाबाहो (०७९-०८५)
श्रूयन्ते यान् भगीरथः (०७९-०८५)
जगाद ब्रह्मणो लोकम् (०७९-०८५)
उपेतः पृथिवीपतिः (०७९-०८५)
ब्रह्म ब्रह्ममयं विष्णोर् (०७९-०८६)
यः पदं परमात्मनः (०७९-०८६)
संस्मरंस् त्यजति प्राणान् (०७९-०८६)
स विष्णुं प्रविशत्य् अजम् (०७९-०८६)
यः क्षीणकर्मा भोगेन (०७९-०८७)
तपसा वापि संस्मरन् (०७९-०८७)
करोति कालं कालेन (०७९-०८७)
न परिच्छेद्यते हि सः (०७९-०८७)
अक्षीणकर्मा मरणे (०७९-०८८)
संस्मरन् देवम् अच्युतम् (०७९-०८८)
यथा त्वम् एव देवानां (०७९-०८८)

लोके भोगान् उपाश्नुते (०७९-०८८)
क्षुतिते ऽपि कुले कश्चिज् (०७९-०८९)
जायेयं कर्मणः क्षये (०७९-०८९)
मनुष्यो येन सर्वेशं (०७९-०८९)
चिन्तयेयं सदा हरिम् (०७९-०८९)
तच्चिन्तयाधुनाशेष- (०७९-०९०)
पुण्यपापविवर्जितः (०७९-०९०)
मरणे तन्मनस् तत्र (०७९-०९०)
लयम् एत्य तम् आप्नुयात् (०७९-०९०)
कर्मभूमौ समस्तानां (०७९-०९१)
कर्मणाम् उत्तमोत्तमम् (०७९-०९१)
यद् अन्तकाले पुरुषैः (०७९-०९१)
स्मर्यते पुरुषोत्तमः (०७९-०९१)
इत्य् एतान् आह राजर्षिः (०७९-०९२)
श्लोकान् आद्यो भगीरथः (०७९-०९२)
विष्णुसंस्मरणात् प्राप्य (०७९-०९२)
लोकान् अनशने मृतः (०७९-०९२)
एवम् अत्यन्तशस्तानां (०७९-०९३)
कर्मणाम् असुरेश्वर (०७९-०९३)
नान्यद् उत्कृष्टम् उद्दिष्टं (०७९-०९३)
तज्ज्ञैर् अनशनात् परम् (०७९-०९३)
तस्याहं लक्षणं वक्ष्ये (०७९-०९४)
यच् च जप्यं मुमूर्षुभिः (०७९-०९४)
यादृग्रूपश् च भगवांश् (०७९-०९४)
चिन्तनीयो जनार्दनः (०७९-०९४)
आसन्नम् आत्मनः कालं (०७९-०९५)
ज्ञात्वा प्राज्ञो महासुर (०७९-०९५)
निर्धूतमलदोषश् च (०७९-०९५)
स्नातो नियतमानसः (०७९-०९५)
समभ्यर्च्य हृषीकेशं (०७९-०९६)
पुष्पधूपादिभिस् ततः (०७९-०९६)
प्रणिपातैः स्तवैः पुण्यैर् (०७९-०९६)
ध्यानयोगैश् च पूजयेत् (०७९-०९६)
दत्त्वा दानं च विप्रेभ्यो (०७९-०९७)
विकलादिभ्य एव च (०७९-०९७)
सभाप्रपाब्राह्मणौक- (०७९-०९७)
देवौकाद्युपयोगि च (०७९-०९७)
बन्धुपुत्रकलत्रौक- (०७९-०९८)
क्षेत्रधान्यधनादिषु (०७९-०९८)
मित्रवर्गे च दैत्येन्द्र (०७९-०९८)
ममत्वं विनिवर्तयेत् (०७९-०९८)
मित्रान् अमित्रान् मध्यस्थान् (०७९-०९९)
परान् स्वांश् च पुनः पुनः (०७९-०९९)
अभ्यर्थनोपचारेण (०७९-०९९)
क्षामयेत् कुकृतं स्वकम् (०७९-०९९)
ततश् च प्रयतः कुर्याद् (०७९-१००)
उत्सर्गं सर्वकर्मणाम् (०७९-१००)
शुभाशुभानां दैत्येन्द्र (०७९-१००)
वाक्यं चेदम् उदाहरेत् (०७९-१००)

परित्यजाम्य् अहं भोगांस् (०७९-१०१)
त्यजामि सुहृदो ऽखिलान् (०७९-१०१)
भोजनादि मयोत्सृष्टम् (०७९-१०१)
उत्सृष्टम् अनुलेपनम् (०७९-१०१)
स्रग्भूषणादिकं गेयं (०७९-१०२)
दानम् आदानम् एव च (०७९-१०२)
होमादयः पदार्था ये (०७९-१०२)
याश् च नित्यक्रिया मम (०७९-१०२)
नैमित्तिकास् तथा काम्या (०७९-१०३)
वर्णधर्मास् तथोज्झिताः (०७९-१०३)
गुणधर्मादयो धर्मा (०७९-१०३)
याश् च काश्चिन् मम क्रियाः (०७९-१०३)
पद्भ्यां कराभ्यां विहरन् (०७९-१०४)
कुर्वन् वा कर्म न त्व् अहम् (०७९-१०४)
करिष्ये प्राणिनां पीडां (०७९-१०४)
प्राणिनः सन्तु निर्भयाः (०७९-१०४)
नभसि प्राणिनो ये तु (०७९-१०५)
ये जले ये च भूतले (०७९-१०५)
क्षितेर् अन्तरगा ये च (०७९-१०५)
ये च पाषाणसंपुटे (०७९-१०५)
ये धान्यादिषु वस्त्रेषु (०७९-१०६)
शयनेष्व् आसनेषु च (०७९-१०६)
ते स्वपन्तु विबुध्यन्तु (०७९-१०६)
सुखं मत्तो भयं विना (०७९-१०६)
न मे ऽस्ति बान्धवः कश्चिद् (०७९-१०७)
विष्णुं मुक्त्वा जगद्गुरुम् (०७९-१०७)
मित्रपक्षे च मे विष्णुर् (०७९-१०७)
अधश् चोर्ध्वं तथाग्रतः (०७९-१०७)
पार्श्वतो मूर्ध्नि पृष्ठे च (०७९-१०८)
हृदये वाचि चक्षुषि (०७९-१०८)
श्रोत्रादिषु च सर्वेषु (०७९-१०८)
मम विष्णुः प्रतिष्ठितः (०७९-१०८)
इति सर्वं समुत्सृज्य (०७९-१०९)
ध्यात्वा सर्वत्र चाच्युतम् (०७९-१०९)
वासुदेवेत्य् अविरतं (०७९-१०९)
नाम देवस्य कीर्तयन् (०७९-१०९)
दक्षिणाग्रेषु दर्भेषु (०७९-११०)
शयीत प्राच्छिरास् ततः (०७९-११०)
उदच्छिरा वा दैत्येन्द्र (०७९-११०)
चिन्तयन् जगतः पतिम् (०७९-११०)
विष्णुं जिष्णुं हृषीकेशं (०७९-१११)
केशवं मधुसूदनम् (०७९-१११)
नारायणं नरं कृष्णं (०७९-१११)
वासुदेवं जनार्दनम् (०७९-१११)
वाराहं यज्ञपुरुषं (०७९-११२)
पुण्डरीकाक्षम् अच्युतम् (०७९-११२)
वामनं श्रीधरं श्रीशं (०७९-११२)
नृसिंहम् अपराजितम् (०७९-११२)
पद्मनाभम् अजं शौरिम् (०७९-११३)

दामोदरम् अधोक्षजम् (०७९-११३)
सर्वेश्वरेश्वरं शुद्धम् (०७९-११३)
अनन्तं रामम् ईश्वरम् (०७९-११३)
चक्रिणं गदिनं शार्ङ्गिं (०७९-११४)
शङ्खिनं गरुडध्वजम् (०७९-११४)
किरीटकौस्तुभधरं (०७९-११४)
प्रणमाम्य् अहम् अव्ययम् (०७९-११४)
अहम् अत्र जगन्नाथे (०७९-११५)
मयि चास्तु जनार्दनः (०७९-११५)
आवयोर् अन्तरं मास्तु (०७९-११५)
समीरनभसोर् इव (०७९-११५)
अयं विष्णुर् अयं शौरिर् (०७९-११६)
अयं कृष्णः पुरो मम (०७९-११६)
नीलोत्पलदलश्यामः (०७९-११६)
पद्मपत्त्रोपमेक्षणः (०७९-११६)
एष पश्यतु माम् ईशः (०७९-११७)
पश्याम्य् अहम् अधोक्षजम् (०७९-११७)
यतो न व्यतिरिक्तो ऽहं (०७९-११७)
यन्मयो ऽहं यदाश्रयः (०७९-११७)
इत्थं जपन्न् एकमनाः (०७९-११८)
स्मरन् सर्वेश्वरं हरिम् (०७९-११८)
आसीनः सुखदुःखेषु (०७९-११८)
समो मित्राहितेषु च (०७९-११८)
ॐ नमो वासुदेवायेत्य् (०७९-११९)
एतद् वा सततं वदन् (०७९-११९)
यद् वोदीरयितुं नाम (०७९-११९)
समर्थस् तद् उदीरयन् (०७९-११९)
ध्यायेत देवदेवस्य (०७९-११९)
रूपं विष्णोर् मनोरमम् (०७९-११९)
प्रशान्तनेत्रभ्रूवक्त्रं (०७९-१२०)
शङ्खचक्रगदाधरम् (०७९-१२०)
श्रीवत्सवक्षसं चैव (०७९-१२०)
चतुर्बाहुं किरीटिनम् (०७९-१२०)
पीताम्बरधरं विष्णुं (०७९-१२१)
चारुकेयूरधारिणम् (०७९-१२१)
चिन्तयेच् च तदा रूपं (०७९-१२१)
मनः कृत्वैकनिश्चयम् (०७९-१२१)
यादृशे वा मनः स्थैर्यं (०७९-१२२)
रूपे बध्नाति चक्रिणः (०७९-१२२)
तद् एव चिन्तयन् नाम (०७९-१२२)
वासुदेवेति कीर्तयेत् (०७९-१२२)
इतं जपन् स्मरन् वेत्थं (०७९-१२३)
स्वरूपं परमात्मनः (०७९-१२३)
आ प्राणोपरमाद् वीरस् (०७९-१२३)
तच्चित्तस् तत्परायणः (०७९-१२३)
निर्विकल्पेन मनसा (०७९-१२४)
यः स्मरेत् पुरुषोत्तमम् (०७९-१२४)
सर्वपातकयुक्तो ऽपि (०७९-१२४)
पुरुषः पुरुषर्षभ (०७९-१२४)

प्रयाति देवदेवेशे (०७९-१२४)
लयम् ईड्यतमे ऽच्युते (०७९-१२४)
यथाग्निस् तृणजालानि (०७९-१२५)
दहत्य् अनिलसंगतः (०७९-१२५)
तथानशनसंकल्पः (०७९-१२५)
पुंसां पापम् असंशयम् (०७९-१२५)
विष्णोः संस्मरणे प्राप्य (०७९-*(१३६))
लोकम् अनशने मृतः (०७९-*(१३६))
एवम् अत्यन्तशस्तानां (०७९-*(१३६))
कर्मणाम् असुरेश्वर (०७९-*(१३६))
नास्ति सत्यात् परो धर्मो (०७९-१२६)
नास्त्य् अधर्म तथानृतात् (०७९-१२६)
नास्ति विद्यासमं चक्षुस् (०७९-१२६)
तपो नानशनात् परम् (०७९-१२६)
नास्ति ज्ञानसमं दानं (०७९-१२७)
न संतोषसमं सुखम् (०७९-१२७)
न चैवेर्ष्यासमं दुःखं (०७९-१२७)
तपो नानशनात् परम् (०७९-१२७)
नास्त्य् अरोगसमं धन्यं (०७९-१२८)
नास्ति गङ्गासमा सरित् (०७९-१२८)
नास्ति विष्णुसमं ध्येयं (०७९-१२८)
तपो नानशनात् परम् (०७९-१२८)
उत्क्रान्तिकाले भूतानां (०७९-१२९)
मुह्यन्ते चित्तवृत्तयः (०७९-१२९)
जराव्याधिविधीनानां (०७९-१२९)
किमु व्याध्यादिदोषतः (०७९-१२९)
अत्यन्तवयसा वृद्ध्या (०७९-१३०)
व्याधिना चातिपीडितः (०७९-१३०)
यदि स्थातुं न शक्नोति (०७९-१३०)
क्षितिस्थे दर्भसंस्तरे (०७९-१३०)
तत् किम् अन्यो ऽप्य् उपायो ऽस्ति (०७९-१३१)
न वानशनकर्मणि (०७९-१३१)
विफल्यं येन नाप्नोति (०७९-१३१)
तन् मे ब्रूहि पितामह (०७९-१३१)
नात्र भूमिर् न च कुशाः (०७९-१३२)
संस्तरश् च न कारणम् (०७९-१३२)
चित्तस्यालम्बनीभूतो (०७९-१३२)
विष्णुर् एवात्र कारणम् (०७९-१३२)
भुञ्जन्न् अभुञ्जन् गच्छंश् च (०७९-१३३)
स्वपंस् तिष्ठन्न् अथापि वा (०७९-१३३)
उत्क्रान्तिकाले गोविन्दं (०७९-१३३)
संस्मरंस् तन्मयो भवेत् (०७९-१३३)
किं जपैः किं भुवा कृत्यं (०७९-१३४)
किं कुशैर् दैत्यसत्तम (०७९-१३४)
तथापि कुर्वतो यस्य (०७९-१३४)
हृदये न जनार्दनः (०७९-१३४)
तस्मात् प्रधानमन्त्रोक्तं (०७९-१३५)
वासुदेवस्य कीर्तनम् (०७९-१३५)
तन्मयत्वेन दैत्येन्द्र (०७९-१३५)

तस्योपायश् च विस्तरः (०७९-१३५)
इत्य् एतत् कथितं सर्वं (०७९-१३६)
पृष्टो ऽहं यत् त्वया बले (०७९-१३६)
उत्क्रान्तिकाले स्मरणं (०७९-१३६)
किं भूयः कथयामि ते (०७९-१३६)
क्रियायोगस् त्वया पूर्वं (०८०-००१)
ममोक्तो यः पितामह (०८०-००१)
तम् अहं श्रोतुम् इच्छामि (०८०-००१)
फलं चास्य यथातथम् (०८०-००१)
देवार्चां देवतागारे (०८०-००२)
तन्मयत्वेन पूजयम् (०८०-००२)
यथावच् चेतसो भूमिं (०८०-००२)
करोति नियतो हि सः (०८०-००२)
तपसा ब्रह्मचर्येण (०८०-००३)
पुण्यस्वाध्यायसंस्तवैः (०८०-००३)
क्रियायोगः स विद्वद्भिर् (०८०-००३)
योगिनां समुदाहृतः (०८०-००३)
तत्राहं श्रोतुम् इच्छामि (०८०-००४)
क्रियायोगस्थितो नरः (०८०-००४)
यत् फलं समवाप्नोति (०८०-००४)
कारयित्वा हरेर् गृहम् (०८०-००४)
देवार्चां कारयित्वा वा (०८०-००५)
यत् पुण्यं पुरुषो ऽश्नुते (०८०-००५)
संपूजयित्वा विधिवद् (०८०-००५)
अनुलिप्य च यत् फलम् (०८०-००५)
कानि माल्यानि शस्तानि (०८०-००६)
कानि नार्हन्ति केशवे (०८०-००६)
के धूपाः कृष्णदयिताः (०८०-००६)
के वर्ज्याश् च जगत्पतेः (०८०-००६)
उपहारे फलं कीम् स्यात् (०८०-००७)
किं फलं गीतवादिते (०८०-००७)
घृतक्षीरादिना यच् च (०८०-००७)
स्नापिते केशवे फलम् (०८०-००७)
यच् चोपलेपने तात (०८०-००८)
फलम् अभ्युक्षिते च यत् (०८०-००८)
वासुदेवगृहे सर्वं (०८०-००८)
तद् अशेषं वदस्व मे (०८०-००८)
साधु वत्स यद् एतत् त्वं (०८०-००९)
वासुदेवस्य पृच्छसि (०८०-००९)
शुश्रूषणविधौ पुण्यं (०८०-००९)
तद् इहैकमनाः शृणु (०८०-००९)
ब्रह्मणा किल देवानाम् (०८०-०१०)
ऋषीणां च महात्मनाम् (०८०-०१०)
शुश्रूषणफलं विष्णोः (०८०-०१०)
प्रोक्तं दैत्यपते पुरा (०८०-०१०)
तेभ्यः सकाशान् मनुना (०८०-०११)
प्राप्तं स्वारोचिषेण तु (०८०-०११)
स्वारोचिषः स्वपुत्राय (०८०-०११)
दत्तवान् ऋतचक्षुषे (०८०-०११)

ऋतचक्षुश् च भर्गवे (०८०-०१२)
शुक्रस् तस्माद् अवाप च (०८०-०१२)
ममाख्यातं च शुक्रेण (०८०-०१२)
यथावत् सुमहात्मना (०८०-०१२)
शुश्रूषवे महाभाग (०८०-०१३)
दैत्याचार्येण धीमता (०८०-०१३)
तद् एतच् छ्रूयतां तात (०८०-०१३)
क्रियायोगाश्रितं फलम् (०८०-०१३)
ज्ञानयोगस् तु संयोगश् (०८०-०१४)
चित्तस्यैवात्मना तु यः (०८०-०१४)
यस् तु बाह्यार्थसापेक्षः (०८०-०१४)
स क्रियायोग उच्यते (०८०-०१४)
परमं कारणं योगो (०८०-०१५)
विमुक्तेर् दितिकेश्वर (०८०-०१५)
क्रियायोगश् च योगस्य (०८०-०१५)
परमं तात साधनम् (०८०-०१५)
यत् त्व् एतद् भवता पृष्टं (०८०-०१६)
फलम् अन्विच्छता फलम् (०८०-०१६)
देवालयादिकरणे (०८०-०१६)
तद् इहैकमनाः शृणु (०८०-०१६)
यस् तु देवालयं विष्णोर् (०८०-०१७)
दार्वं शैलमयं तथा (०८०-०१७)
कारयेन् मृन्मयं वापि (०८०-०१७)
शृणु तस्य बले फलं (०८०-०१७)
अहन्य् अहनि यज्ञेन (०८०-०१८)
यजतो यन् महाफलम् (०८०-०१८)
प्राप्नोति तत् फलं विष्णोर् (०८०-०१८)
यः कारयति मन्दिरम् (०८०-०१८)
कुलानां शतम् आगामि (०८०-०१९)
समतीतं तथा शतम् (०८०-०१९)
कारयन् भगवद्धाम (०८०-०१९)
नयत्य् अच्युतलोकताम् (०८०-०१९)
सप्तजन्मकृतं पापं (०८०-०२०)
स्वल्पं वा यदि वा बहु (०८०-०२०)
विष्णोर् आलयविन्यास- (०८०-०२०)
प्रारम्भाद् एव नश्यति (०८०-०२०)
सप्तलोकमयो विष्णुस् (०८०-०२१)
तस्य यः कुरुते गृहम् (०८०-०२१)
प्रतिष्ठां समवाप्नोति (०८०-०२१)
स नरः सप्तलौकिकीम् (०८०-०२१)
प्रशस्तदेशभूभागे (०८०-०२२)
यः शस्तं भवनं हरेः (०८०-०२२)
कारयत्य् अक्षयांल् लोकान् (०८०-०२२)
स नरः प्रतिपद्यते (०८०-०२२)
इष्टकाचयविन्यासो (०८०-०२३)
यावन्त्य् ऋक्षाणि तिष्ठति (०८०-०२३)
तावद्वर्षसहस्राणि (०८०-०२३)
तत्कर्तुर् दिवि संस्थितिः (०८०-०२३)
प्रतिमां लक्षणवतीं (०८०-०२४)

यः कारयति मानवः (०८०-०२४)
केशवस्य स तल्लोकम् (०८०-०२४)
अक्षयं प्रतिपद्यते (०८०-०२४)
षष्टिं वर्षसहस्राणां (०८०-०२५)
सहस्राणि स मोदते (०८०-०२५)
स्वर्गौकसां निवासेषु (०८०-०२५)
प्रत्येकम् अरिसूदन (०८०-०२५)
प्रतिष्ठाप्य हरेर् अर्चां (०८०-०२६)
सुप्रशस्ते निवेशने (०८०-०२६)
पुरुषः कृतकृत्यत्वान् (०८०-०२६)
नैनं श्वोमरणं तपेत् (०८०-०२६)
ये भविष्यन्ति ये ऽतीता (०८०-०२७)
आकल्पात् पुरुषाः कुले (०८०-०२७)
तांस् तारयति संस्थाप्य (०८०-०२७)
देवस्य प्रतिमां हरेः (०८०-०२७)
अनुशस्ताः किल पुरा (०८०-०२८)
यमेन यमकिंकराः (०८०-०२८)
पाशोद्यतायुधा दैत्य (०८०-०२८)
प्रजासंयमने रताः (०८०-०२८)
विहरध्वं यथान्यायं (०८०-०२९)
नियोगो मे ऽनुपाल्यताम् (०८०-०२९)
नाज्ञाभङ्गं करिष्यन्ति (०८०-०२९)
भवतां जन्तवः क्वचित् (०८०-०२९)
केवलं ये जगद्धातुम् (०८०-०३०)
अनन्तं समुपाश्रिताः (०८०-०३०)
भवद्भिः परिहर्तव्यास् (०८०-०३०)
तेषां नास्त्य् अत्र संस्थितिः (०८०-०३०)
ये तु भागवता लोके (०८०-०३१)
तच्चित्तास् तत्परायणाः (०८०-०३१)
पूजयन्ति सदा विष्णुं (०८०-०३१)
ते वस् त्याज्याः सुदूरतः (०८०-०३१)
यस् तिष्ठन् प्रस्वपन् गच्छंस् (०८०-०३२)
तत्तिष्ठन् स्खलिते क्षुते (०८०-०३२)
संकीर्तयति गोविन्दं (०८०-०३२)
ते वस् त्याज्याः सुदूरतः (०८०-०३२)
नित्यनैमित्तिकैर् देवं (०८०-०३३)
ये यजन्ति जनार्दनम् (०८०-०३३)
नावलोक्य भवद्भिस् ते (०८०-०३३)
तत्तेजो हन्ति वो गतिम् (०८०-०३३)
ये धूपपुष्पवासोभिर् (०८०-०३४)
भूषणैश् चापि वल्लभैः (०८०-०३४)
अर्चयन्ति न ते ग्राह्या (०८०-०३४)
नराः कृष्णाश्रयोद्धताः (०८०-०३४)
उपलेपनकर्तारः (०८०-०३५)
संमार्जनपराश् च ये (०८०-०३५)
कृष्णालये परित्याज्यं (०८०-०३५)
तेषां त्रिपुरुषं कुलम् (०८०-०३५)
येन चायतनं विष्णोः (०८०-०३६)
कारितं तत्कुलोद्भवम् (०८०-०३६)

पुंसां शतं नावलोक्यं (०८०-०३६)
भवद्भिर् दुष्टचक्षुषा (०८०-०३६)
येनार्चा भगवद्भक्त्या (०८०-०३७)
वासुदेवस्य कारिता (०८०-०३७)
नरायुतं तत्कुलजं (०८०-०३७)
भवतां शासनातिगम् (०८०-०३७)
भवतां भ्रमताम् अत्र (०८०-०३८)
विष्णुसंश्रयमुद्रया (०८०-०३८)
विनाज्ञाभङ्गकृन् नैव (०८०-०३८)
भविष्यति नरः क्वचित् (०८०-०३८)
वत्स वैवस्वतस्यैताः (०८०-०३९)
श्रुत्वा गाथा मरीचिना (०८०-०३९)
पुरुकुत्साय कथिताः (०८०-०३९)
पार्थिवेन्द्राय धीमते (०८०-०३९)
एतां महाफलां यो ऽर्चां (०८०-०४०)
विष्णोह् कारयते नरः (०८०-०४०)
तवाख्यातं महाबाहो (०८०-०४०)
गृहकारयितुश् च यत् (०८०-०४०)
यज्ञा नराणां पापौघ- (०८०-०४१)
क्षालकाः सर्वकामदाः (०८०-०४१)
तथैवेज्यो जगद्धातुः (०८०-०४१)
सर्वयज्ञमयो हरिः (०८०-०४१)
स्थापितां प्रतिमां विष्णोः (०८१-००१)
सम्यक् संपूज्य मानवः (०८१-००१)
यं यं प्रार्थयते कामं (०८१-००१)
तं तम् आप्नोत्य् असंशयम् (०८१-००१)
यः स्नापयति देवस्य (०८१-००२)
घृतेन प्रतिमां हरेः (०८१-००२)
प्रस्थे प्रस्थे द्विजाग्र्याणां (०८१-००२)
स ददाति गवां शतम् (०८१-००२)
गवां शतस्य विप्राणां (०८१-००३)
यद् दत्तस्य भवेत् फलम् (०८१-००३)
घृतप्रस्थेन तद् विष्णोर् (०८१-००३)
लभेत् स्नानोपयोगिना (०८१-००३)
भूरिद्युम्नेन संप्राप्ता (०८१-००४)
सप्तद्वीपा वसुंधरा (०८१-००४)
घृताढकेन गोविन्द- (०८१-००४)
प्रतिमास्नापनात् किल (०८१-००४)
प्रतिमासं सिताष्टम्यां (०८१-००५)
घृतेन जगतः पतिम् (०८१-००५)
स्नापयित्वा समस्तेभ्यः (०८१-००५)
पापेभ्यो विप्रमुच्यते (०८१-००५)
द्वादश्यां पञ्चदश्यां च (०८१-००६)
गव्येन हविषा हरेः (०८१-००६)
स्नापनं दैत्यशार्दूल (०८१-००६)
महापातकनाशनम् (०८१-००६)
ज्ञानतो ऽज्ञानतो वापि (०८१-००७)
यत् पापं कुरुते नरः (०८१-००७)
तत् क्षालयति संध्यायां (०८१-००७)

घृतेन स्नापयन् हरिम् (०८१-००७)
सर्वयज्ञमयो विष्णुर् (०८१-००८)
हव्यानां परमं घृतम् (०८१-००८)
तयोर् अशेषपापानां (०८१-००८)
क्षालकः संगमो ऽसुर (०८१-००८)
येषु क्षीरवहा नद्यो (०८१-००९)
ह्रदाः पायसकर्दमाः (०८१-००९)
तांल् लोकान् पुरुषा यान्ति (०८१-००९)
क्षीरस्नानकरा हरेः (०८१-००९)
आह्लादं निर्वृतिं स्वास्थ्यम् (०८१-०१०)
आरोग्यं चारुरूपताम् (०८१-०१०)
सप्त जन्मान्य् अवाप्नोति (०८१-०१०)
क्षीरस्नानकरो हरेः (०८१-०१०)
दध्यादीनां विकाराणां (०८१-०११)
क्षीरतः संभवो यथा (०८१-०११)
तथैवाशेषकामानां (०८१-०११)
क्षीरस्नापनतो हरेः (०८१-०११)
यथा च विमलं ज्ञानं (०८१-०१२)
यथा निर्वृतिकारकम् (०८१-०१२)
तथास्य निर्मलं ज्ञानं (०८१-०१२)
भवत्य् अतिफलप्रदम् (०८१-०१२)
ग्रहानुकूलतां पुष्टिं (०८१-०१३)
प्रियत्वं चाखिले जने (०८१-०१३)
करोति भगवान् विष्णुः (०८१-०१३)
क्षीरस्नापनतोषितः (०८१-०१३)
सर्वो ऽस्य स्निग्धताम् एति (०८१-०१४)
दृष्टमात्रः प्रसीदति (०८१-०१४)
घृतक्षीरेण देवेशे (०८१-०१४)
स्नापिते मधुसूदने (०८१-०१४)
अत्राप्य् उदाहरन्तीमं (०८१-०१५)
संवादं केशवाश्रितम् (०८१-०१५)
शाण्डिल्या सह कैकेय्याः (०८१-०१५)
सुमनायाः सुरालये (०८१-०१५)
स्वर्गे ऽतिशोभनां दृष्ट्वा (०८१-०१६)
कैकेयीं पतिना सह (०८१-०१६)
ब्राह्मणी शाण्डिली नाम (०८१-०१६)
पर्यपृच्छत विस्मिता (०८१-०१६)
शतशः सन्ति कैकेयि (०८१-०१७)
देवाः स्वर्गनिवासिनः (०८१-०१७)
देवपत्न्यस् तथैवैताः (०८१-०१७)
सिद्धाः सिद्धाङ्गनास् तथा (०८१-०१७)
न तेषाम् ईदृशो गन्धो (०८१-०१८)
न कान्तिर् न सुरूपता (०८१-०१८)
न वाससां च शोभेयं (०८१-०१८)
यथा ते पतिना सह (०८१-०१८)
नैवाभरणजातानि (०८१-०१९)
तेषां भ्राजन्ति वै तथा (०८१-०१९)
यथा तव यथा पत्युस् (०८१-०१९)
तव स्वर्गनिवासिनः (०८१-०१९)

स्वस्थता चेतसश् चेयं (०८१-०२०)
युवयोर् अतिरिच्यते (०८१-०२०)
शक्राद्यानाम् अपीसानां (०८१-०२०)
क्षयातिशयवर्जितः (०८१-०२०)
तपःप्रभावो दानं वा (०८१-०२१)
कर्म वा होमसंज्ञितम् (०८१-०२१)
युवयोर् यन् ममाचक्ष्व (०८१-०२१)
तत् सर्वं वरवर्णिनि (०८१-०२१)
यज्ञैर् यज्ञेश्वरो विष्णुर् (०८१-०२२)
आवाभ्यां यत् तु तोषितः (०८१-०२२)
स्वर्गप्राप्तिर् इयं तस्य (०८१-०२२)
कर्मणः फलम् उत्तमम् (०८१-०२२)
सुरूपतां मनःप्रीति (०८१-०२३)
पश्यतां चारुवेषताम् (०८१-०२३)
यत् पृच्छसि महाभागे (०८१-०२३)
तद् अप्य् एषा वदामि ते (०८१-०२३)
तीर्थोदकैस् तथा स्नानैः (०८१-०२४)
स्नापितो ऽयं जनार्दनः (०८१-०२४)
तेन कान्तिर् अतीत्यैतान् (०८१-०२४)
देवांस् त्रिभुवनेश्वरान् (०८१-०२४)
मनःप्रसादः सौम्यत्वं (०८१-०२५)
शारीरा या च निर्वृतिः (०८१-०२५)
यत् प्रियत्वं च सर्वस्य (०८१-०२५)
तद् घृतस्नानजं फलम् (०८१-०२५)
यान्य् अभीष्टानि वासांसि (०८१-०२६)
यच् चाभीष्टं विभूषणम् (०८१-०२६)
रत्नानि यान्य् अभीष्टानि (०८१-०२६)
यत् प्रियं चानुलेपनम् (०८१-०२६)
ये धूपा यानि माल्यानि (०८१-०२७)
दयितान्य् अभवंस् तदा (०८१-०२७)
मम भर्तुस् तथैवास्य (०८१-०२७)
मम राज्यं प्रशासतः (०८१-०२७)
तानि सर्वाणि सर्वज्ञे (०८१-०२८)
सर्वकर्तरि केशवे (०८१-०२८)
दत्तानि तत्समुत्थो ऽयं (०८१-०२८)
गन्धभूषात्मको गुणः (०८१-०२८)
आहारा दयिता ये च (०८१-०२९)
पवित्राश् च निवेदिताः (०८१-०२९)
ते लोककर्त्रे क्षुणाय (०८१-०२९)
तृप्तिस् तद्गुणसंभवा (०८१-०२९)
स्वर्गकामेन मे भर्त्रा (०८१-०३०)
मया च शुभदर्शने (०८१-०३०)
कृतम् एतद् अतो नाभूद् (०८१-०३०)
आवयोर् भवसंक्षयः (०८१-०३०)
ये त्व् अकामां नराः सम्यग् (०८१-०३१)
एतत् कुर्वन्ति शोभने (०८१-०३१)
तेषां ददाति विश्वेशो (०८१-०३१)
भगवान् मुक्तिम् अच्युतः (०८१-०३१)
एवम् अभ्यर्च्य गोविन्दं (०८१-०३२)

सर्वभूतेश्वरेश्वरम् (०८१-०३२)
प्राप्नोत्य् अभिमतान् कामान् (०८१-०३२)
दैत्याह सुमना यथा (०८१-०३२)
चन्दनागरुकर्पूर- (०८१-०३३)
कुङ्कुमोशीरपद्मकैः (०८१-०३३)
अनुलिप्तो हरिर् भक्त्या (०८१-०३३)
वरान् भोगान् प्रयच्छति (०८१-०३३)
कालेयकं तुङ्गकं च (०८१-०३४)
पद्मचन्दनम् एव च (०८१-०३४)
नृणां भवन्ति रोगाय (०८१-०३४)
दत्तानि पुरुषोत्तमे (०८१-०३४)
तस्माद् एभिर् न गोविन्दः (०८१-०३५)
पूजनीयो महासुर (०८१-०३५)
यान्य् आत्मनः सदेष्टानि (०८१-०३५)
तानि शस्तान्य् उपाकुरु (०८१-०३५)
तथैव शुभगन्धा ये (०८१-०३६)
धूपास् ते जगतः पतेः (०८१-०३६)
वासुदेवस्य धर्मज्ञैर् (०८१-०३६)
निवेद्या दानवेश्वर (०८१-०३६)
न शल्लकीजं नाक्षौलं (०८१-०३७)
न शुक्तासवसंभृतम् (०८१-०३७)
दद्यात् कृष्णाय धर्मज्ञो (०८१-०३७)
धूपान् आराधनोद्यतः (०८१-०३७)
मालती मल्लिका चैव (०८१-०३८)
यूथिकाथातिमुक्तका (०८१-०३८)
पाटला करवीरश् च (०८१-०३८)
जवा पारन्तिर् एव च (०८१-०३८)
कुब्जकस् तगरश् चैव (०८१-०३९)
कर्णिकारः कुरण्टकः (०८१-०३९)
चम्पको रोतकः कुन्दो (०८१-०३९)
बाणो वर्वरमालिकाः (०८१-०३९)
अशोकतिलका रोध्रास् (०८१-०४०)
तथा चैवाटरूषकः (०८१-०४०)
अमी पुष्पप्रकारास् तु (०८१-०४०)
शस्ताः केशवपूजने (०८१-०४०)
बिल्वपत्रं शमीपत्रं (०८१-०४१)
पत्रं भृङ्गारकस्य च (०८१-०४१)
तमालपत्रं च बले (०८१-०४१)
सदैव भगवत्प्रियम् (०८१-०४१)
तुलसीकालतुलसी- (०८१-०४२)
पत्रं भृङ्गरजस्य च (०८१-०४२)
केतकीपत्रपुष्पं च (०८१-०४२)
सद्यस् तुष्टिकरं हरेः (०८१-०४२)
पद्मान्य् अम्बुसमुत्थानां (०८१-०४३)
रक्तनीले तथोत्पले (०८१-०४३)
सितोत्पलं च कृष्णस्य (०८१-०४३)
दयितानि सदासुर (०८१-०४३)
नार्कं नोन्मत्तकं कांचित् (०८१-०४४)
तथैव गिरिकर्णिकाम् (०८१-०४४)

न कण्टकारिकापुष्पम् (०८१-०४४)
अच्युताय निवेदयेत् (०८१-०४४)
कौटजं शाल्मलीपुष्पं (०८१-०४५)
शैरीषं च जनार्दने (०८१-०४५)
निवेदिते भयं रोगं (०८१-०४५)
निःस्वतां च प्रयच्छति (०८१-०४५)
येषां न प्रतिषेधो ऽस्ति (०८१-०४६)
गन्धवर्णान्वितानि च (०८१-०४६)
तानि पुष्पाणि देयानि (०८१-०४६)
विष्णवे प्रभविष्णवे (०८१-०४६)
सुगन्धैश् च सुरामांसी- (०८१-०४७)
कर्पूरागरुचन्दनैः (०८१-०४७)
तथान्यैश् च शुभैर् द्रव्यैर् (०८१-०४७)
अर्चयेज् जगतः पतिम् (०८१-०४७)
दुकूलपट्टकौशेय- (०८१-०४८)
वार्क्षकर्पासिकादिभिः (०८१-०४८)
वासोभिः पूजयेद् विष्णुं (०८१-०४८)
दैतेयेन्द्रात्मनः प्रियैः (०८१-०४८)
भक्ष्याणि यान्य् अभीष्टानि (०८१-०४९)
भोज्यान्य् अभिमतानि च (०८१-०४९)
फलं च वल्लभं यत् स्यात् (०८१-०४९)
तत् तद् देयं जनार्दने (०८१-०४९)
सुवर्णमणिमुक्तादि (०८१-०५०)
यच् चान्यद् अतिवल्लभम् (०८१-०५०)
तत् तद् देवातिदेवाय (०८१-०५०)
केशवाय निवेदयेत् (०८१-०५०)
आत्मानं केशवं मत्वा (०८१-०५१)
यद् यत् तस्यैव रोचते (०८१-०५१)
तत् तद् अव्यक्तरूपाय (०८१-०५१)
केशवाय निवेदयेत् (०८१-०५१)
चक्रवर्ती महावीर्यो (०८२-००१)
मान्धाता युवनाश्वजः (०८२-००१)
शशास स महाबाहुः (०८२-००१)
सप्तद्वीपां वसुंधराम् (०८२-००१)
अगायन्त च या गाथा (०८२-००२)
ये पुराणविदो जनाः (०८२-००२)
मान्धातरि महाबाहो (०८२-००२)
यौवनाश्वे समाश्रिताः (०८२-००२)
यावत् सूर्य उदेति स्म (०८२-००३)
यावच् च प्रतितिष्ठति (०८२-००३)
सर्वं तद् यौवनाश्वस्य (०८२-००३)
मान्धातुः क्षेत्रम् उच्यते (०८२-००३)
स यौवनगतः संराट् (०८२-००४)
सप्तद्वीपवतीं महीम् (०८२-००४)
शशास धर्मेण पुरा (०८२-००४)
चक्रवर्ती महाबलः (०८२-००४)
नान्यायकृन् न चाशक्तो (०८२-००५)
न दरिद्रो न कीकटः (०८२-००५)
तस्याभूत् पुरुषो राज्ये (०८२-००५)

सम्यग्धर्मानुशासिनः (०८२-००५)
चतस्रो गतयस् तस्य (०८२-००६)
यौवनाश्वस्य धीमतः (०८२-००६)
बभूवुर् अप्रतिहता (०८२-००६)
हतारातिबलस्य वै (०८२-००६)
तस्य भक्तिर् अतीवाभून् (०८२-००७)
निसर्गाद् एव भूपतेः (०८२-००७)
वासुदेवे जगद्धाम्नि (०८२-००७)
सर्वकारणकारणे (०८२-००७)
तस्य र्द्धिं महिमानं च (०८२-००८)
विलोक्य पृथिवीपतेः (०८२-००८)
न केवलं जनस्याभूत् (०८२-००८)
तस्याप्य् अत्यन्तविस्मयः (०८२-००८)
स चिन्तयाम् आस नृपः (०८२-००९)
समृद्ध्या विस्मितस् तया (०८२-००९)
कथं स्यात् सम्पद् एषा मे (०८२-००९)
पुनर् अप्य् अन्यजन्मनि (०८२-००९)
एवं सुबहुशो राजा (०८२-०१०)
दैत्येन्द्र सुमहाबलः (०८२-०१०)
चिन्तयन्न् अपि तन्मूलं (०८२-०१०)
न चासीन् निश्चयान्वितः (०८२-०१०)
यदा न निश्चयं राजा (०८२-०११)
स ययौ युवनाश्वजः (०८२-०११)
तदा पप्रच्छ धर्मज्ञान् (०८२-०११)
स विप्रान् समुपागतान् (०८२-०११)
वसिष्ठप्रमुखान् वत्स (०८२-०१२)
विविक्तान्तःपुरस्थितः (०८२-०१२)
प्रणिपत्य महाबाहुर् (०८२-०१२)
गृहीतासनसत्क्रियान् (०८२-०१२)
यदि सानुग्रहा बुद्धिर् (०८२-०१३)
भवतां मयि सत्तमाः (०८२-०१३)
तद् अहं प्रष्टुम् इच्छामि (०८२-०१३)
किंचित् तद् वक्तुम् अर्हथ (०८२-०१३)
समेत्याखिलविज्ञानं (०८२-०१४)
सम्यग्धौतान्तरात्मभिः (०८२-०१४)
भवद्भिर् यद् अहं न स्यां (०८२-०१४)
विमलस् तन् महाद्भुतम् (०८२-०१४)
यद् यथा तन् मया पृष्टा (०८२-०१५)
भवन्तो मत्प्रसाधिताः (०८२-०१५)
वक्तुम् अर्हन्ति विद्वांसः (०८२-०१५)
सर्वस्यैवोपकारिणः (०८२-०१५)
यस् ते मनसि संदेहस् (०८२-०१६)
तं पृच्छाद्य महीपते (०८२-०१६)
गदिष्यामो यथान्यायं (०८२-०१६)
यत् ते सांशयिकं हृदि (०८२-०१६)
वयं हि नरशार्दूल (०८२-०१७)
भवता परितोषिताः (०८२-०१७)
सम्यक् प्रजाः पालयता (०८२-०१७)
सप्तद्वीपे महीतले (०८२-०१७)

सुतुष्टो ब्राह्मणो ऽश्नीयाच् (०८२-०१८)
छिन्द्याद् वा धर्मसंशयम् (०८२-०१८)
हितं वोपदिशेद् धर्मम् (०८२-०१८)
अहिताद् वा निवर्तयेत् (०८२-०१८)
विवक्षुम् अथ भूपालं (०८२-०१९)
भार्या तस्यैव धीमतः (०८२-०१९)
प्रणामपूर्वम् आहेदं (०८२-०१९)
विनयात् प्रणयान्वितम् (०८२-०१९)
न स्त्रीणाम् अवनीपाल (०८२-०२०)
वक्तुम् ईदृग् इहेश्यते (०८२-०२०)
तथापि भूपते वक्ष्ये (०८२-०२०)
संपद् ईदृक् सुदुर्लभा (०८२-०२०)
भूयो ऽपि संशयं प्रष्टुम् (०८२-०२१)
अलम् ईश भवान् ऋषीन् (०८२-०२१)
न त्व् अहं पुरुषव्याघ्र (०८२-०२१)
सदान्तःपुरचारिणी (०८२-०२१)
स प्रसादं यदि भवान् (०८२-०२२)
करोति मम पार्थिव (०८२-०२२)
तन् मदीयम् ऋषीन् प्रष्टुं (०८२-०२२)
संशयं पार्थिवार्हसि (०८२-०२२)
ब्रूहि सुभ्रु मतं यत् ते (०८२-०२३)
प्रष्टव्या यन् मया द्विजाः (०८२-०२३)
भूयो ऽहम् आत्मसंदेहं (०८२-०२३)
प्रक्ष्याम्य् एतान् द्विजोत्तमान् (०८२-०२३)
श्रूयन्ते पृथिवीपाल (०८२-०२४)
नृप ये च पुरातनाः (०८२-०२४)
तेषां न संपद् भूपाल (०८२-०२४)
यथा तव किलाभवत् (०८२-०२४)
तद् ईदृक्संपदां धाम (०८२-०२५)
त्वम् अशेषक्षितीश्वरः (०८२-०२५)
येन कर्मविपाकेन (०८२-०२५)
तद् वदन्तु महर्षयः (०८२-०२५)
अहं च भवतो भार्या (०८२-०२६)
सर्वसीमन्तिनी भुवि (०८२-०२६)
विधिना केन तपसा (०८२-०२६)
नियुक्ता भवतो गृहे (०८२-०२६)
अतीव कर्मणा येन (०८२-०२६)
तद्विज्ञाने कुतूहलम् (०८२-०२६)
तारतम्यतयेशित्वम् (०८२-०२७)
अन्येष्व् अपि हि विद्यते (०८२-०२७)
निरस्तातिशयत्वेन (०८२-०२७)
नूनं नाल्पेन कर्मणा (०८२-०२७)
तद् अन्यजन्मचरितं (०८२-०२८)
नरनाथ निजं भवान् (०८२-०२८)
मुनीन् पृच्छतु या चाहं (०८२-०२८)
यन् मया च पुरा कृतम् (०८२-०२८)
स तथोक्तस् तया राजा (०८२-०२९)
पत्न्या विस्मितमानसः (०८२-०२९)
मुनीनां पुरतो भार्यां (०८२-०२९)

प्रशंसन् वाक्यम् अब्रवीत् (०८२-०२९)
साधु देवि मतं यन् मे (०८२-०३०)
त्वया तद् इदम् ईरितम् (०८२-०३०)
सत्यं मुनिवचः पुंसाम् (०८२-०३०)
अर्धं वै गृहिणी यथा (०८२-०३०)
ममाप्य् एतद् अभिप्रेतम् (०८२-०३१)
इमान् प्रष्टुं महामुनीन् (०८२-०३१)
यत् त्वयाभिहितं भद्रे (०८२-०३१)
मत्स्वभावानुयातया (०८२-०३१)
सो ऽहम् एतन् महाभागे (०८२-०३२)
प्रक्ष्याम्य् एतान् महामुनीन् (०८२-०३२)
नैषाम् अविदितं किंचित् (०८२-०३२)
त्रिषु लोकेषु विद्यते (०८२-०३२)
एवम् उक्त्वा प्रियां भार्यां (०८२-०३३)
प्रणिपत्य च तान् ऋषीन् (०८२-०३३)
यथावद् एतद् अखिलं (०८२-०३३)
पप्रच्छासुरसत्तम (०८२-०३३)
भगवन्तो ममाशेषं (०८२-०३४)
प्रसादाहृतचेतसः (०८२-०३४)
कथयन्तु यथावृत्तं (०८२-०३४)
यन् मया सुकृतं कृतम् (०८२-०३४)
को ऽहम् आसं पुरा विप्राः (०८२-०३५)
किं च कर्म मया कृतम् (०८२-०३५)
किं वानया सुचार्वङ्ग्या (०८२-०३५)
मम पत्न्या कृतं द्विजाः (०८२-०३५)
येनावयोर् इयं स्फीतिर् (०८२-०३६)
मर्त्यलोके सुदुर्लभा (०८२-०३६)
चत्वारश् चाप्रतिहता (०८२-०३६)
गतयो मम गच्छतः (०८२-०३६)
अशेषा भूभृतो वश्याः (०८२-०३७)
कोशस्यान्तो न विद्यते (०८२-०३७)
बलं चैवाप्रतिहतं (०८२-०३७)
शरीरारोग्यम् उत्तमम् (०८२-०३७)
अतिभाति च मे कान्त्या (०८२-०३८)
भार्येयम् अखिलं जगत् (०८२-०३८)
ममापि वपुषस् तेजो (०८२-०३८)
न कश्चित् सहते द्विजाः (०८२-०३८)
सो ऽहम् इच्छामि विज्ञातुं (०८२-०३९)
तथैवेयम् अनिन्दिता (०८२-०३९)
निजानुष्ठानम् अखिलं (०८२-०३९)
यस्याशेषम् इदं फलम् (०८२-०३९)
इति प्रष्टा नरेन्द्रेण (०८२-०४०)
समस्तास् ते तपोधनाः (०८२-०४०)
वसिष्ठं चोदयाम् आसुः (०८२-०४०)
कथ्यताम् इति भूभृतः (०८२-०४०)
चोदितः सो ऽपि धर्मज्ञैर् (०८२-०४१)
मैत्रावरुणिर् आत्मवान् (०८२-०४१)
योगम् आस्थाय सुचिरं (०८२-०४१)
यथावद् यतमानसः (०८२-०४१)

ज्ञातवान् नृपतेस् तस्य (०८२-०४१)
पूर्वदेहविचेष्टितम् (०८२-०४१)
स तम् आह मुनिर् भूपं (०८२-०४२)
विदितार्थो महासुर (०८२-०४२)
मान्धातारं महाबुद्धिं (०८२-०४२)
सपत्नीकम् इदं वचः (०८२-०४२)
शृणु भूपाल सकलं (०८२-०४३)
यस्येदं कर्मणः फलम् (०८२-०४३)
तव राज्यादिकं सुभ्रूर् (०८२-०४३)
येयं चासीन् महीपते (०८२-०४३)
त्वम् आसीः शूद्रजातीयः (०८२-०४४)
परहिंसापरायणः (०८२-०४४)
वाक्क्रूरो दण्डपारुष्यो (०८२-०४४)
निःस्नेहः सर्वजन्तुषु (०८२-०४४)
तथेयं भवतो भार्या (०८२-०४५)
पूर्वम् अप्य् आयतेक्षणा (०८२-०४५)
द्वेष्या बभूव तच्चित्ता (०८२-०४५)
तव शुश्रूषणे रता (०८२-०४५)
पतिव्रता महाभागा (०८२-०४६)
भर्त्स्यमानाप्य् अनिष्ठुरा (०८२-०४६)
त्वद्वाक्याद् अनु सर्वेषु (०८२-०४६)
वीरकर्मसु चोद्यता (०८२-०४६)
नैष्ठुर्याद् असहायस्य (०८२-०४७)
त्यज्यमानस्य बन्धुभिः (०८२-०४७)
क्षयं जगाम यो ऽर्थो ऽभूत् (०८२-०४७)
संचितः प्रपितामहैः (०८२-०४७)
तस्मिन् क्षीणे कृषिपरस् (०८२-०४८)
त्वम् आसीः पृथिवीपते (०८२-०४८)
सापि कर्मविपाकेन (०८२-०४८)
कृषिर् विफलतां गता (०८२-०४८)
ततो निःस्वं परिक्षीणं (०८२-०४९)
परेषां भृत्यतां गतम् (०८२-०४९)
तत्याज साध्वी वेयं त्वां (०८२-०४९)
त्यज्यमानापि पार्थिव (०८२-०४९)
अनया च समं साध्व्या (०८२-०५०)
विष्णोर् आवसथे त्वया (०८२-०५०)
कृतं शुश्रूषणं वीर (०८२-०५०)
परिव्राड्ब्रह्मचारिणाम् (०८२-०५०)
भग्नेहः सर्वकामेभ्यस् (०८२-०५१)
तन्मयस् त्वं तदर्पणः (०८२-०५१)
अनन्यगतिर् एकस्थस् (०८२-०५१)
तस्मिन्न् आयतने हरेः (०८२-०५१)
तद्वृत्तिलिप्सुः शुश्रूषां (०८२-०५२)
जनरञ्जनहेतुकः (०८२-०५२)
कृतवान् योगिनां वीर (०८२-०५२)
कृष्णस्य जगतः पतेः (०८२-०५२)
वासुदेवाजिरे नित्यं (०८२-०५३)
कृतं संमार्जनं त्वया (०८२-०५३)
तथैवाभ्युक्षणं वीर (०८२-०५३)

नित्यं चैवानुलेपनम् (०८२-०५३)
पत्न्यानया च धर्मज्ञ (०८२-०५३)
यष्मच्चित्तानुवृत्तया (०८२-०५३)
अहन्य् अहनि तत् कर्म (०८२-०५४)
युवयोर् नृप कुर्वतोः (०८२-०५४)
तत्र चैतन्मयत्वेन (०८२-०५४)
पापहानिर् अजायत (०८२-०५४)
विष्णोः कार्यं मया कार्यं (०८२-०५५)
योगिशुश्रूषणं तथा (०८२-०५५)
न प्रभातं प्रभातं तु (०८२-०५५)
चिन्तेयम् अभवन् निशि (०८२-०५५)
एवम् आयतनं रम्यम् (०८२-०५६)
इत्य् एवं च सुखावहम् (०८२-०५६)
स्थैर्यं न चैवम् एतत् स्याद् (०८२-०५६)
इत्य् आसीत् ते मनः सदा (०८२-०५६)
योगिनां सुखदं त्व् एवं (०८२-०५७)
कर्मैवं नैवम् इत्य् अपि (०८२-०५७)
तव चित्तम् अभूत् तत्र (०८२-०५७)
योगिकर्मण्य् अहर्निशम् (०८२-०५७)
एवं तन्मनसस् तत्र (०८२-०५८)
कृतोद्योगस्य पार्थिव (०८२-०५८)
भृत्यावसायिनः सम्यग् (०८२-०५८)
यथोक्ताधिककारिणः (०८२-०५८)
स्मरतः पुण्डरीकाक्षं (०८२-०५९)
कार्येणातिदृढात्मनः (०८२-०५९)
निःशेषम् उपशान्तं तत् (०८२-०५९)
पापं योगिनिषेवणात् (०८२-०५९)
ततो ऽधिकं पुरस् तस्माद् (०८२-०६०)
आदराद् अनुलेपनम् (०८२-०६०)
संमार्जनं च बहुशः (०८२-०६०)
सपत्निकेन ते कृतम् (०८२-०६०)
तत्रागतश् च सौवीरः (०८२-०६१)
पुरुजिन् नाम भूपतिः (०८२-०६१)
महासैन्यपरीवारः (०८२-०६१)
प्रभूतगजवाहनः (०८२-०६१)
सर्वसंपदुपेतं तं (०८२-०६२)
सर्वाभरणभूषितम् (०८२-०६२)
वृतं भार्यासहस्रेण (०८२-०६२)
दृष्ट्वा स्रक्चन्दनोज्ज्वलम् (०८२-०६२)
स्पृहा कृता त्वया तत्र (०८२-०६२)
चारुमौलिनि पार्थिवे (०८२-०६२)
सर्वकामप्रदं कर्म (०८२-०६३)
देवदेवस्य कुर्वता (०८२-०६३)
तेनैतद् अखिलं राज्यम् (०८२-०६३)
अशेषद्वीपवत् तव (०८२-०६३)
तेजश् चैवाधिकं यत् ते (०८२-०६४)
तथैतच् छृणु पार्थिव (०८२-०६४)
योगप्रभावोपलब्धं (०८२-०६४)
कथयाम्य् अखिलं तव (०८२-०६४)

तत्रैवावसथे दीपः (०८२-०६५)
प्रशान्तः स्नेहसंक्षयात् (०८२-०६५)
निजभोजनतैलेन (०८२-०६५)
पुनः प्रज्वालितस् त्वया (०८२-०६५)
अनया चोत्तरीयान्त- (०८२-०६६)
चीरवर्त्युपवृंहितः (०८२-०६६)
तव पत्न्या स जज्वाल (०८२-०६६)
कान्तिर् अस्यास् ततो ऽधिका (०८२-०६६)
तवाप्य् अखिलभूपाल- (०८२-०६७)
मनःक्षोभकरं ततः (०८२-०६७)
तेजो नरेन्द्र न स्याच् च (०८२-०६७)
किम् आराध्य जनार्दनम् (०८२-०६७)
एवं नरेन्द्र शूद्रत्वाद् (०८२-०६८)
विष्णुकर्मपरायणः (०८२-०६८)
तन्मयत्वेन संप्राप्तो (०८२-०६८)
महिमानम् अनुत्तमम् (०८२-०६८)
किं पुनर् यो नरो भक्त्या (०८२-०६९)
विष्णुशुश्रूषणादृतः (०८२-०६९)
करोति सततं पूजां (०८२-०६९)
निष्कामो नान्यमानसः (०८२-०६९)
स त्वम् ऋद्धिम् इमां लब्ध्वा (०८२-०७०)
सर्वलोकेश्वरेश्वरम् (०८२-०७०)
पूजयाच्युतम् ईशेशं (०८२-०७०)
तम् आराध्य न सीदति (०८२-०७०)
पुष्पैर् धूपैस् तथा गन्धैर् (०८२-०७१)
दीपवस्त्रानुलेपनैः (०८२-०७१)
आराधयाच्युतं तद्वद् (०८२-०७१)
वेश्मसंमार्जनादिभिः (०८२-०७१)
यद् यद् इष्टतमं किंचिद् (०८२-०७२)
यद् यद् अत्यन्तदुर्लभम् (०८२-०७२)
तत् तद् दात्त्वा जगद्धात्रे (०८२-०७२)
वैकुण्ठाय न सीदति (०८२-०७२)
सुगन्धागरुकर्पूर- (०८२-०७३)
चन्दनाक्षोदकुंकुमैः (०८२-०७३)
वासोभिर् विविधैर् धूपैः (०८२-०७३)
पुष्पस्रग्चामरैर् ध्वजैः (०८२-०७३)
अन्नोपहारैर् विविधैर् (०८२-०७४)
घृतक्षीराभिषेचनैः (०८२-०७४)
गीतवादितनृत्याद्यैस् (०८२-०७४)
तोषयस्वाच्युतं नृप (०८२-०७४)
पुण्यरात्रिषु गोविन्दं (०८२-०७५)
नृत्यगीतरवोज्ज्वलैः (०८२-०७५)
भूप जागरणैर् भक्त्या (०८२-०७५)
तोषयाच्युतम् अव्ययम् (०८२-०७५)
एवं संतोष्यते भक्त्या (०८२-०७६)
भगवान् भवभङ्गकृत् (०८२-०७६)
भूप भागवतैर् भूत- (०८२-०७६)
भव्यकृत् केशवो नरैः (०८२-०७६)
येषां न वित्तं तैर् भक्त्या (०८२-०७७)

मार्जनाद्युपलेपनैः (०८२-०७७)
तोषितो भगवान् विष्णुर् (०८२-०७७)
ददात्य् अभिमतं फलम् (०८२-०७७)
देवकर्मासमर्थाणां (०८२-०७८)
प्राणिनां स्मृतिसंस्तवैः (०८२-०७८)
तोषितो ऽभिमतान् कामान् (०८२-०७८)
प्रयच्छति जनार्दनः (०८२-०७८)
नैष वित्तैर् न रत्नौघैः (०८२-०७९)
पुष्पधूपानुलेपनैः (०८२-०७९)
सद्भावेनैव गोविन्दस् (०८२-०७९)
तोषम् आयाति संस्मृतः (०८२-०७९)
त्वयैकाग्रमनस्केन (०८२-०८०)
गृहसंमार्जनादिकम् (०८२-०८०)
कृत्वाल्पम् ईदृशं प्राप्तं (०८२-०८०)
राज्यम् अत्यन्तदुर्लभम् (०८२-०८०)
प्राप्तोपकरणो यस् त्वम् (०८२-०८१)
एकाग्रमतिर् अच्युतम् (०८२-०८१)
तोषयिष्यसि नेन्द्रो ऽपि (०८२-०८१)
भविता तेन ते समः (०८२-०८१)
तस्मात् त्वम् अनया देव्या (०८२-०८२)
सहात्यन्तविनीतया (०८२-०८२)
केशवाराधने यत्नं (०८२-०८२)
कुरु धर्मभृतां वर (०८२-०८२)
ततः प्राप्स्यसि भक्त्यैव (०८२-*(१३७))
यत् तपोभिः सुदुर्लभम् (०८२-*(१३७))
एतन् मुनेर् वसिष्ठस्य (०८३-००१)
निशाम्य वचनं नृपः (०८३-००१)
भार्यासहायः स तदा (०८३-००१)
संप्रहृष्टतनूरुहः (०८३-००१)
कृतकार्यम् इवात्मानं (०८३-००२)
मन्यमानो ऽसुरोत्तम (०८३-००२)
उवाच प्रणतो भूत्वा (०८३-००२)
मान्धाता वारुणिं वचः (०८३-००२)
यथामरत्वं संप्राप्य (०८३-००३)
यथा वा ब्रह्म शाश्वतम् (०८३-००३)
परं निर्वाणम् आप्नोति (०८३-००३)
तथाहं वचसा तव (०८३-००३)
कृतकृत्यः सुखी चास्मि (०८३-००४)
निर्वृतिं परमां गतः (०८३-००४)
अज्ञानतमसाछन्ने (०८३-००४)
यत् प्रदीपस् त्वयैधितः (०८३-००४)
अहम् एषा च तन्वङ्गी (०८३-००५)
विभूतिभ्रंसभीरुकौ (०८३-००५)
आढ्याव् आपादितौ ब्रह्मन्न् (०८३-००५)
इहाद्य वचसा तव (०८३-००५)
संपदां कथितं बीजम् (०८३-००६)
आवयोर् भवता मुने (०८३-००६)
तदुप्ताव् उद्यताव् आवां (०८३-००६)
विजानीहि द्विजोत्तम (०८३-००६)

न रत्नैर् न च वित्तौघैर् (०८३-००७)
न च पुष्पानुलेपनैः (०८३-००७)
आराध्यते जगन्नाथो (०८३-००७)
भावशून्यैर् जनार्दनः (०८३-००७)
बाह्यार्थनिरपेक्षैश् च (०८३-००८)
मनसैव मनोगतिः (०८३-००८)
निःस्वैर् आराध्यते देवो (०८३-००८)
विष्णुः सर्वेश्वरेश्वरः (०८३-००८)
सर्वम् एतन् मया ज्ञातं (०८३-००९)
यत् त्वम् आत्थ महामुने (०८३-००९)
यत् त्वां पृच्छामि तन् मे त्वं (०८३-००९)
प्रसादसुमुखो वद (०८३-००९)
कानि व्रतानि यैर् देवो (०८३-०१०)
नरैः स्त्रीभिश् च केशवः (०८३-०१०)
तोषम् आराधितो ऽभ्येति (०८३-०१०)
कैश् च दानैर् महामुने (०८३-०१०)
रहस्यानि च देवस्य (०८३-०११)
प्रीतये यानि चक्रिणः (०८३-०११)
तान्य् अशेषाणि मे ब्रूहि (०८३-०११)
कृष्णाराधनकाङ्क्षिणः (०८३-०११)
शृणु भूपाल यैर् विष्णुर् (०८३-०१२)
नरैर् आराध्यते व्रतैः (०८३-०१२)
नारीभिश् चातिघोरे ऽस्मिन् (०८३-०१२)
पतिताभिर् भवार्णवे (०८३-०१२)
समभ्यर्च्य जगन्नाथं (०८३-०१३)
वासुदेवं समाधिना (०८३-०१३)
एकम् अश्नाति यो भक्तं (०८३-०१३)
द्वितीयं ब्राह्मणात्मकम् (०८३-०१३)
करोति केशवप्रीत्यै (०८३-०१३)
कार्त्तिकं मासम् आत्मवान् (०८३-०१३)
पूर्वे वयसि यत् तेन (०८३-०१४)
ज्ञानतो ऽज्ञानतो ऽपि वा (०८३-०१४)
पापम् आचरितं तस्मान् (०८३-०१४)
मुच्यते नात्र संशयः (०८३-०१४)
अनेनैव विधानेन (०८३-०१५)
मार्गशीर्षे ऽपि माधवम् (०८३-०१५)
समभ्यर्च्यैकभक्तं वै (०८३-०१५)
वर्णिभ्यो यः प्रयच्छति (०८३-०१५)
भगवत्प्रीणनार्थाय (०८३-०१५)
फलं तस्य शृणुष्व मे (०८३-०१५)
मध्ये वयसि यत् पापं (०८३-०१६)
योषिता पुरुषेण वा (०८३-०१६)
कृतं तस्माच् च तेनोक्तो (०८३-०१६)
विमोक्षः परमात्मना (०८३-०१६)
तथा चैवैकभक्तं वै (०८३-०१७)
वर्णाग्रेभ्यः प्रयच्छति (०८३-०१७)
पुण्डरीकाक्षम् अभ्यर्च्य (०८३-०१७)
पौषमासे महीपते (०८३-०१७)
तत्प्रीणनाय यत् पापं (०८३-०१८)

वार्द्धिके तेन वै कृतम् (०८३-०१८)
स तस्मान् मुच्यते राजन् (०८३-०१८)
पुमान् योषिद् अथापि वा (०८३-०१८)
त्रैमासिकव्रतम् इदं (०८३-०१९)
यः करोति नरेश्वर (०८३-०१९)
स विष्णुप्रीणनात् पापैर् (०८३-०१९)
लघुभिर् विप्रमुच्यते (०८३-०१९)
द्वितीये वत्सरे राजन् (०८३-०२०)
मुच्यते चोपपातकैः (०८३-०२०)
तद्वत् तृतीये ऽपि कृतं (०८३-०२०)
महापातकनाशनम् (०८३-०२०)
व्रतम् एतन् नरैः स्त्रीभिस् (०८३-०२१)
त्रिभिर् मासैर् अनुष्ठितम् (०८३-०२१)
त्रिभिः संवत्सरैर् एव (०८३-०२१)
प्रददाति फलं नृणाम् (०८३-०२१)
त्रिभिर् मासैस् त्रिर् अवस्थास् (०८३-०२२)
त्रिविधात् पातकान् नृप (०८३-०२२)
त्रीणि नामानि देवस्य (०८३-०२२)
मोचयन्ति त्रिवार्षिकैः (०८३-०२२)
यतस् ततो व्रतम् इदं (०८३-०२३)
त्रिक्रमं समुदाहृतम् (०८३-०२३)
सर्वपापप्रशमनं (०८३-०२३)
केशवाराधनं परम् (०८३-०२३)
शृणुष्व च महीपाल (०८४-००१)
व्रतं विष्णुपदत्रयम् (०८४-००१)
सर्वपापप्रशमनं (०८४-००१)
यज् जगाद पुरा हरिः (०८४-००१)
प्राचेतसाय दक्षाय (०८४-००२)
दक्षश् चाह विवस्वते (०८४-००२)
विवस्वान् अलसिध्राय (०८४-००२)
अलसिध्रो ऽसिताय च (०८४-००२)
असितेन समाख्यातम् (०८४-००३)
अल्पायासं महाफलम् (०८४-००३)
तद् इदं श्रूयतां सम्यग् (०८४-००३)
व्रतं विष्णुपदत्रयम् (०८४-००३)
दक्षः प्रजापतिः पूर्वं (०८४-००४)
विष्णुम् आराध्य पृष्टवान् (०८४-००४)
बहुशस् तु विपन्नायां (०८४-००४)
सृष्टाव् अरिनिसूदन (०८४-००४)
भगवन् सर्वकर्तृत्वं (०८४-००५)
ममादिष्टं स्वयंभुवा (०८४-००५)
ब्रह्मणा देवदेवेश (०८४-००५)
तवादेशेन केशव (०८४-००५)
विपन्ना च जगन्नाथ (०८४-००६)
मम सृष्टिः कृता कृता (०८४-००६)
पूर्वकर्मविपाकेन (०८४-००६)
व्याकुलश् चास्मि चेतसा (०८४-००६)
यथा च देव मुच्येय (०८४-००७)
अस्मात् संसारसंकटात् (०८४-००७)

विषयासङ्गविषमात् (०८४-००७)
तन् ममाज्ञापयाच्युत (०८४-००७)
इत्य् एवम् उक्तो दक्षेण (०८४-००८)
देवदेवो जनार्दनः (०८४-००८)
आचष्ट दुःखक्षयदं (०८४-००८)
व्रतं विष्णुपदत्रयम् (०८४-००८)
सर्वारम्भविनिष्पत्ति- (०८४-००९)
कारकं पापनाशनम् (०८४-००९)
संसारोच्छेदकं धीरैर् (०८४-००९)
आचीर्णं स्थिरबुद्धिभिः (०८४-००९)
तद् अहं तव राजेन्द्र (०८४-०१०)
व्रतानाम् उत्तमोत्तमम् (०८४-०१०)
कथयामि समाचष्ट (०८४-०१०)
यथा पूर्वं ममासितः (०८४-०१०)
आषाढे मासि पूर्वासु (०८४-०११)
तथाषाढासु पार्थिव (०८४-०११)
समभ्यर्च्य जगन्नाथम् (०८४-०११)
अच्युतं नियतः शुचिः (०८४-०११)
पुष्पैर् हृद्यैस् तथा धूपैर् (०८४-०१२)
गन्धैः सागरुचन्दनैः (०८४-०१२)
यथाविभवतश् चान्यैर् (०८४-०१२)
अन्नैर् वासोभिर् एव च (०८४-०१२)
क्षीरस्नेहस्थितं तद्वत् (०८४-०१३)
पैष्टं विष्णुपदद्वयम् (०८४-०१३)
समभ्यर्च्य यथान्यायं (०८४-०१३)
केशवस्याग्रतो न्यसेत् (०८४-०१३)
यवांश् च दद्याद् विप्राय (०८४-०१४)
भूगतिः प्रीयताम् इति (०८४-०१४)
नक्तं भुञ्जीत राजेन्द्र (०८४-०१४)
हविष्यान्नं सुसंस्कृतम् (०८४-०१४)
तथोत्तरास्व् आषाढासु (०८४-०१५)
श्रावणे मासि मानवः (०८४-०१५)
तथैवाभ्यर्च्य गोविन्दं (०८४-०१५)
तद्वद् विष्णुपदद्वयम् (०८४-०१५)
विप्राय च यवान् दद्यात् (०८४-०१६)
प्रीणयित्वा च भूगतिम् (०८४-०१६)
नक्तं भुञ्जीत राजेन्द्र (०८४-०१६)
नरो योषिद् अथापि वा (०८४-०१६)
प्राप्ते भाद्रपदे मासि (०८४-०१७)
पूर्वभद्रपदासु च (०८४-०१७)
तथैवाभ्यर्च्य गोविन्दं (०८४-०१७)
तद्वद् विष्णुपदद्वयम् (०८४-०१७)
विप्राय च यवान् दत्त्वा (०८४-०१८)
प्रीणयित्वा भुवोगतिम् (०८४-०१८)
भुञ्जीत गोरसप्रायं (०८४-०१८)
नरो योषिद् अथापि वा (०८४-०१८)
तद्वद् आश्वयुजे दानं (०८४-०१९)
तद्वद् गोविन्दपूजनम् (०८४-०१९)
पदद्वयस्य पूजां च (०८४-०१९)

प्रीणनं च भुवोगतेः (०८४-०१९)
तथैव नक्तं भुञ्जीत (०८४-०२०)
गोरसं मौनम् आस्थितः (०८४-०२०)
स्त्री वा राजेन्द्र पूर्वासु (०८४-०२०)
तथा भद्रपदासु वै (०८४-०२०)
फाल्गुने फल्गुनी पूर्वा (०८४-०२१)
भवती ह यदा नृप (०८४-०२१)
त्रिविक्रमं तदा देवं (०८४-०२१)
पूर्वोक्तविधिनार्चयेत् (०८४-०२१)
पदद्वयं च देवस्य (०८४-०२२)
सम्यग् अभ्यर्च्य पार्थिव (०८४-०२२)
हिरण्यं दक्षिणां दत्त्वा (०८४-०२२)
स्वर्गतिः प्रीयताम् इति (०८४-०२२)
नक्तं भुञ्जीत राजेन्द्र (०८४-०२३)
वह्निपाकविवर्जितम् (०८४-०२३)
एष एवोत्तरायोगे (०८४-०२३)
चैत्रे मासे विधिः स्मृतः (०८४-०२३)
एतज् जगाद गोविन्दः (०८४-०२४)
पुरा दक्षाय पृच्छते (०८४-०२४)
सर्वपापहरं पुण्यं (०८४-०२४)
व्रतं विष्णुपदत्रयम् (०८४-०२४)
यथोक्तम् एतद् यो भक्तो (०८४-०२५)
करोति नृपसत्तम (०८४-०२५)
सर्वकामान् अवाप्नोति (०८४-०२५)
केशवस्य वचो यथा (०८४-०२५)
अपुत्रो लभते पुत्रम् (०८४-०२६)
अपतिर् लभते पतिम् (०८४-०२६)
समागमं प्रोषितैश् च (०८४-०२६)
तथा प्राप्नोति बान्धवैः (०८४-०२६)
द्रव्यम् ऐश्वर्यम् आरोग्यं (०८४-०२७)
सौभाग्यं चारुरूपताम् (०८४-०२७)
प्राप्नुवन्त्य् अखिलान् एतान् (०८४-०२७)
पूजयित्वा पदत्रयम् (०८४-०२७)
यान् यान् कामान् नरः स्त्री वा (०८४-०२८)
हृदयेनाभिवाञ्छन्ति (०८४-०२८)
तांस् तांश् चाप्नोति निष्कामो (०८४-०२८)
विष्णुलोकं च गच्छति (०८४-०२८)
पूर्वं कृत्वापि पापानि (०८४-०२९)
नरः स्त्री वा नराधिप (०८४-०२९)
पदत्रयव्रतं चीर्त्वा (०८४-०२९)
मुच्यते सर्वकिल्बिषैः (०८४-०२९)
विष्णोर् आराधनार्थाय (०८५-००१)
यानि दानानि सत्तम (०८५-००१)
देयानि तान्य् अशेषाणि (०८५-००१)
ममाचक्ष्व द्विजोत्तम (०८५-००१)
येन चैव विधानेन (०८५-००२)
दानं पुंसः सुखावहम् (०८५-००२)
प्रीणनाय च कृष्णस्य (०८५-००२)
तन् ममाख्याहि विस्तरात् (०८५-००२)

कृतोपवासः संप्राश्य (०८५-००३)
पञ्चगव्यं नरेश्वर (०८५-००३)
घृतक्षीराभिषेकं च (०८५-००३)
कृत्वा विष्णोः समाहितः (०८५-००३)
समभ्यर्च्य च गोविन्दं (०८५-००४)
पुष्पादिभिर् अरिंदम (०८५-००४)
उदङ्मुखीम् अर्चयित्वा (०८५-००४)
तथा गृष्टिं पयस्विनीम् (०८५-००४)
सपुत्रां वस्त्रसंवीतां (०८५-००५)
सितयज्ञोपवीतिनीम् (०८५-००५)
स्वर्णशृङ्गीं शुभाकारां (०८५-००५)
हिरण्योपरिसंस्थिताम् (०८५-००५)
हिरण्यं वाचयित्वाग्रे (०८५-००६)
ब्राह्मणायोपपादयेत् (०८५-००६)
इमां त्वं प्रतिगृह्णीष्व (०८५-००६)
गोविन्दः प्रीयताम् इति (०८५-००६)
सम्यग् उच्चार्य तं विप्रं (०८५-००७)
गोविन्दं नृप कल्पयेत् (०८५-००७)
अनुव्रजेच् च गच्छन्तं (०८५-००७)
पदान्य् अष्टौ नराधिप (०८५-००७)
अनेन विधिना धेनुं (०८५-००८)
यो विप्राय प्रयच्छति (०८५-००८)
गोविन्दप्रीणनाद् राजन् (०८५-००८)
विष्णुलोकं च गच्छति (०८५-००८)
सप्तावरांस् तथा पूर्वान् (०८५-००९)
सप्तात्मानं च मानवः (०८५-००९)
सप्तजन्मकृतात् पापान् (०८५-००९)
मोचयत्य् अवनीपते (०८५-००९)
पदे पदे च यज्ञस्य (०८५-०१०)
गोसवस्य स मानवः (०८५-०१०)
फलम् आप्नोति राजेन्द्र (०८५-०१०)
दक्षायैवं जगौ हरिः (०८५-०१०)
सर्वकामसमृद्धस्य (०८५-०११)
सर्वकालेषु पार्थिव (०८५-०११)
भवत्य् अघौघापहरा (०८५-०११)
यावद् इन्द्राश् चतुर्दश (०८५-०११)
सर्वेषाम् एव पापानां (०८५-०१२)
कृतानाम् अविजानता (०८५-०१२)
प्रायश्चित्तम् इदं शस्तम् (०८५-०१२)
अनुतापोपबृंहितम् (०८५-०१२)
इक्ष्वाकुनैषा राजेन्द्र (०८५-०१३)
पूर्वं दत्ता महात्मना (०८५-०१३)
ततः स लोकान् अमलान् (०८५-०१३)
प्राप्तवान् अवनीपतिः (०८५-०१३)
तथैवान्यैर् महीपालैर् (०८५-०१४)
द्विजवैश्यादिभिस् तथा (०८५-०१४)
लोकाः कामदुघाः प्राप्ता (०८५-०१४)
दत्त्वेदृग्विधिना नृप (०८५-०१४)
तिलधेनुं प्रवक्ष्यामि (०८६-००१)

केशवप्रीणनाय या (०८६-००१)
दत्ता भवति यश् चास्या (०८६-००१)
नरेन्द्र विधिर् उत्तमः (०८६-००१)
फलम् आप्नोति राजेन्द्र (०८६-*(१३९))
तद्वद् वा विधिवत् तदा (०८६-*(१३९))
यां दत्वा ब्रह्महा गोघ्नः (०८६-००२)
पितृघ्नो गुरुतल्पगः (०८६-००२)
आगारदाही गरदः (०८६-००२)
सर्वपापरतो ऽपि वा (०८६-००२)
महापातकयुक्तो यो (०८६-००३)
युक्तो यश् चोपपातकैः (०८६-००३)
स मुच्यते ऽखिलैः पापैर् (०८६-००३)
विष्णुलोकं स गच्छति (०८६-००३)
स्वनुलिप्ते महीपृष्टे (०८६-००४)
वस्त्राजिनसमावृते (०८६-००४)
धेनुं तिलमयीं कृत्वा (०८६-००४)
सर्वरत्नैः समन्विताम् (०८६-००४)
सुवर्णशृङ्गीं रौप्यखुरां (०८६-००५)
गन्धघ्राणवतीं शुभाम् (०८६-००५)
मृष्टान्नजिह्वां कुर्वीत (०८६-००५)
गुडास्यां सूत्रकम्बलाम् (०८६-००५)
इक्षुपादां ताम्रपृष्ठां (०८६-००६)
कुर्यान् मुक्ताफलेक्षणाम् (०८६-००६)
प्रशस्तपत्रश्रवणां (०८६-००६)
फलदन्तवतीं शुभाम् (०८६-००६)
स्रग्दामपुच्छां कुर्वीत (०८६-००७)
नवनीतस्तनान्विताम् (०८६-००७)
फलैर् मनोहरैर् भक्षैर् (०८६-००७)
मणिमुक्ताफलान्विताम् (०८६-००७)
तिलद्रोणेन कुर्वीत (०८६-००७)
आढकेन तु वत्सकम् (०८६-००७)
शुभवस्त्रयुगच्छन्नां (०८६-००८)
चारुच्छत्त्रसमन्विताम् (०८६-००८)
ईदृक्संस्थानसंपन्नां (०८६-००८)
कृत्वा श्राद्धसमन्वितः (०८६-००८)
कांस्योपदोहनां दद्यात् (०८६-००८)
केशवः प्रीयताम् इति (०८६-००८)
सम्यग् उच्चार्य विधिना (०८६-००९)
दत्त्वैतेन नराधिप (०८६-००९)
सर्वपापविनिर्मुक्तः (०८६-००९)
पितरं सपितामहम् (०८६-००९)
प्रपितामहं तथा पूर्वं (०८६-०१०)
पुरुषाणां चतुष्टयम् (०८६-०१०)
आत्मानं तनयं पौत्रं (०८६-०१०)
तदधस् तु चतुष्टयम् (०८६-०१०)
तारयत्य् अवनीपाल (०८६-०१०)
तिलधेनुप्रदो नरः (०८६-०१०)
यश् च गृह्णाति विधिवत् (०८६-०११)
तस्याप्य् एवंविधान् कुलान् (०८६-०११)

चतुर्दश तथा चैव (०८६-०११)
ददतश् चानुमोदकाः (०८६-०११)
दीयमानां प्रपश्यन्ति (०८६-०१२)
तिलधेनुं च ये नराः (०८६-०१२)
ते ऽप्य् अशेषाघनिर्मुक्ताः (०८६-०१२)
प्रयान्ति परमां गतिम् (०८६-०१२)
प्रशान्ताय सुशीलाय (०८६-०१३)
तथामत्सरिणे बुधः (०८६-०१३)
तिलधेनुं नरो दद्याद् (०८६-०१३)
वेदस्नाताय धर्मिणे (०८६-०१३)
त्रिरात्रं यस् तिलाहारस् (०८६-०१४)
तिलधेनुं प्रयच्छति (०८६-०१४)
दत्त्वैकरात्रं च पुनस् (०८६-०१४)
तिलान् अत्ति नरेश्वर (०८६-०१४)
दातुर् विशुद्धपापस्य (०८६-०१५)
तस्य पुण्यवतो नृप (०८६-०१५)
चान्द्रायणाद् अभ्यधिकं (०८६-०१५)
शस्तं तत् तिलभक्षणम् (०८६-०१५)
तिलाभावे तथा दद्याद् (०८७-००१)
घृतधेनुं यतव्रतः (०८७-००१)
कल्पयित्वा यथान्यायं (०८७-००१)
तिलधेन्वा यतव्रतः (०८७-००१)
येन भूप विधानेन (०८७-००१)
तद् इहैकमनाः शृणु (०८७-००१)
वासुदेवं जगन्नाथं (०८७-००२)
पुरुषेशम् अजं विधुम् (०८७-००२)
सर्वपापनिहन्तारं (०८७-००२)
घृतक्षीराभिषेचनात् (०८७-००२)
संपूज्य पूर्ववत् पुष्प- (०८७-००२)
गन्धधूपादिभिर् नरः (०८७-००२)
अहोरात्रोषितो भूत्वा (०८७-००३)
तत्परः प्रयतः शुचिः (०८७-००३)
परमेशम् अथो नाम्ना (०८७-००३)
अभिष्टूय घृतार्चिषा (०८७-००३)
गव्यस्य सर्पिषः कुम्भं (०८७-००४)
पुष्पमाल्यादिभूषितम् (०८७-००४)
कांस्योपधानसंयुक्तं (०८७-००४)
सितवस्त्रयुगेन च (०८७-००४)
हिरण्यगर्भसहितं (०८७-००४)
मणिविद्रुममुक्तिकैः (०८७-००४)
इक्षुयष्टिमयान् पादान् (०८७-००५)
खुरान् रौप्यमयांस् तथा (०८७-००५)
सौवर्णे चाक्षिणी कुर्याच् (०८७-००५)
शृङ्गे चागरुकाष्ठजे (०८७-००५)
सप्तधान्यमये पार्श्वे (०८७-००६)
पत्त्रोर्णानि च कम्बलम् (०८७-००६)
कुर्यात् तुरुष्ककर्पूरौ (०८७-००६)
घ्राणं फलमयान् स्तनान् (०८७-००६)
मणिरत्नसुवर्णानां (०८७-*(१४०))

सम्यक्कल्पनया कृताम् (०८७-*(१४०))
तद्वच् छर्करया जिह्वां (०८७-००७)
गुडक्षीरमयं मुखम् (०८७-००७)
क्षौमसूत्रेण लाङ्गूलं (०८७-००७)
रोमाणि सितसर्षपैः (०८७-००७)
ताम्रपात्रमयं पृष्ठं (०८७-००७)
कुर्याच् छ्रद्धासमन्वितः (०८७-००७)
ईदृक्स्वरूपां संकल्प्य (०८७-००८)
घृतधेनुं नराधिप (०८७-००८)
तद्वत्कल्पनया धेन्वा (०८७-००८)
घृतवत्सं प्रकल्पयेत् (०८७-००८)
तं च विप्रं महाभाग (०८७-००९)
मनसैव घृतार्चिषम् (०८७-००९)
कल्पयित्वा ततस् तस्मै (०८७-००९)
प्रयतः प्रतिपादयेत् (०८७-००९)
एतां ममोपकाराय (०८७-०१०)
घृह्णीष्व त्वं द्विजोत्तम (०८७-०१०)
प्रीयतां मम देवेशो (०८७-०१०)
घृताऋचिः पुरुषोत्तमः (०८७-०१०)
इत्य् उदाहृत्य विप्राय (०८७-०१०)
दद्याद् धेनुं नरोत्तम (०८७-०१०)
मणिमुक्तासुवर्णानां (०८७-*(१४१))
सम्यक्कल्पनया कृताम् (०८७-*(१४१))
दत्त्वैकरात्रं स्थित्वा च (०८७-०११)
घृताहारो नराधिप (०८७-०११)
मुच्यते सर्वपापेभ्यस् (०८७-०११)
तथा दानफलं शृणु (०८७-०११)
घृतक्षीरवहा नद्यो (०८७-०१२)
यत्र पायसकर्दमाः (०८७-०१२)
तेषु लोकेषु लोकेश (०८७-०१२)
स पुण्येषूपजायते (०८७-०१२)
पितुर् ऊर्ध्वेन ये सप्त (०८७-०१३)
पुरुषाः सप्त ये ऽप्य् अधः (०८७-०१३)
तांस् तेषु नृप लोकेषु (०८७-०१३)
स नयत्य् अस्तकल्मषः (०८७-०१३)
सकामानाम् इयं व्युष्टिः (०८७-०१४)
कथिता नृपसत्तम (०८७-०१४)
विष्णुलोकं नरा यान्ति (०८७-०१४)
निष्कामा घृतधेनुदाः (०८७-०१४)
घृतम् अग्निर् घृतं सोमस् (०८७-०१५)
तन्मयाः सर्वदेवताः (०८७-०१५)
घृतं प्रयच्छता दत्ता (०८७-०१५)
भवन्त्य् अखिलदेवताः (०८७-०१५)
जलधेनुं प्रवक्ष्यामि (०८८-००१)
प्रीयते दत्तया यया (०८८-००१)
देवदेवो हृषीकेशः (०८८-००१)
सर्वेशः सर्वभावनः (०८८-००१)
जलकुम्भं नरव्याघ्र (०८८-००२)
सुवर्णरजतान्वितम् (०८८-००२)

रत्नगर्भम् अशेषैस् तु (०८८-००२)
ग्राम्यैर् धान्यैः समन्वितम् (०८८-००२)
सितवस्त्रयुगच्छन्नं (०८८-००३)
दूर्वापल्लवशोभितम् (०८८-००३)
कुष्ठं मांसीम् उशीरं च (०८८-००३)
वालकामलकैर् युतम् (०८८-००३)
प्रियङ्गुपात्रसहितं (०८८-००४)
सितयज्ञोपवीतिनम् (०८८-००४)
सच्छत्त्रं सौपानत्कं (०८८-००४)
दर्भविस्तरसंस्थितम् (०८८-००४)
चतुर्भिः संवृतं भूप (०८८-००५)
तिलपात्रैश् चतुर्दिशम् (०८८-००५)
स्थगितं दधिपात्रेण (०८८-००५)
घृतक्षौद्रवता मुखे (०८८-००५)
उपोषितः समभ्यर्च्य (०८८-००६)
वासुदेवं जनेश्वरम् (०८८-००६)
पुष्पधूपोपहारैस् तु (०८८-००६)
यथाविभवम् आदृतः (०८८-००६)
संकल्प्य जलधेनुं च (०८८-००७)
कुम्भं समभिपूज्य च (०८८-००७)
पूजयेद् वत्सकं तद्वत् (०८८-००७)
कृतं जलमयं बुधः (०८८-००७)
एवं संपूज्य गोविन्दं (०८८-००८)
जलधेनुं सवत्सकाम् (०८८-००८)
सितवस्त्रधरः शान्तो (०८८-००८)
वीतरागो विमत्सरः (०८८-००८)
दद्याद् विप्राय राजेन्द्र (०८८-००९)
प्रीत्यर्थं जलशायिनः (०८८-००९)
जलशायी जगद्योनिः (०८८-००९)
प्रीयतां मम केशवः (०८८-००९)
इति चोच्चार्य भूनाथ (०८८-०१०)
विप्राय प्रतिपाद्यताम् (०८८-०१०)
अपक्वान्नाशिना स्थेयम् (०८८-०१०)
अहोरात्रम् अतःपरम् (०८८-०१०)
अनेन विधिना दत्त्वा (०८८-०११)
जलधेनुं जनाधिप (०८८-०११)
सर्वाह्लादान् अवाप्नोति (०८८-०११)
ये दिव्या ये च मानुषाः (०८८-०११)
शरीरारोग्यम् आबाधा- (०८८-०१२)
प्रशमः सार्वकामिकः (०८८-०१२)
नृणां भवति दत्तायां (०८८-०१२)
जलधेन्वां न संशयः (०८८-०१२)
अत्रापि श्रूयते भूप (०८८-०१३)
पुद्गलेन महात्मना (०८८-०१३)
जातिस्मरेण यद् गीतम् (०८८-०१३)
इहाभ्येत्य पुरा किल (०८८-०१३)
स पुद्गलः पुरा विप्रो (०८८-०१४)
यमलोकगतो मुनिः (०८८-०१४)
ददर्श यातना घोराः (०८८-०१४)

पापकर्मकृतां किल (०८८-०१४)
दीप्ताग्नितीक्ष्णशस्त्रोत्थाः (०८८-०१५)
क्वाथतैलगतास् तथा (०८८-०१५)
उष्णक्षारनदीपाता (०८८-०१५)
भैरवाः पुरुषर्षभ (०८८-०१५)
व्रणाः क्षारनिपातोग्राः (०८८-०१६)
कुम्भीपाकमहाभयाः (०८८-०१६)
ता दृष्ट्वा यातना विप्रश् (०८८-०१६)
चकार परमां कृपाम् (०८८-०१६)
आह्लादं ते तदा जग्मुः (०८८-०१७)
पापास् तदनुकम्पिताः (०८८-०१७)
तं दृष्ट्वा नारकाः केचित् (०८८-०१७)
केचित् तदवलोकिनः (०८८-०१७)
तदा स्वस्थं विलोक्यैव (०८८-०१८)
मुनिर् नारकमण्डलम् (०८८-०१८)
धर्मराजं स पप्रच्छ (०८८-०१८)
तेषां प्रशमकारणम् (०८८-०१८)
तस्मै चाचष्ट राजेन्द्र (०८८-०१९)
तदा वैवस्वतो यमः (०८८-०१९)
आह्लादहेतुं विप्राय (०८८-०१९)
पृच्छते पृथिवीपते (०८८-०१९)
तवानुभावाद् एतेषां (०८८-०२०)
नारकाणां द्विजोत्तम् (०८८-०२०)
संप्रवृत्तो ऽयम् आह्लादः (०८८-०२०)
कारणं यच् छृणुष्व तत् (०८८-०२०)
त्वयाभ्यर्च्य जगन्नाथं (०८८-०२१)
सर्वेशं जलशायिनम् (०८८-०२१)
जलधेनुः पुरा दत्ता (०८८-०२१)
विधिवन् मुनिपुङ्गव (०८८-०२१)
अस्मात् तु जन्मनो ऽतीते (०८८-०२२)
तृतीये द्विज जन्मनि (०८८-०२२)
तस्य दानस्य ते व्युष्टिर् (०८८-०२२)
इयम् आह्लाददायिनी (०८८-०२२)
येन त्वं तपसा युक्तो (०८८-०२३)
मानवानाम् अगोचरम् (०८८-०२३)
संप्राप्तो ऽसि महाप्रज्ञ (०८८-०२३)
सर्वशास्त्रविशारद (०८८-०२३)
ये त्वां पश्यन्ति शृण्वन्ति (०८८-०२४)
ये च ध्यायन्ति पापिनः (०८८-०२४)
शृणोषि यांस् त्वं विप्रेन्द्र (०८८-०२४)
यांश् च ध्यायसि पश्यसि (०८८-०२४)
निर्वृतिः परमा तेषां (०८८-०२५)
सर्वाह्लादप्रदायिनी (०८८-०२५)
सद्यो भवति मात्र त्वं (०८८-०२५)
द्विजेन्द्र कुरु विस्मयम् (०८८-०२५)
आह्लादहेतुजननं (०८८-०२६)
नास्ति विप्रेन्द्र तादृशम् (०८८-०२६)
जलधेनुर् यथा नृणां (०८८-०२६)
जन्मान्य् एकोनसप्ततिः (०८८-०२६)

न दाघो न क्लमो नार्तिर् (०८८-०२७)
न मोहो विप्र जायते (०८८-०२७)
अपि जन्मसहस्रेषु (०८८-०२७)
जलधेनुप्रदायिनाम् (०८८-०२७)
एकजन्मकृतं वाञ्छा (०८८-०२८)
त्रिजन्मोत्थं समाहृता (०८८-०२८)
सप्तजन्मकृतं पापं (०८८-०२८)
हन्ति दत्ताम्बुगौर् नृणाम् (०८८-०२८)
स त्वं गच्छ गृहीत्वार्घम् (०८८-०२९)
अस्मत्तो द्विजसत्तम (०८८-०२९)
येषां समाश्रयः कृष्णो (०८८-०२९)
न नियम्या हि ते मया (०८८-०२९)
कृष्णः संपूजितो यैस् तु (०८८-०३०)
ये कृष्णार्थम् उपोषिताः (०८८-०३०)
यैश् च नित्यं स्मृतः कृष्णो (०८८-०३०)
न ते मद्विषयोपगाः (०८८-०३०)
नमः कृष्णाच्युतानन्त (०८८-०३१)
वासुदेवेत्य् उदीरितम् (०८८-०३१)
यैर् भावभावितैर् विप्र (०८८-०३१)
न ते मद्विषयोपगाः (०८८-०३१)
दानं ददद्भिर् यैर् उक्तम् (०८८-०३२)
अच्युतः प्रीयताम् इति (०८८-०३२)
श्रद्धापुरःसरैर् विप्र (०८८-०३२)
न ते मद्विषयोपगाः (०८८-०३२)
उत्तिष्ठद्भिः स्वपद्भिश् च (०८८-०३३)
व्रजद्भिश् च जनार्दनः (०८८-०३३)
यैः संस्मृतो द्विजश्रेष्ठ (०८८-०३३)
न ते मद्विषयोपगाः (०८८-०३३)
क्षुतस्खलितभीत्यादाव् (०८८-०३४)
असहद्भिश् च वेदनाम् (०८८-०३४)
कृष्णेत्य् उदीरितं यैश् च (०८८-०३४)
न ते मद्विषयोपगाः (०८८-०३४)
सर्वाबाधासु ये कृष्णं (०८८-०३५)
स्मरन्त्य् उच्चारयन्ति च (०८८-०३५)
तद्भावभाविता विप्र (०८८-०३५)
न ते मद्विषयोपगाः (०८८-०३५)
स एव धाता सर्वस्य (०८८-०३६)
तन्नियोगकरा वयम् (०८८-०३६)
जनसंयमनोद्युक्ताः (०८८-०३६)
सो ऽस्मत्संयमनो हरिः (०८८-०३६)
इत्थं निशाम्य वचनं (०८८-०३७)
यमस्य वदतो मुनिम् (०८८-०३७)
ऊचुस् ते नारकाः सर्वे (०८८-०३७)
वह्निशस्त्रास्त्रभीरवः (०८८-०३७)
नमः कृष्णाय हरये (०८८-०३८)
विष्णवे जिष्णवे नमः (०८८-०३८)
हृषीकेशाय देवाय (०८८-०३८)
जगद्धात्रे ऽच्युताय च (०८८-०३८)
नमः पङ्कजनेत्राय (०८८-०३९)

नमः पङ्कजनाभये (०८८-०३९)
जनार्दनाय श्रीशाय (०८८-०३९)
श्रीपते पीतवाससे (०८८-०३९)
गोविन्दाय नमो नित्यं (०८८-०४०)
नमश् चोदधिशायिने (०८८-०४०)
नमः करालवक्त्राय (०८८-०४०)
नृसिंहायातिनादिने (०८८-०४०)
शार्ङ्गिणे सितखड्गाय (०८८-०४१)
शङ्खचक्रगदाधृते (०८८-०४१)
नमो वामनरूपाय (०८८-०४१)
क्रान्तलोकत्रयाय च (०८८-०४१)
वराहरूपाय तथा (०८८-०४२)
नमो यज्ञाङ्गधारिणे (०८८-०४२)
व्याप्ताशेषदिगन्ताय (०८८-०४२)
शान्ताय परमात्मने (०८८-०४२)
वासुदेव नमस् तुभ्यं (०८८-०४३)
नमः कैटभसूदन (०८८-०४३)
केशवाय नमो व्यापिन् (०८८-०४३)
नमस् ते ऽस्तु महीधर (०८८-०४३)
नमो ऽस्तु वासुदेवायेत्य् (०८८-०४४)
एवम् उच्चारिते ततः (०८८-०४४)
शस्त्राणि कुण्ठतां जग्मुर् (०८८-०४४)
अनलश् चाप्य् अशीशमत् (०८८-०४४)
अभज्यन्त च यन्त्राणि (०८८-०४५)
समुत्पेतुर् अयोमुखाः (०८८-०४५)
संशुष्काः क्षारसरितः (०८८-०४५)
पतितः कूटशाल्मलिः (०८८-०४५)
प्रकाशतामसीतत्त्वं (०८८-०४६)
नरकश् चागतस् तु सः (०८८-०४६)
विवान् बभञ्ज पवनो ऽप्य् (०८८-०४६)
असिपत्रवनं ततः (०८८-०४६)
निरुत्साहा जडधियो (०८८-०४७)
बभूवुर् यमकिंकराः (०८८-०४७)
आसन् गन्धाम्बुवाहिन्यः (०८८-०४७)
पूयशोणितनिम्नगाः (०८८-०४७)
ववौ सुगन्धी पवनो (०८८-०४८)
मनःप्रीतिकरस् ततः (०८८-०४८)
वेणुवीणास्वनयुतान् (०८८-०४८)
गीतशब्दांश् च शुश्रुवुः (०८८-०४८)
तं तादृशम् अथालक्ष्य (०८८-०४९)
नृप वैवस्वतो यमः (०८८-०४९)
नरकस्य विपर्यासं (०८८-०४९)
संक्षुब्धहृदयस् ततः (०८८-०४९)
ददर्श नारकान् सद्यो (०८८-०५०)
दिव्यस्रगनुलेपनान् (०८८-०५०)
जाज्वल्यमानांस् तेजोभिर् (०८८-०५०)
अमलाम्बरवाससः (०८८-०५०)
नमो नमो ऽस्तु कृष्णाय (०८८-०५१)
गोविन्दायाव्ययात्मने (०८८-०५१)

वासुदेवाय देवाय (०८८-०५१)
विष्णवे प्रभविष्णवे (०८८-०५१)
इत्य् एवं वादिनस् तत्र (०८८-०५२)
प्रजासंयमनो यमः (०८८-०५२)
क्षीणपापचयांस् तांस् तु (०८८-०५२)
पाद्यार्घ्यादिभिर् अर्चयन् (०८८-०५२)
पूजयित्वा च तान् आह (०८८-०५३)
स कृष्णाय कृताञ्जलिः (०८८-०५३)
समाहितमना भूत्वा (०८८-०५३)
धर्मराजो नरेश्वर (०८८-०५३)
विष्णोर् देवातिदेवस्य (०८८-०५४)
जगद्धातुः प्रजापतेः (०८८-०५४)
प्रणामं ये ऽपि कुर्वन्ति (०८८-०५४)
तेषाम् अपि नमो नमः (०८८-०५४)
सर्वस्य सर्वसंस्थस्य (०८८-०५५)
सर्वाधारस्य योगिनः (०८८-०५५)
ये विष्णोः प्रणतास् तेभ्यो (०८८-०५५)
नमः सद्यः पुनः पुनः (०८८-०५५)
तस्य यज्ञवराहस्य (०८८-०५६)
विष्णोर् अमिततेजसः (०८८-०५६)
प्रणामं ये ऽपि कुर्वन्ति (०८८-०५६)
तेषाम् अपि नमो नमः (०८८-०५६)
एवं ते संस्तुतास् तेन (०८८-०५७)
धर्मराजेन नारकाः (०८८-०५७)
विमानानि समारूढा (०८८-०५७)
नृत्तगान्धर्ववन्ति वै (०८८-०५७)
पुद्गलो ऽपि महाबुद्धिर् (०८८-०५८)
दृष्ट्वैतद् अखिलं नृप (०८८-०५८)
जातिस्मरो ऽभवद् भूप (०८८-०५८)
कण्वगोत्रे महामुनिः (०८८-०५८)
संस्मृत्य यमवाक्यानि (०८८-०५९)
विष्णोर् माहात्म्यम् एव च (०८८-०५९)
जलधेन्वाश् च माहात्म्यं (०८८-०५९)
संस्मृत्यैतद् अगायत (०८८-०५९)
अहो दुरुत्तरा विष्णोर् (०८८-०६०)
मायेयम् अतिगह्वरी (०८८-०६०)
यया मोहितचित्तस् तं (०८८-०६०)
न वेत्ति परमेश्वरम् (०८८-०६०)
जीवो वाञ्छति कीटत्वं (०८८-०६१)
यूकामत्कुणयोनितः (०८८-०६१)
तस्माच् च शलभादीनां (०८८-०६१)
योनिं तस्माच् च पक्षिणाम् (०८८-०६१)
ततश् च पशुतां प्राप्य (०८८-०६२)
नरत्वम् अभिवाञ्छति (०८८-०६२)
विमुक्तिहेतुकी धन्या (०८८-०६२)
नरयोनिः कृतात्मनाम् (०८८-०६२)
न प्राप्नुवन्ति संसारे (०८८-०६३)
विभ्रान्तमनसो गतिम् (०८८-०६३)
जीवा मानुष्यताम् अन्ये (०८८-०६३)

जन्मनाम् अयुतैर् अपि (०८८-०६३)
विष्णुमायापरीतास् ते (०८८-*(१४२))
प्राप्यापि न तरन्ति ये (०८८-*(१४२))
तद् ईदृग्दुर्लभं प्राप्य (०८८-०६४)
मुक्तिद्वारम् अचेतसः (०८८-०६४)
पतन्ति भूयः संसारे (०८८-०६४)
विष्णुमायाविमोहिताः (०८८-०६४)
दुस्तरापि तु साध्यासौ (०८८-०६५)
माया कृष्णस्य मोहनी (०८८-०६५)
छिद्यते यामनोन्यस्ते (०८८-०६५)
मुधैव हि जनार्दने (०८८-०६५)
असंत्यज्य च गार्हस्थ्यम् (०८८-०६६)
अतप्त्वैव तथा तपः (०८८-०६६)
छिन्दन्ति वैष्णवीं मायां (०८८-०६६)
केशवार्पितमानसाः (०८८-०६६)
अविरोधेन विषयाम् (०८८-०६७)
भुञ्जन् विष्णुव्यपाश्रयः (०८८-०६७)
कृत्वा मनस् तरत्य् एतां (०८८-०६७)
विष्णोर् मायां सुदुस्तराम् (०८८-०६७)
ईदृग्बहुफलां भक्तिं (०८८-०६८)
सर्वधातरि केशवे (०८८-०६८)
मायया तस्य देवस्य (०८८-०६८)
न कुर्वन्ति विमोहिताः (०८८-०६८)
मुधैवोक्तं मुधायातं (०८८-०६९)
मुधा तद् विधिचेष्टितम् (०८८-०६९)
मुधैव जन्म तन् नष्टं (०८८-०६९)
यत्र नाराधितो हरिः (०८८-०६९)
आराधितो हि यः पुंसाम् (०८८-०७०)
ऐहिकामुष्मिकं फलम् (०८८-०७०)
ददाति भगवान् देवः (०८८-०७०)
कस् तं न प्रतिपूजयेत् (०८८-०७०)
संवत्सरास् तथा मासा (०८८-०७१)
विफला दिवसाश् च ते (०८८-०७१)
नराणां विषयान्धानां (०८८-०७१)
येषु नाराधितो हरिः (०८८-०७१)
यो न वित्तर्द्धिविभवैर् (०८८-०७२)
न वसोभिर् न भूषणैः (०८८-०७२)
तुष्यते हृदयेनैव (०८८-०७२)
कस् तम् ईशं न पूजयेत् (०८८-०७२)
जलधेन्वाश् च माहात्म्यं (०८८-०७३)
निशाम्यापीदृशं नराः (०८८-०७३)
तां न यच्छन्ति ये तेषां (०८८-०७३)
विवेकः कुत्र तिष्ठति (०८८-०७३)
कर्मभूमौ हि मानुष्यं (०८८-०७४)
जन्मनाम् अयुतैर् अपि (०८८-०७४)
स्वर्गापवर्गफलदं (०८८-०७४)
कदाचित् प्राप्यते नरैः (०८८-०७४)
संप्राप्य तन् न यैर् विष्णुस् (०८८-०७५)
तोषितो नाम्बुधेनुका (०८८-०७५)

दत्ता च सम्यक् ते मुष्टा (०८८-०७५)
जन्मनि सुबहूनि भोः (०८८-०७५)
ऊर्ध्वबाहुर् विरौम्य् एष (०८८-०७६)
दृष्टलोकद्वयो ऽस्मि भोः (०८८-०७६)
आराधयत गोविन्दं (०८८-०७६)
जलधेनुं प्रयच्छत (०८८-०७६)
दुःसहो नारको वह्निर् (०८८-०७७)
अविषह्याश् च यातनाः (०८८-०७७)
ज्ञानं ममैतद् आलम्ब्य (०८८-०७७)
कृष्णे भवत सुस्थिराः (०८८-०७७)
अदेशिके देशिको ऽहम् (०८८-०७८)
अत्र मार्गे मयोदितम् (०८८-०७८)
विमृष्य सत्यम् इत्य् एतन् (०८८-०७८)
मनः कृष्णे निवेश्यताम् (०८८-०७८)
प्रातः कृष्णेति देवेति (०८८-०७९)
गोविन्देति च जल्पताम् (०८८-०७९)
मध्याह्ने चापराह्ने च (०८८-०७९)
यो ऽवसादः स उच्यताम् (०८८-०७९)
अनेकविषयालम्बि (०८८-०८०)
यच् चित्तं तज् जनार्दने (०८८-०८०)
कुरुध्वम् आलम्बनवत् (०८८-०८०)
संस्मृतः पुण्यदो हि सः (०८८-०८०)
मुधैव जिह्वा कृष्णेति (०८८-०८१)
केशवेति च वक्ष्यति (०८८-०८१)
मुधा च चित्तं तद्वामि (०८८-०८१)
यदि स्यात् किम् अतो ऽधिकम् (०८८-०८१)
मयोक्तम् एतद् बहुशो (०८८-०८२)
विनष्टे तु शरीरके (०८८-०८२)
मनुष्यत्वं विना विष्णुर् (०८८-०८२)
दुर्लभो वो भविष्यति (०८८-०८२)
एताः पुद्गलगाथास् ते (०८८-०८३)
यमवाक्यं तवोदितम् (०८८-०८३)
जलधेन्वाश् च माहात्म्यं (०८८-०८३)
विष्णुसंपूजनस्य च (०८८-०८३)
व्रतानि सोपवासानि (०८८-०८४)
सर्वकामप्रदानि ते (०८८-०८४)
व्रतम् अन्यन् महाभाग (०८८-०८४)
सर्वकामप्रदं शृणु (०८८-०८४)
भविष्यं चापरं भूप (०८९-००१)
ममैतच् छ्रोतुम् अर्हसि (०८९-००१)
यत् प्रक्ष्यति महीपालः (०८९-००१)
परिक्षित् स्वपुरोहितम् (०८९-००१)
परीक्षितः पुरोधास् तु (०८९-००२)
द्विजो गौरमुखो नृप (०८९-००२)
भविष्यति शमीकस्य (०८९-००२)
शिष्यः परमसंमतः (०८९-००२)
स च राजा जगद्धातुर् (०८९-००३)
देवदेवस्य शार्ङ्गिनः (०८९-००३)
सदैवाराधने यत्नं (०८९-००३)

भक्तियुक्तः करिष्यति (०८९-००३)
पुरोधसं गौरमुखं (०८९-००४)
प्रणिपत्य स पार्थिवः (०८९-००४)
प्रक्ष्यत्य् आराधनार्थाय (०८९-००४)
देवदेवस्य चक्रिणः (०८९-००४)
भगवन् भवभीतो ऽहम् (०८९-००५)
अभवाय ततो भवान् (०८९-००५)
आराधयितुम् इच्छामि (०८९-००५)
सर्वेच्छापूरकं हरिं (०८९-००५)
संकुरुष्व महाभाग (०८९-००६)
प्रसादं मम सुव्रत (०८९-००६)
कृष्णाराधनकामस्य (०८९-००६)
मनसो देशिको भव (०८९-००६)
आराधनेन येनेशो (०८९-००७)
जगताम् ईश्वरेश्वरः (०८९-००७)
विष्णुर् आराध्यते पुंभिः (०८९-००७)
संसाराब्धिपरिक्षतैः (०८९-००७)
तन् ममोपदिश ब्रह्मन् (०८९-००८)
प्रसादप्रवणं मनः (०८९-००८)
कृत्वा सदैवार्तिमतां (०८९-००८)
शरण्यं शरणं गुरुः (०८९-००८)
एवं स तेन भूपाल (०८९-००९)
भूपालेन र्षिपुङ्गवः (०८९-००९)
केशवाराधनार्थाय (०८९-००९)
सम्यक् पृष्टः प्रवक्ष्यति (०८९-००९)
नमस्कृत्य जगद्धात्रे (०८९-०१०)
देवदेवाय शार्ङ्गिने (०८९-०१०)
परमेशसुरेशाय (०८९-०१०)
हृषीकेशाय वेधसे (०८९-०१०)
वरार्थिनाम् अमोघाय (०८९-०११)
परस्मै हरिमेधसे (०८९-०११)
सर्वकल्याणभूताय (०८९-०११)
शङ्खचक्रगदाधृते (०८९-०११)
वरासिचर्मावितते (०८९-०१२)
क्रूरशान्तात्ममूर्तये (०८९-०१२)
यद्यद्भूतोपकाराय (०८९-०१२)
तत्तद्रूपविकारिणे (०८९-०१२)
परमाण्वन्तपर्यन्त- (०८९-०१३)
सहस्रांशाणुमूर्तये (०८९-०१३)
जठरान्तायुताशान्त- (०८९-०१३)
स्थितब्रह्माण्डधारिणे (०८९-०१३)
श्वेतादिदीर्घह्रस्वादि- (०८९-०१४)
कठिनादिविकल्पना (०८९-०१४)
योगिचिन्त्ये जगद्धाम्नि (०८९-०१४)
यत्र नास्त्य् अखिलात्मनि (०८९-०१४)
तम् अजं शाश्वतं नित्यं (०८९-०१५)
परिणामविवर्जितम् (०८९-०१५)
योगिभिश् चिन्त्यते मूर्तिर् (०८९-०१५)
यत्र तत्राखिलात्मनि (०८९-०१५)

तत्र तत्रात्मनो नित्यं (०८९-०१६)
परिणामविवर्जितम् (०८९-०१६)
प्रणम्य जगताम् ईशम् (०८९-०१६)
अनन्तं परतः परम् (०८९-०१६)
परं पराणां स्रष्टारं (०८९-०१७)
पुराणं पुरुषं प्रभुम् (०८९-०१७)
वरं वरेण्यं वरदं (०८९-०१७)
स्थूलसूक्ष्मस्वरूपिणम् (०८९-०१७)
अशेषजगतां मूलम् (०८९-०१८)
अनादिनिधनस्थितिम् (०८९-०१८)
परापरस्वरूपस्थम् (०८९-०१८)
अविकारस्वरूपिणम् (०८९-०१८)
यस्योपचारतः स्वर्गं (०८९-०१९)
स्वरूपं व्यतिरिच्यते (०८९-०१९)
ज्ञानज्ञेयस्य मुनिभिर् (०८९-०१९)
ज्ञानविद्भिर् महात्मभिः (०८९-०१९)
तस्मै पार्थिवमुख्याय (०८९-०२०)
रघुवर्यमहात्मने (०८९-०२०)
श्रूयतां स मुनिश्रेष्ठो (०८९-०२०)
यद् वक्ष्यति परीक्षिते (०८९-०२०)
देवकी नाम राजेन्द्र (०८९-०२१)
देवकस्याभवत् सुता (०८९-०२१)
अनपत्या तपस् तेपे (०८९-०२१)
पुत्रार्थं किल भामिनी (०८९-०२१)
भार्या सा वसुदेवस्य (०८९-०२२)
सत्यधर्मपरायणा (०८९-०२२)
न चातुष्यत गोविन्दस् (०८९-०२२)
ततस् ताम् आह भार्गवः (०८९-०२२)
किमर्थं तप्यते भद्रे (०८९-०२३)
तपः परमदुश्चरम् (०८९-०२३)
को ऽर्थस् तवाभिलषितो (०८९-०२३)
गन्तुं कुत्र तवेप्सितम् (०८९-०२३)
अपुत्राहं द्विजश्रेष्ठ (०८९-०२४)
पत्युर् मे नास्ति संततिः (०८९-०२४)
साहम् आराध्य गोविन्दं (०८९-०२४)
पुत्रम् इच्छामि शोभनम् (०८९-०२४)
तपस् तावत् करिष्यामि (०८९-०२५)
परमेण समाधिना (०८९-०२५)
यावद् आराधितो विष्णुर् (०८९-०२५)
दास्यत्य् अभिमतं मम (०८९-०२५)
गोविन्दाराधने यत्नो (०८९-०२६)
यदि ते कुलनन्दिनि (०८९-०२६)
तद् इदं व्रतम् आस्थाय (०८९-०२६)
तोषयाशु जनार्दनम् (०८९-०२६)
प्रथमे कार्त्तिकस्याह्नि (०८९-०२७)
संप्राप्ते देवकात्मजे (०८९-०२७)
पञ्चगव्यजलस्नातः (०८९-०२७)
पञ्चगव्यकृताशनः (०८९-०२७)
बाणपुष्पैः समभ्यर्च्य (०८९-०२८)

वासुदेवम् अजं विभुम् (०८९-०२८)
दत्त्वा च चन्दनं धूपं (०८९-०२८)
परमान्नं निवेदयेत् (०८९-०२८)
घृतेन वाचयेद् विप्रं (०८९-०२८)
गृह्णीयाच् च ततो व्रतम् (०८९-०२८)
अद्यप्रभृत्य् अहं मासं (०८९-०२९)
विरतः प्राणिनां वधात् (०८९-०२९)
असत्यवचनात् स्तैन्यान् (०८९-०२९)
मधुमांसादिभक्षणात् (०८९-०२९)
स्वपन् विबुध्यन् गच्छंश् च (०८९-०३०)
स्मरिष्याम्य् अहम् अच्युतम् (०८९-०३०)
परापवादपैशून्यं (०८९-०३०)
परपीडाकरं तथा (०८९-०३०)
सच्छास्त्रदेवतायज्वि- (०८९-०३१)
निन्दाम् अन्यस्य वा भुवि (०८९-०३१)
न वक्ष्यामि जगत्य् अस्मिन् (०८९-०३१)
पश्यन् सर्वगत हरिम् (०८९-०३१)
इत्य् अन्यच् चापि शक्नोति (०८९-०३२)
यन् निर्वोढुं यशस्विनि (०८९-०३२)
कुर्वीत नियमं तस्य (०८९-०३२)
त्यागो धर्माय यस्य च (०८९-०३२)
कृत्वैवं पुरतो विष्णोर् (०८९-०३३)
निवृत्तिं पापतः शुभे (०८९-०३३)
नैवेद्यं स्वयम् अश्नीयान् (०८९-०३३)
मौनी नित्यम् उदङ्मुखः (०८९-०३३)
मार्गशीर्षे तथा मासि (०८९-०३४)
जातिपुष्पैर् जनार्दनम् (०८९-०३४)
समभ्यर्च्य शुभे धूपं (०८९-०३४)
चन्दनं संनिवेद्य च (०८९-०३४)
परमान्नं च देवाय (०८९-०३५)
विप्राय च पुनर् घृतम् (०८९-०३५)
दत्त्वा तथैव गृह्णीयान् (०८९-०३५)
नियमं चास्य रोचते (०८९-०३५)
तथैव नक्तं भुञ्जीत (०८९-०३६)
नैवेद्यं कुलनन्दिनि (०८९-०३६)
सर्वेष्व् एव तु मासेषु (०८९-०३६)
पञ्चगव्यादिकं समम् (०८९-०३६)
पुष्पधूपोपहारेषु (०८९-०३७)
विशेषो दक्षिणासु च (०८९-०३७)
स्नानप्राशनयोः साम्यं (०८९-०३७)
तथा वै नक्तभोजने (०८९-०३७)
अर्चयेत् प्रतिमासं च (०८९-०३८)
यैः पुष्पैस् तानि मे शृणु (०८९-०३८)
ये च धूपाः प्रदातव्या (०८९-०३८)
नैवेद्यान्नं च यद् यदा (०८९-०३८)
बाणस्य जातिकुसुमैस् (०८९-०३९)
तथैव च कुरुण्ठकैः (०८९-०३९)
कुन्दातिमुक्तकै रक्त- (०८९-०३९)
करवीरैश् च देवकि (०८९-०३९)

श्वेतैस् ततो मालिकया (०८९-०४०)
तथा मल्लिकया ततः (०८९-०४०)
दधिपिण्ड्याथ केतक्या (०८९-०४०)
पद्मरक्तोत्पलेन च (०८९-०४०)
क्रमेणाभ्यर्चितो विष्णुर् (०८९-०४०)
ददाति मनसेप्सितम् (०८९-०४०)
कार्त्तिके मार्गशीर्षे च (०८९-०४१)
धूपः पौषे च चन्दनम् (०८९-०४१)
माघफाल्गुनचैत्रेषु (०८९-०४१)
दद्याद् विष्णोस् तथागरुम् (०८९-०४१)
वैशाखादिषु मासेषु (०८९-०४२)
त्रिषु देवकि भक्तितः (०८९-०४२)
कर्पूरं देवदेवाय (०८९-०४२)
गुग्गुलं श्रावणादिषु (०८९-०४२)
कार्त्तिकादिषु मासेषु (०८९-०४३)
परमान्नं शुभे त्रिषु (०८९-०४३)
कासारं माघपूर्वेषु (०८९-०४३)
यवान्नं च ततस् त्रिषु (०८९-०४३)
घृतं तिलाञ् जलघटान् (०८९-०४४)
हिरण्यम् अथवाजिनम् (०८९-०४४)
प्रतिमासं तथा दद्याद् (०८९-०४४)
ब्राह्मणाय शुभव्रते (०८९-०४४)
यथोक्तं नियमानां च (०८९-०४५)
ग्रहणं प्रतिमासिकम् (०८९-०४५)
कुर्वञ् जगत्पतिर् विष्णुः (०८९-०४५)
प्रीयताम् इति मानवः (०८९-०४५)
योषिद् अप्य् अमलप्रज्ञे (०८९-०४६)
व्रतम् एतद् यथाविधि (०८९-०४६)
करोति या सा सकलान् (०८९-०४६)
अवाप्नोति मनोरथान् (०८९-०४६)
व्रतेनाराधितो विष्णुर् (०८९-०४७)
अनेन जगतः पतिः (०८९-०४७)
ददात्य् अभिमतान् कामान् (०८९-०४७)
अल्पकालेन भामिनि (०८९-०४७)
धन्यं यशस्यम् आयुष्यं (०८९-०४८)
सौभाग्यारोग्यदं तथा (०८९-०४८)
व्रतम् एतत् प्रियतमं (०८९-०४८)
व्रतेभ्यो ऽव्यक्तजन्मनः (०८९-०४८)
व्रतेनानेन शुद्धानाम् (०८९-०४९)
अब्देनैकेन केशवः (०८९-०४९)
सुखदृश्यो न संदेहो (०८९-०४९)
दीपेनैवाग्रतः स्थितः (०८९-०४९)
कायवाङ्मनसो शुद्धिं (०८९-०५०)
करोत्य् एतन् महाव्रतम् (०८९-०५०)
शुद्धानां चामलो देवो (०८९-०५०)
दृश्य एव जनार्दनः (०८९-०५०)
तस्मिन्न् एकाग्रचित्तानां (०८९-०५१)
प्राणिनां वरवर्णिनि (०८९-०५१)
विप्रा एव प्रयत्नेन (०८९-०५१)

मुक्तिभाजो विभूतयः (०८९-०५१)
यथा कल्पतरुं प्राप्य (०८९-०५२)
यद् यद् इच्छति चेतसा (०८९-०५२)
तत् तत् फलम् अवाप्नोति (०८९-०५२)
तथा संप्राप्य तं विभुम् (०८९-०५२)
शुद्धिव्रतम् इदं तस्मान् (०८९-०५३)
महापातकनाशनम् (०८९-०५३)
आराधनाय कृष्णस्य (०८९-०५३)
कुरु देवकि पावनम् (०८९-०५३)
तस्मिंश् चीर्णे हृषीकेशस् (०८९-०५४)
तुभ्यं दास्यति दर्शनम् (०८९-०५४)
दृष्टे चाभिमतं यत् ते (०८९-०५४)
तद् अशेषं भविष्यति (०८९-०५४)
देवकी भार्गवस्यैतच् (०९०-००१)
श्रुत्वा वाक्यं नराधिप (०९०-००१)
शुद्धिकामा चचाराथ (०९०-००१)
सर्वकामप्रदं व्रतम् (०९०-००१)
व्रतेनाराधितस् तेन (०९०-००२)
तदा देव्या जनार्दनः (०९०-००२)
ददौ दर्शनम् ईशेशः (०९०-००२)
शङ्खचक्रगदाधरः (०९०-००२)
दृष्टे तस्मिन्न् अशेषेशे (०९०-००३)
जगद्धातरि केशवे (०९०-००३)
कृत्वा प्रणामम् आहेदं (०९०-००३)
भक्तिनम्राथ देवकी (०९०-००३)
जगताम् ईश्वरेशेश (०९०-००४)
ज्ञान ज्ञेय भवाव्यय (०९०-००४)
समस्तदेवतादेव (०९०-००४)
वासुदेव नमो ऽस्तु ते (०९०-००४)
प्रधानपुंसोर् अजयोर् (०९०-००५)
यः कारणम् अकारणम् (०९०-००५)
अविशेष्यम् अजं रूपं (०९०-००५)
तव तस्मै नमो ऽस्तु ते (०९०-००५)
त्वं प्रधानं पुमांश् चैव (०९०-००६)
कारणाकारणात्मकः (०९०-००६)
सद् असच् चाखिलं देव (०९०-००६)
केनोक्तेन तव स्तवः (०९०-००६)
प्रसीद देव देवानाम् (०९०-००७)
अरिशातन वामन (०९०-००७)
लोभाभिभूता यद् अहं (०९०-००७)
वरयामि प्रयच्छ तत् (०९०-००७)
अदितिस् त्वं महाभागे (०९०-००८)
भुवं प्राप्ता सुरारणि (०९०-००८)
भर्ता च ते कश्यपो ऽयं (०९०-००८)
देयस् तव वरो मया (०९०-००८)
अपुत्रास्मि न मे भर्तुर् (०९०-००९)
अस्ति केशव संततिः (०९०-००९)
प्रसीद देहि मे पुत्रम् (०९०-००९)
अरिदुर्धारपौरुषम् (०९०-००९)

भविष्यत्य् अचिराद् देवि (०९०-०१०)
मदंशेन सुतस् तव (०९०-०१०)
हन्तव्या दानवास् तेन (०९०-०१०)
सद्धर्मपरिपन्थिनः (०९०-०१०)
त्वाम् अहं जगद्धातारम् (०९०-०११)
उदारोरुपराक्रमम् (०९०-०११)
धारयिष्यामि गर्भेण (०९०-०११)
कथम् अच्युत शंस मे (०९०-०११)
तवोदरे ऽवतारं वै (०९०-०१२)
पुरापि बलिबन्धने (०९०-०१२)
कुर्वता विधृताः सप्त (०९०-०१२)
लोकास् त्वं चात्ममायया (०९०-०१२)
तथा सांप्रतम् अप्य् एतांल् (०९०-०१३)
लोकान् सस्थाणुजङ्गमान् (०९०-०१३)
धारयिष्याम्य् अथात्मानं (०९०-०१३)
त्वां च देवकि लीलया (०९०-०१३)
इत्य् एवम् उक्त्वा तां देवीं (०९०-०१४)
देवकीं भगवान् प्रभुः (०९०-०१४)
तिरोबभूव गोविन्दो (०९०-०१४)
भूर्भुवःप्रभवो विभुः (०९०-०१४)
अवाप च ततो गर्भं (०९०-०१५)
देवकी वसुदेवतः (०९०-०५१)
अजायत च विश्वेशः (०९०-०१५)
स्वेनाङ्गेन जनार्दनः (०९०-०१५)
नीलोत्पलदलश्यामं (०९०-०१६)
ताम्रायतविलोचनम् (०९०-०१६)
चतुर्बाहुम् उदाराङ्गं (०९०-०१६)
श्रीवत्साङ्कितवक्षसम् (०९०-०१६)
तं जातं देवकी देवं (०९०-०१७)
निधानं सर्वतेजसाम् (०९०-०१७)
प्रणिपत्याभितुष्टाव (०९०-०१७)
संप्रस्तुतपयोधरा (०९०-०१७)
अबालो बालरूपेण (०९०-०१८)
येनेश त्वम् इहास्थितः (०९०-०१८)
त्वद्रूपं प्रणिपत्याहं (०९०-०१८)
यद् ब्रवीमि निबोध तत् (०९०-०१८)
नमस् ते सर्वभूतेश (०९०-०१९)
नमस् ते मधुसूदन (०९०-०१९)
नमस् ते पुण्डरीकाक्ष (०९०-०१९)
नमस् ते ऽस्तु जनार्दन (०९०-०१९)
नमस् ते शार्ङ्गचक्रासि- (०९०-०२०)
गदापरिघपाणये (०९०-०२०)
उपेन्द्रायाप्रमेयाय (०९०-०२०)
हृषीकेशाय वै नमः (०९०-०२०)
नमो ऽस्तु ते ऽणुरूपाय (०९०-०२१)
बृहद्रूपाय वै नमः (०९०-०२१)
अशेषभूतरूपाय (०९०-०२१)
तथारूपाय ते नमः (०९०-०२१)
अनिर्देश्यविशेषाय (०९०-०२२)

तुभ्यं सर्वात्मने नमः (०९०-०२२)
सर्वेश्वराय सर्वाय (०९०-०२२)
सर्वभूताय ते नमः (०९०-०२२)
नमो ऽस्तु ते वासुदेव (०९०-०२३)
नमो ऽस्तु कमलेक्षण (०९०-०२३)
अशेषभूतरूपाय (०९०-*(१४४))
तथाभूताय ते नमः (०९०-*(१४४))
नमो ऽस्तु ते ऽश्वरूपाय (०९०-*(१४४))
तथारूपाय ते नमः (०९०-*(१४४))
अनिर्देश्यविशेषाय (०९०-*(१४४))
तुभ्यं सर्वात्मने नमः (०९०-*(१४४))
नमो ऽस्तु ते वासुदेव (०९०-*(१४४))
नमस् ते पुष्करेक्षण (०९०-*(१४४))
नमो ऽस्तु ते सदाचिन्त्य (०९०-०२३)
योगिचिन्त्य जगत्पते (०९०-०२३)
विष्णो नमो ऽस्तु ते कृष्ण (०९०-०२४)
नमस् ते पुरुषोत्तम (०९०-०२४)
नमो नारायण हरे (०९०-०२४)
नमस् ते ऽस्तु सदाच्युत (०९०-०२४)
नमो नमस् ते गोविन्द (०९०-०२५)
नमस् ते गरुडध्वज (०९०-०२५)
श्रीश श्रीवत्स योगीश (०९०-०२५)
श्रीकान्तेश नमो ऽस्तु ते (०९०-०२५)
नीलोत्पलदलश्याम (०९०-०२६)
दंष्ट्रोद्धृतवसुंधर (०९०-०२६)
हिरण्याक्षरिपो देव (०९०-०२६)
नमस् ते यज्ञसूकर (०९०-०२६)
नृसिंह जय विश्वात्मन् (०९०-०२७)
दैत्योरःस्थलदारक (०९०-०२७)
नमो नमस् ते ऽस्तु सदा (०९०-०२७)
विक्षेपध्वस्ततारक (०९०-०२७)
मायावामनरूपाय (०९०-०२८)
तुभ्यं देव नमो नमः (०९०-०२८)
त्रिविक्रम नमस् तुभ्यं (०९०-०२८)
त्रैलोक्यक्रान्ति दुर्जय (०९०-०२८)
ऋग्यजुःसामभूताय (०९०-०२९)
वेदाहरणकर्मणे (०९०-०२९)
प्रणवोद्गीतवचसे (०९०-०२९)
महाश्वशिरसे नमः (०९०-०२९)
निःक्षत्रियोर्वीकरण (०९०-०३०)
विकरालपराक्रम (०९०-०३०)
जामदग्न्य नमस् तुभ्यं (०९०-०३०)
कार्तवीर्यासुतस्कर (०९०-०३०)
पौलस्त्यकुलनाशाय (०९०-०३१)
साधुमार्गविचारिणे (०९०-०३१)
नलसेतुकृते तुभ्यं (०९०-०३१)
नमो राघवरूपिणे (०९०-०३१)
सांप्रतं मत्प्रसन्नाय (०९०-०३२)
संभूताय ममोदरे (०९०-०३२)

स्वमायाबालरूपाय (०९०-०३२)
नमः कृष्णाय वै हरे (०९०-०३२)
यावन्ति तव रूपाणि (०९०-०३३)
यावत्यश् च विभूतयः (०९०-०३३)
नमामि कृष्ण सर्वेभ्यस् (०९०-०३३)
तेभ्यस् ताभ्यश् च सर्वदा (०९०-०३३)
स्वरूपचेष्टितं यत् ते (०९०-०३४)
यद् देवत्वे विचेष्टितम् (०९०-०३४)
यच् च तिर्यङ्मनुष्यत्वे (०९०-०३४)
चेष्टितं तन् नमाम्य् अहम् (०९०-०३४)
परमेश परेशेश (०९०-०३५)
तिर्यगीश नरेश्वर (०९०-०३५)
सर्वेश्वरेश्वरेशेश (०९०-०३५)
नमस् ते पुरुषोत्तम (०९०-०३५)
एवं स्तुतस् तया देव्या (०९०-०३६)
देवक्या मधुसूदनः (०९०-०३६)
बालरूपी जगादैवं (०९०-०३६)
वसुदेवस्य शृण्वतः (०९०-०३६)
सम्यग् आराधितेनोक्तं (०९०-०३७)
यत् प्रसन्नेन वै शुभे (०९०-०३७)
तत् कृतं सकलं भूयो (०९०-०३७)
यद् वृणोषि ददामि तत् (०९०-०३७)
अवतारे तथैवास्मिन् (०९०-०३८)
वर्षाणाम् अधिकं शतम् (०९०-०३८)
स्थास्यामि नरतां प्राप्तो (०९०-०३८)
दुष्टदैत्यनिबर्हणः (०९०-०३८)
तत् त्वं वरय भद्रं ते (०९०-०३९)
वरं यन् मनसेच्छसि (०९०-०३९)
दास्याम्य् अहम् असंदिग्धं (०९०-०३९)
यद्य् अपि स्यात् सुदुर्लभम् (०९०-०३९)
यदि देव प्रसन्नस् त्वं (०९०-०४०)
प्रददासि ममेप्सितम् (०९०-०४०)
वृणोमि तद् अहं नित्यं (०९०-०४०)
तव केशव दर्शनम् (०९०-०४०)
तवेदृग्रूपम् आलोक्य (०९०-०४१)
हार्दप्रस्रुतलोचना (०९०-०४१)
नालं वियोगं संसोढुं (०९०-०४१)
तवाहं मधुसूदन (०९०-०४१)
दाक्षायणी त्वम् अदितिः (०९०-०४२)
संभूता वसुधातले (०९०-०४२)
नित्यम् एव जगद्धात्रि (०९०-०४२)
प्रसादं ते करोम्य् अहम् (०९०-०४२)
षष्ठे षष्ठे तदा पक्षे (०९०-०४३)
दिने ऽस्मिन्न् एव भामिनि (०९०-०४३)
त्वं मां द्रक्ष्यस्य् असंदिग्धं (०९०-०४३)
प्रसादस् ते कृतो मया (०९०-०४३)
अनेनैव महाभागे (०९०-०४४)
बालरूपेण संवृतः (०९०-०४४)
तव दर्शनम् एष्यामि (०९०-०४४)

यत्र ते स्नेहवन् मनः (०९०-०४४)
तस्मिन् काले च लोकास् त्वां (०९०-०४५)
पूजयिष्यन्ति देवकि (०९०-०४५)
मां च पुष्पादिभिर् देवि (०९०-०४५)
तवोत्सङ्गव्यवस्थितम् (०९०-०४५)
संपूजितो ऽहं लोकानां (०९०-०४६)
तस्मिन् काले सुतोषितः (०९०-०४६)
प्रदास्यामि जगद्धात्रि (०९०-०४६)
यथाभिलषितं वरम् (०९०-०४६)
अपुत्राणां वरान् पुत्रान् (०९०-०४७)
अधनानां तथा धनम् (०९०-०४७)
शुभान् दारान् अदाराणां (०९०-०४७)
सरोगाणाम् अरोगताम् (०९०-०४७)
सुगतिं गतिकामानां (०९०-०४८)
विद्यां विद्यार्थिनाम् अपि (०९०-०४८)
प्रदास्यसि महाभागे (०९०-०४८)
मत्प्रसादोपवृंहिता (०९०-०४८)
प्रसादिता हि मर्त्यानां (०९०-०४९)
यत् त्वं दास्यसि शोभने (०९०-०४९)
तत् तेषां मत्प्रसादेन (०९०-०४९)
भविष्यति न दुर्लभम् (०९०-०४९)
त्वाम् अभ्यर्च्योपचारेण (०९०-०५०)
स्नापयित्वा घृतेन माम् (०९०-०५०)
सर्वकामान् अवाप्स्यन्ति (०९०-०५०)
काले षट्पक्षसंज्ञिते (०९०-०५०)
त्वदङ्कस्थं च मां बालं (०९०-*(१४५))
संस्मरिष्यन्ति भक्तितः (०९०-*(१४५))
प्रतिमासं च ते पूजाम् (०९०-०५१)
अष्टम्यां यः करिष्यति (०९०-०५१)
मम चैवाखिलान् कामान् (०९०-०५१)
संप्राप्नोत्य् अपकल्मषः (०९०-०५१)
एवं पूर्वं हृषीकेशो (०९०-०५२)
देवक्याः प्रददौ वरम् (०९०-०५२)
तस्मात् कृष्णाष्टमी पुंसाम् (०९०-०५२)
अशेषाघौघहारिणी (०९०-०५२)
तस्यां हि पूजितः कृष्णो (०९०-०५३)
देवकी च समाधिना (०९०-०५३)
पापापनोदं कुरुते (०९०-०५३)
ददाति च मनोरथान् (०९०-०५३)
तद् एष पुष्टिकामानां (०९०-०५४)
नृणां पुण्यार्थिनाम् अपि (०९०-०५४)
उपवासो महीपाल (०९०-०५४)
शस्तः केशवतोषदः (०९०-०५४)
श्रावणे शुक्लपक्षे तु (०९१-००१)
द्वादश्यां प्रीयते नृप (०९१-००१)
गोप्रदानेन गोविन्दो (०९१-००१)
यत् पूर्वं कथितं तव (०९१-००१)
पौषशुक्ले तु तद्वच् च (०९१-००२)
द्वादश्यां घृतधेनुकाम् (०९१-००२)

घृतार्चिः प्रीणनायालं (०९१-००२)
प्रदद्यात् फलदायिनीम् (०९१-००२)
तथैव माघद्वादश्यां (०९१-००३)
प्रदत्ता तिलगौर् नृप (०९१-००३)
केशवं प्रीणयत्य् आशु (०९१-००३)
सर्वकामान् प्रयच्छति (०९१-००३)
ज्यैष्ठे मासि सिते पक्षे (०९१-००४)
द्वादश्यां जलधेनुका (०९१-००४)
दत्ता यथावद् विधिना (०९१-००४)
प्रीणयत्य् अम्बुशायिनम् (०९१-००४)
लवणं मार्गशीर्षे तु (०९१-००५)
कृष्णम् अभ्यर्च्य यो नरः (०९१-००५)
प्रयच्छति द्विजाग्र्याय (०९१-००५)
स सर्वरसदायकः (०९१-००५)
सर्वभोगमहाभोगान् (०९१-००६)
भ्राजिष्मन्तो मनोरमान् (०९१-००६)
लोकान् अवाप्नोति नृप (०९१-००६)
प्रसन्ने गरुडध्वजे (०९१-००६)
पौषमासे तु यो दद्याद् (०९१-००७)
घृतं विप्राय पार्थिव (०९१-००७)
समभ्यर्च्याच्युतं सो ऽपि (०९१-००७)
सर्वकामान् अवाप्नुयात् (०९१-००७)
माघमासे तु संपूज्य (०९१-००८)
माधवं ब्राह्मणाय यः (०९१-००८)
प्रयच्छति तिलांल् लोकान् (०९१-००८)
संप्राप्नोत्य् अभिवाञ्छितान् (०९१-००८)
फाल्गुने पुण्डरीकाक्षं (०९१-००९)
यः समभ्यर्च्य यच्छति (०९१-००९)
सप्तधान्यं नरश्रेष्ठ (०९१-००९)
स सर्वस्येश्वरो भवेत् (०९१-००९)
चैत्रे चित्राणि वस्त्राणि (०९१-०१०)
यः प्रयच्छति केशवम् (०९१-०१०)
पूजयित्वा स वै भोगान् (०९१-०१०)
विचित्रांल् लभते नरः (०९१-०१०)
वैशाखे विष्णुम् अभ्यर्च्य (०९१-०११)
यवगोधूमदो नरः (०९१-०११)
लोकान् ऐन्द्रान् समासाद्य (०९१-०११)
मोदते विगतज्वरः (०९१-०११)
दुर्निवर्त्यम् अहं मन्ये (०९१-*(१४६))
चञ्चलं हि मनो यतः (०९१-*(१४६))
ज्यैष्ठे ऽभ्यर्च्य हृषीकेशम् (०९१-०१२)
उदकुम्भप्रदो हि यः (०९१-०१२)
स परां निर्वृतिं याति (०९१-०१२)
सप्त जन्मान्तराणि वै (०९१-०१२)
आषाढमासे च हरिं (०९१-०१३)
यः समभ्यर्च्य यच्छति (०९१-०१३)
विप्राय चन्दनं सो ऽपि (०९१-०१३)
परमाह्लादभाजनम् (०९१-०१३)
यो नृसिंहं समभ्यर्च्य (०९१-०१४)

ब्राह्मणाय प्रयच्छति (०९१-०१४)
श्रावणे नवनीतं तु (०९१-०१४)
स स्वर्गं सुकृती व्रजेत् (०९१-०१४)
छत्त्रं च यो भाद्रपदे (०९१-०१५)
वासुदेवाभिपूजकः (०९१-०१५)
प्रयच्छति द्विजाग्र्याय (०९१-०१५)
स च्छत्त्राधिपतिर् भवेत् (०९१-०१५)
गुडशर्करया युक्तं (०९१-०१६)
मोदकं च प्रयच्छति (०९१-०१६)
तथैवाश्वयुजे ऽभ्यर्च्य (०९१-०१६)
यो ऽनन्तं सो ऽमरो भवेत् (०९१-०१६)
नारायणं समभ्यर्च्य (०९१-०१७)
यः प्रयच्छति कार्त्तिके (०९१-०१७)
दीपकं विप्रगेहेषु (०९१-०१७)
विमानं सो ऽधिरोहति (०९१-०१७)
काम्यान्य् एतान्य् अशेषाणि (०९१-०१८)
यः संपूज्य जगत्पतिम् (०९१-०१८)
दानानि यच्छति नरः (०९१-०१८)
स संपूर्णमनोरथः (०९१-०१८)
सर्वश्रेष्ठः समस्तानां (०९१-०१८)
बन्धूनाम् आश्रयो भवेत् (०९१-०१८)
एवं सर्वाणि दानानि (०९१-०१९)
प्रीणनायाच्युतस्य यः (०९१-०१९)
प्रयच्छति स सर्वेषां (०९१-०१९)
फलानां भुवि भाजनम् (०९१-०१९)
तस्मान् नरेन्द्र विप्रेभ्यः (०९१-०२०)
प्रीणनाय जगद्गुरोः (०९१-०२०)
प्रयच्छैतानि दानानि (०९१-०२०)
यच् चान्यद् दयितं तव (०९१-०२०)
यदीच्छसि पुनः प्राप्तुं (०९१-०२१)
भूतिम् अभ्रंशनीं नृप (०९१-०२१)
तदाराधय गोविन्दं (०९१-०२१)
नान्यथा स्युर् विभूतयः (०९१-०२१)
एवं वसिष्ठेन तदा (०९१-०२२)
मान्धाता नृप बोधितः (०९१-०२२)
सह पत्न्या महीपालः (०९१-०२२)
परितोषं परं ययौ (०९१-०२२)
जगाद च मुदा युक्तः (०९१-०२३)
प्रणिपत्य पुरोहितम् (०९१-०२३)
सह पत्न्या नरश्रेष्ठः (०९१-०२३)
समुत्थाय वरासनात् (०९१-०२३)
धिग् धिग् वृथैव यातानि (०९१-०२४)
ममैतानि दिनान्य् अहो (०९१-०२४)
अनासज्य मनः कृष्णे (०९१-०२४)
विषयासक्तचेतसः (०९१-०२४)
ता निशास् ते च दिवसास् (०९१-०२५)
ते र्तवस् ते च वत्सराः (०९१-०२५)
नराणां सफला येषु (०९१-०२५)
चिन्तितो भगवान् हरिः (०९१-०२५)

चिन्त्यमानः समस्तानां (०९१-०२६)
पापानां हाणिदो हि सः (०९१-०२६)
समुत्सृज्याखिलं चिन्त्यं (०९१-०२६)
सो ऽच्युतः किं न चिन्त्यते (०९१-०२६)
कष्टं मुष्टो ऽस्मि शिष्टेषु (०९१-०२७)
विद्यमानेषु मन्त्रिषु (०९१-०२७)
पराङ्मुखानां गोविन्दे (०९१-०२७)
यत् प्राप्तं परमं वयः (०९१-०२७)
एवं विनिन्द्य सो ऽत्मानां (०९१-०२८)
मान्धाता पृथिवीपतिः (०९१-०२८)
चकाराराधने यत्नं (०९१-०२८)
देवदेवस्य शार्ङ्गितिणः (०९१-०२८)
तम् आराध्य च विश्वेशम् (०९१-०२९)
उपेन्द्रम् असुरेश्वर (०९१-०२९)
प्राप सिद्धिं परां पूर्वं (०९१-०२९)
दक्षः प्राचेतसो यथा (०९१-०२९)
तथा त्वम् अपि राजेन्द्र (०९१-०३०)
सर्वभावेन केशवम् (०९१-०३०)
समाराधय गोविन्दं (०९१-०३०)
तम् आराध्य न सीदति (०९१-०३०)
एवं स दैत्यराजेन्द्रः (०९१-०३१)
प्रह्लादेनावबोधितः (०९१-०३१)
बलिर् आराधने यत्नं (०९१-०३१)
चक्रे चक्रभृतस् तदा (०९१-०३१)
पुष्पोपहारैर् धूपैश् च (०९१-०३२)
तथा चैवानुलेपनैः (०९१-०३२)
वासोभिर् भूषणैः सम्यग् (०९१-०३२)
ब्राह्मणानां च तर्पणैः (०९१-०३२)
जपैर् होमैर् व्रतैश् चैव (०९१-०३३)
यथोक्तं पुरुषर्षभ (०९१-०३३)
सह पत्न्या तथैव त्वं (०९१-०३३)
समाराधय केशवम् (०९१-०३३)
भगवंश् चञ्चलं चित्तं (०९२-००१)
मनुष्याणाम् अहर्निशम् (०९२-००१)
विषयासङ्गदुर्दुष्टं (०९२-००१)
पापायैव प्रवर्तते (०९२-००१)
मौनेन वाचिकं पापं (०९२-००२)
पुंभिर् ब्रह्मन् निवर्त्यते (०९२-००२)
शारीरम् अप्य् अकरणात् (०९२-००२)
सुनिवर्त्यं मतं मम (०९२-००२)
यत् त्व् एतन् मानसं पापं (०९२-००३)
मनुष्यैस् तन् महामते (०९२-००३)
दुर्निवर्त्यम् अहं मन्ये (०९२-००३)
चञ्चलं हि मनो यतः (०९२-००३)
तद् अहं श्रोतुम् इच्छामि (०९२-००४)
मनुष्यैर् दुर्विचिन्तितैः (०९२-००४)
यत् स्मर्तव्यं च जप्यं च (०९२-००४)
मानसाघप्रशान्तये (०९२-००४)
त्वद्युक्तो ऽयम् अनुप्रश्नः (०९२-००५)

साध्व् एतद् भवतोदितम् (०९२-००५)
चञ्चलत्वाद् धि चित्तानां (०९२-००५)
मानसं बहु पातकम् (०९२-००५)
भूमौ तृणम् असंख्यातं (०९२-००६)
यथा च दिवि तारकाः (०९२-००६)
तथा पापम् असंख्येयं (०९२-००६)
चेतसा क्रियते तु यत् (०९२-००६)
परदारपरद्रव्य- (०९२-००७)
परहिंसासु मानसम् (०९२-००७)
अहर्निशं मनुष्याणां (०९२-००७)
सातत्येन प्रवर्तते (०९२-००७)
यद्य् अस्योपशमो राजन् (०९२-००८)
भुवि न क्रियते नृभिः (०९२-००८)
तन् नास्ति नरकोत्तारो (०९२-००८)
वर्षकोटीशतैर् अपि (०९२-००८)
तद् अस्य प्रशमायालं (०९२-००९)
प्रायश्चित्तं नराधिप (०९२-००९)
शृणुष्व येन चित्तोत्थं (०९२-००९)
सद्यः पापं व्यपोहति (०९२-००९)
ॐ नमो वासुदेवाय (०९२-०१०)
पुरुषाय महात्मने (०९२-०१०)
हिरण्यरेतसे ऽचिन्त्य- (०९२-०१०)
स्वरूपायातिवेधसे (०९२-०१०)
विष्णवे जिष्णवे नित्यं (०९२-०११)
शान्तायानघरूपिणे (०९२-०११)
सर्वस्थित्यन्तकरण- (०९२-०११)
व्रतिने पीतवाससे (०९२-०११)
नारायणाय विश्वाय (०९२-०१२)
विश्वेशायेश्वराय च (०९२-०१२)
नमः कमलकिञ्जल्क- (०९२-०१२)
सुवर्णमुकुटाय च (०९२-०१२)
केशवायातिसूक्ष्माय (०९२-०१३)
ब्रह्ममूर्तिमते नमः (०९२-०१३)
नमः परमकल्याण- (०९२-०१३)
कल्याणायात्मयोनये (०९२-०१३)
जनार्दनाय देवाय (०९२-०१४)
श्रीधराय सुमेधसे (०९२-०१४)
महात्मने वरेण्याय (०९२-०१४)
नमः पङ्कजनाभये (०९२-०१४)
स्मृतमात्राघघाताय (०९२-०१५)
कृष्णायाक्लिष्टकर्मणे (०९२-०१५)
नमो नताय नम्रेशैर् (०९२-०१५)
अशेषैर् वासवादिभिः (०९२-०१५)
नमो मायाविने तुभ्यं (०९२-०१६)
हरये हरिमेधसे (०९२-०१६)
हिरण्यगर्भगर्भाय (०९२-०१६)
जगतः कारणात्मने (०९२-०१६)
गोविन्दायादिभूताय (०९२-०१७)
श्रादीनां महात्मने (०९२-०१७)

नमो भूतात्मभूताय (०९२-०१७)
आत्मने परमात्मने (०९२-०१७)
अच्युताय नमो नित्यम् (०९२-०१८)
अनन्ताय नमो नमः (०९२-०१८)
दामोदराय शुचये (०९२-०१८)
यज्ञेशाय नमो नमः (०९२-०१८)
नमो मायापटच्छन्न- (०९२-०१९)
जगद्धाम्ने महात्मने (०९२-०१९)
हृषीकेशाय चेशाय (०९२-०१९)
सर्वभूतात्मरूपिणे (०९२-०१९)
दयालवे नमो नित्यं (०९२-०२०)
कपिलाय सुमेधसे (०९२-०२०)
संसारसागरोत्तार- (०९२-०२०)
ज्ञानपोतप्रदायिने (०९२-०२०)
अकुण्ठमतये धात्रे (०९२-०२१)
सर्गस्थित्यन्तकर्मणि (०९२-०२१)
करालसौम्यरूपाय (०९२-०२१)
वैकुण्ठाय नमो नमः (०९२-०२१)
यथा हि वासुदेवेति (०९२-०२२)
प्रोक्ते नश्यति पातकम् (०९२-०२२)
तथा विलयम् अभ्येतु (०९२-०२२)
ममैतद् दुर्विचिन्तितम् (०९२-०२२)
यथा न विष्णुभक्तेषु (०९२-०२३)
पापम् आप्नोति संस्थितिम् (०९२-०२३)
तथा विनाशम् अभ्येतु (०९२-०२३)
ममैतद् दुर्विचिन्तितम् (०९२-०२३)
स्मृतमात्रो यथा विष्णुः (०९२-०२४)
सर्वं पापं व्यपोहति (०९२-०२४)
तथा प्रणाशम् अभ्येतु (०९२-०२४)
ममैतद् दुर्विचिन्तितम् (०९२-०२४)
यथा सर्वत्रगो विष्णुस् (०९२-०२५)
तत्र सर्वं च संस्थितम् (०९२-०२५)
उपयातु तथा नाशं (०९२-०२५)
ममाघं चित्तसंभवम् (०९२-०२५)
पापं प्रणाशं मम संप्रयातु (०९२-०२६)
यन् मानसं यच् च करोमि वाचा (०९२-०२६)
शारीरम् अप्य् आचरितं च यन् मे (०९२-०२६)
स्मृते जगद्धातरि वासुदेवे (०९२-०२६)
प्रयान्तु दोषा मम नाशम् आशु (०९२-०२७)
रागादयः कारणकारणेशे (०९२-०२७)
विज्ञानदीपामलमार्गदृश्ये (०९२-०२७)
स्मृते जगद्धातरि वासुदेवे (०९२-०२७)
भवन्तु भद्राणि समस्तदोषाः (०९२-०२८)
प्रयान्तु नाशं जगतो ऽखिलस्य (०९२-०२८)
मयाद्य भक्त्या परमेश्वरेशे (०९२-०२८)
स्मृते जगद्धातरि वासुदेवे (०९२-०२८)
ये भूतले ये दिवि ये ऽन्तरिक्षे (०९२-०२९)
रसातले प्राणिगणाश् च केचित् (०९२-०२९)
भवन्तु ते सिद्धियुजो मयाद्य (०९२-०२९)

स्मृते जगद्धातरि वासुदेवे (०९२-०२९)
पुष्यन्तु मैत्रीं विरमन्तु रागाद् (०९२-०३०)
उज्झन्तु लोभं क्षमिणो भवन्तु (०९२-०३०)
आब्रह्मवृक्षान्तरगा मयाद्य (०९२-०३०)
स्मृते जगद्धातरि वासुदेवे (०९२-०३०)
ये प्राणिनः कुत्रचिद् अत्र सन्ति (०९२-०३१)
ब्रह्माण्डमध्ये परतश् च केचित् (०९२-०३१)
ते यान्तु सिद्धिं परमां मयाद्य (०९२-०३१)
स्मृते जगद्धातरि वासुदेवे (०९२-०३१)
अज्ञानिनो ज्ञानविदो भवन्तु (०९२-०३२)
प्रशान्तिभाजः सततोग्रचित्ताः (०९२-०३२)
कुर्वन्तु भक्तिं परमाम् अनन्ते (०९२-०३२)
मत्स्तोत्रतुष्टस्य हरेः प्रसादात् (०९२-०३२)
शृण्वन्ति ये मे पठतस् तथान्ये (०९२-०३३)
पश्यन्ति ये माम् इदम् ईरयन्तम् (०९२-०३३)
देवासुराद्या मनुजास् तिरश्चो (०९२-०३३)
भवन्तु ते ऽप्य् अच्युतयोगभाजः (०९२-०३३)
ये चापि मूका विकलेन्द्रियत्वाच् (०९२-०३४)
शृण्वन्ति नो नैव विलोकयन्ति (०९२-०३४)
पश्वादयः कीटपिपीलिकाश् च (०९२-०३४)
भवन्तु ते ऽप्य् अच्युतयोगभाजः (०९२-०३४)
नामस्व् अनन्तस्य च कीर्तितेषु (०९२-०३५)
यद् अत्र पुण्यं जगतः प्रसूतेः (०९२-०३५)
तेनाविवेकोपहतात्मबोधा (०९२-०३५)
भवन्तु पुंसां मतयः सुशीलाः (०९२-०३५)
ये दुःखितास् ते सुखिनो भवन्तु (०९२-०३६)
द्वेषान्विता मैत्रगुणोपपन्नाः (०९२-०३६)
सत्यार्जवाद्यास् त्व् अनृता विमाया (०९२-०३६)
मत्संस्तवाराधितकृष्णदृष्टाः (०९२-०३६)
नश्यन्तु दुःखानि जगत्य् अपैतु (०९२-०३७)
लोभादिको दोषगुणः प्रजाभ्यः (०९२-०३७)
यथात्मनि भ्रातरि चात्मजे च (०९२-०३७)
तथा जनस्यास्तु जने ऽपि हार्दम् (०९२-०३७)
संसारवैद्ये ऽखिलदोषहानि- (०९२-०३८)
विचक्षणे निर्वृतिहेतुभूते (०९२-०३८)
संसारबन्धाः शिथिलीभवन्तु (०९२-०३८)
हृदि स्थिते सर्वजनस्य विष्णौ (०९२-०३८)
एतत् पठन् पार्थिव सर्वपापैर् (०९२-०३९)
विमुच्यते विष्णुपरः सदैव (०९२-०३९)
प्राप्नोति सिद्धिं विपुलं महर्द्धिम् (०९२-०३९)
न चाप्य् अनर्थेषु मतिं करोति (०९२-०३९)
उद्दिश्य सत्त्वानि च यानि यानि (०९२-०४०)
स्तोत्रं पठन्ते कृपया मनुष्याः (०९२-०४०)
सर्वाणि तान्य् अप्रतिघा भवन्ति (०९२-०४०)
प्रयान्ति सिद्धिं भगवत्प्रसादात् (०९२-०४०)
तस्मात् त्वयैतत् सततं निशासु (०९२-०४१)
दिनेषु चैवेश्वर माधवस्य (०९२-०४१)
संकीर्तनं कार्यम् अशेषपाप- (०९२-०४१)
विमोक्षहेतोर् अभवाय चैव (०९२-०४१)

इति सकलजनोपकारकारी (०९२-०४२)
हरिचरणाब्जविनिष्टशुद्धबुद्धिः (०९२-०४२)
पठति खलु महीप यो मनुष्यः (०९२-०४२)
स लयम् उपैति हरौ हृताखिलाघः (०९२-०४२)
इदं च शृणु भूपाल (०९३-००१)
नश्यते दुर्विचिन्तितम् (०९३-००१)
येनोपायेन वै पुंसां (०९३-००१)
योषितां वाप्य् असंशयम् (०९३-००१)
परदारपरद्रव्य- (०९३-००२)
जीवहिंसादिके सदा (०९३-००२)
प्रवर्तते नृणां चित्तं (०९३-००२)
तद् एतद् अभिसंस्मरेत् (०९३-००२)
विष्णवे विष्णवे नित्यं (०९३-००३)
विष्णवे विष्णवे नमः (०९३-००३)
जिष्णवे जिष्णवे सर्वं (०९३-००३)
जिष्णवे जिष्णवे नमः (०९३-००३)
नमामि विष्णुं बुद्धिस्थम् (०९३-००४)
अहंकार-गतं हरिम् (०९३-००४)
चित्तस्थम् ईशम् अव्यक्तम् (०९३-००४)
अनन्तम् अपराजितम् (०९३-००४)
विष्णुम् ईड्यम् अशेषेशम् (०९३-००४)
अनादिनिधनं विभुम् (०९३-००४)
विष्णुश् चित्तगतो यन् मे (०९३-००५)
विष्णुर् बुद्धिगतश् च यत् (०९३-००५)
यच् चाहंकारगो विष्णुर् (०९३-००५)
यद् विष्णुर् मयि संस्थितः (०९३-००५)
करोति कर्तृभूतो ऽसौ (०९३-००६)
स्थावरस्य चरस्य च (०९३-००६)
तत् पापं नाशम् आयातु (०९३-००६)
तस्मिन्न् एव विचिन्तिते (०९३-००६)
ध्यातो हरति यः पापं (०९३-००७)
स्वप्ने दृष्टः शुभावहः (०९३-००७)
तम् उपेन्द्रम् अहं विष्णुं (०९३-००७)
प्रणतो ऽर्तिहरं हरिम् (०९३-००७)
जगत्य् अस्मिन् निराधारे (०९३-००८)
मज्जमाने तमस्य् अधः (०९३-००८)
हस्तावलम्बदं विष्णुं (०९३-००८)
प्रणतो ऽस्मि परात्परम् (०९३-००८)
सर्वेश्वरेश्वर विभो (०९३-००९)
परमात्मन्न् अधोक्षज (०९३-००९)
हृषीकेश हृषीकेश (०९३-००९)
हृषीकेश नमो ऽस्तु ते (०९३-००९)
नृसिंहानन्त गोविन्द (०९३-०१०)
भूतभावन केशव (०९३-०१०)
दुरुक्तं दुष्कृतं ध्यातं (०९३-०१०)
प्रशमाग्र्य नमो ऽस्तु ते (०९३-०१०)
यन् मया चिन्तितं दुष्टं (०९३-०११)
स्वचित्तवशवर्तिना (०९३-०११)
नरकावहम् अत्युग्रं (०९३-०११)

तच् छमं नय केशव (०९३-०११)
ब्रह्मण्यदेव गोविन्द (०९३-०१२)
परमार्थ परायण (०९३-०१२)
जगन्नाथ जगद्धातः (०९३-०१२)
पापं प्रशमयाच्युत (०९३-०१२)
यच् चापराह्णे पूर्वाह्णे (०९३-०१३)
मध्याह्ने च तथा निशि (०९३-०१३)
कायेन मनसा वाचा (०९३-०१३)
कृतं पापम् अजानता (०९३-०१३)
जानता वा हृषीकेश (०९३-०१४)
पुण्डरीकाक्ष माधव (०९३-०१४)
नामत्रयोच्चारणतस् (०९३-०१४)
तत् प्रयातु मम क्षयम् (०९३-०१४)
शारीरं मे हृषीकेश (०९३-०१५)
पुण्डरीकाक्ष मानसम् (०९३-०१५)
पापं प्रशमयाद्य त्वं (०९३-०१५)
वाक्कृतं मम माधव (०९३-०१५)
यद् व्रजन् यत् स्वपन् भुञ्जन् (०९३-०१६)
यद् उत्तिष्ठन् यद् आस्थितः (०९३-०१६)
कृतवांश् चापि यच् चाहं (०९३-०१६)
कायेन मनसा गिरा (०९३-०१६)
महत् स्वल्पम् अतिस्थूलं (०९३-०१७)
कुयोनिनरकावहम् (०९३-०१७)
तद् यातु प्रशमं सर्वं (०९३-०१७)
वासुदेवस्य कीर्तनात् (०९३-०१७)
परं ब्रह्म परं धाम (०९३-०१८)
पवित्रं परमं च यत् (०९३-०१८)
तस्मिन् संकीर्तिते विष्णोः (०९३-०१८)
पदे पापं प्रणश्यतु (०९३-०१८)
सूरयो यत् प्रवेक्ष्यन्ति ह्य् (०९३-०१९)
अपुनर्भवकाङ्क्षिणः (०९३-०१९)
ममाखिलं दह त्वं हि (०९३-०१९)
तद् विष्णोः परमं पदम् (०९३-०१९)
यत् प्राप्य न निन्वर्तन्ते (०९३-०२०)
गन्धस्पर्शादिवर्जितम् (०९३-०२०)
पापं प्रणाशयत्व् अद्य (०९३-०२०)
तद् विष्णोः परमं पदम् (०९३-०२०)
सदसद् यत् तथा व्यक्ता- (०९३-०२१)
व्यक्तरूपम् अजाजरम् (०९३-०२१)
प्रणमामि जगद्धाम (०९३-०२१)
तद् विष्णोः परमं पदम् (०९३-०२१)
शारीरे मानसे चैव (०९३-०२२)
पापे वाग्जे च पार्थिव (०९३-०२२)
कृते सम्यङ् नरो भक्त्या (०९३-०२२)
पठेच् छ्रद्धासमन्वितः (०९३-०२२)
मुच्यते सर्वपापेभ्यः (०९३-०२२)
कृष्णनामप्रकीर्तनात् (०९३-०२२)
उच्चार्यमाने चैतस्मिन् (०९३-०२३)
देवदेवस्य संस्तवे (०९३-०२३)

विलयं पापम् आयाति (०९३-०२३)
भाण्डम् आमम् इवाम्भसि (०९३-०२३)
तस्मात् संचिन्तिते पापे (०९३-०२४)
समनन्तरम् एव ते (०९३-०२४)
जप्तव्यम् एतत् पापस्य (०९३-०२४)
प्रशमाय महीपते (०९३-०२४)
संसारार्णवमग्नेन (०९४-००१)
पुरुषेण महामुने (०९४-००१)
विषयासक्तचित्तेन (०९४-००१)
यत् कार्यं तद् वदस्व मे (०९४-००१)
भ्राम्यतां संकटे दुर्गे (०९४-००२)
संसारे विषयैषिणाम् (०९४-००२)
स्वकर्मभिर् मनुष्याणाम् (०९४-००२)
उपकारकम् उच्यताम् (०९४-००२)
क्षीणे मनस्य् अनायत्ते (०९४-००३)
वृद्धे लोभादिके गणे (०९४-००३)
शरणं यन् मनुष्याणां (०९४-००३)
तद् आचक्ष्व महामुने (०९४-००३)
संसाराणवपोताय (०९४-००४)
हरये हरिमेधसे (०९४-००४)
नमस्कृत्य प्रवक्ष्यामि (०९४-००४)
नराणाम् उपकारकम् (०९४-००४)
सम्यग् आराधितो भक्त्या (०९४-००५)
वेदभारगुरोर् गुरुः (०९४-००५)
कृष्णद्वैपायनः प्राह (०९४-००५)
यच् छिष्याय सुमन्तवे (०९४-००५)
पुरा किल दुराचारो (०९४-००६)
दुर्बुद्धिर् अजितेन्द्रियः (०९४-००६)
क्षत्रबन्धुर् अभूत् पापः (०९४-००६)
परमर्मावघट्टकः (०९४-००६)
मातापित्रोर् अशुश्रूषुर् (०९४-००७)
द्रोग्धा बन्धुजनस्य च (०९४-००७)
गुरुदेवद्विजातीनां (०९४-००७)
निन्दासु सततोद्यतः (०९४-००७)
मोष्टा विश्वसतां नित्यम् (०९४-००८)
अप्रीतिः प्रीतिम् इच्छताम् (०९४-००८)
ऋजूनाम् अनृजुः क्षुद्रः (०९४-००८)
परहिंसापरायणः (०९४-००८)
स बान्धवैः परित्यक्तस् (०९४-००९)
तथान्यैः साधुवृत्तिभिः (०९४-००९)
अवृत्तिमान् अविश्वास्यो (०९४-००९)
मृगयाजीवनो ऽभवत् (०९४-००९)
अहन्य् अहनि चक्राङ्गान् (०९४-०१०)
एणकादींस् तथा मृगान् (०९४-०१०)
हत्वात्मपोषणं चक्रे (०९४-०१०)
व्याधवृत्तिरतो ऽधमः (०९४-०१०)
एतया तस्य दुष्टस्य (०९४-०११)
कुवृत्या पापचेतसः (०९४-०११)
जगाम सुमहान् कालः (०९४-०११)

कुर्वतो दारपोषणम् (०९४-०११)
एकदा तु मुनिस् तेन (०९४-०१२)
निदाघे विजने वने (०९४-०१२)
मृगयाम् अटता दृष्टो (०९४-०१२)
वर्त्मनः प्रच्युतः पथि (०९४-०१२)
क्षुत्क्षामकण्ठः सुश्रान्तः (०९४-०१३)
शुष्कजिह्वास्यतालुकः (०९४-०१३)
तृट्परीतो ऽतिविभ्रान्तः (०९४-०१३)
कांदिग्भूतो ऽल्पचेतनः (०९४-०१३)
श्वासायासश्लथैर् अङ्गैः (०९४-०१४)
कृच्छ्राद् आत्मानम् उद्वहन् (०९४-०१४)
सूर्यांशुतापात् प्रगलत्- (०९४-०१४)
स्वेदार्द्रचरणो नृप (०९४-०१४)
तस्मिन् दृष्टे ततस् तस्य (०९४-०१५)
क्षत्रबन्धोर् अजायत (०९४-०१५)
कारुण्यं दारुणस्यापि (०९४-०१५)
व्याधवृत्तिपरिग्रहात् (०९४-०१५)
तम् उपेत्य च भूपाल (०९४-०१६)
क्षत्रबन्धुः स तापसम् (०९४-०१६)
उवाच विप्रप्रवरं (०९४-०१६)
विमार्गे वर्तते भवान् (०९४-०१६)
नैष पन्था द्विजश्रेष्ठ (०९४-०१७)
विपिनो ऽयं महाटविः (०९४-०१७)
माम् अन्वेहि त्वरायुक्तो (०९४-०१७)
मा विपत्तिं समेष्यसि (०९४-०१७)
निशाम्य तद् वचः श्रान्तः (०९४-०१८)
क्षत्रबन्धोर् महानुनिः (०९४-०१८)
अनुवव्राज राजेन्द्र (०९४-०१८)
जलाशाजनितोद्यमः (०९४-०१८)
किंचिद् भूभागम् आसाद्य (०९४-०१९)
ददर्श च महामुनिः (०९४-०१९)
हंसकारण्डवाकीर्णं (०९४-०१९)
प्रोत्फुल्लनलिनं सरः (०९४-०१९)
सारसाभिरुतं रम्यं (०९४-०२०)
सूपतीर्थम् अकर्दमम् (०९४-०२०)
पद्मोत्पलयुतं चारु (०९४-०२०)
पूर्णं स्वच्छेन वारिणा (०९४-०२०)
सुशीतवनषण्डैश् च (०९४-०२१)
समन्तात् परिवेष्टितम् (०९४-०२१)
तत्क्षणात् तृट्परीतानां (०९४-०२१)
चक्षुषो ह्लादकारिणम् (०९४-०२१)
दृष्ट्वैव स मुनिस् तत्र (०९४-०२२)
तदामलजलं सरः (०९४-०२२)
सूर्यांशुतप्तो घर्मार्तो (०९४-०२२)
निपपात तदम्भसि (०९४-०२२)
तत्राश्वास्य कृताह्लादः (०९४-०२३)
पपौ वारि नराधिप (०९४-०२३)
उज्जीवयन् मुनिवरो (०९४-०२३)
जिह्वातालु शनैः शनैः (०९४-०२३)

सो ऽपि क्षत्रियदायादो (०९४-०२४)
मुनित्राणपरायणः (०९४-०२४)
विहाय सशरं चापम् (०९४-०२४)
उज्जहार बिसान्य् अथ (०९४-०२४)
ददौ च तस्मै राजेन्द्र (०९४-०२५)
क्षुधिताय तपस्विने (०९४-०२५)
ययौ च तृप्तिं विप्रो ऽपि (०९४-०२५)
बिसनालाम्बुभक्षणात् (०९४-०२५)
तम् आश्वस्तं कृताहारम् (०९४-०२६)
उपविष्टं सुशीतले (०९४-०२६)
न्यग्रोधशाखासंछन्ने (०९४-०२६)
निष्पङ्के सरसस् तटे (०९४-०२६)
संवाहयाम् आस च तं (०९४-०२६)
क्षत्रबन्धुः शनैः शनैः (०९४-०२६)
पादजङ्घोरुपृष्ठेषु (०९४-०२७)
तेन संवाहितो मुनिः (०९४-०२७)
जहौ श्रमम् अमित्रघ्न (०९४-०२७)
वाक्यं चेदम् उवाच ह (०९४-०२७)
कस् त्वं भद्रमुखाद्येह (०९४-०२८)
मम प्राणपरिक्षये (०९४-०२८)
हस्तावलम्बदो धात्रा (०९४-०२८)
जनितो विपिने वने (०९४-०२८)
विभ्रष्टमार्गो मूढो ऽहं (०९४-०२९)
क्षुत्पिपासाश्रमातुरः (०९४-०२९)
त्रातस् त्वया महाभाग (०९४-०२९)
कस् त्वम् अत्र वने ऽजने (०९४-०२९)
क्षुत्पिपासाश्रमार्तस्य (०९४-०३०)
यस् त्राणं विपिने वने (०९४-०३०)
करोति पुरुषव्याघ्र (०९४-०३०)
तस्य लोका मधुश्च्युतः (०९४-०३०)
स त्वं ब्रूहि महाभाग (०९४-०३१)
ममाभ्युद्धारकारकः (०९४-०३१)
येषां प्रख्यातयशसां (०९४-०३१)
समुत्पन्नः कुले भवान् (०९४-०३१)
हर्यश्वस्य कुले जातः (०९४-०३२)
पुत्रश् चित्ररथस्य च (०९४-०३२)
विमतिर् नाम नाम्नाहं (०९४-०३२)
हन्तुम् अभ्यागतो मृगान् (०९४-०३२)
पित्रर्थं मृगयेयं ते (०९४-०३३)
लक्ष्यार्थं वा महामते (०९४-०३३)
आहारार्थम् उताहो ऽत्र (०९४-०३३)
मृगया व्यसनं तु ते (०९४-०३३)
वृत्तिर् एषा मम ब्रह्मन् (०९४-०३४)
परित्यक्तस्य बान्धवैः (०९४-०३४)
भृत्यैर् अन्यैश् च नष्टे ऽर्थे (०९४-०३४)
निर्धनस्यामिषाशिनः (०९४-०३४)
किमर्थं त्वं परित्यक्तो (०९४-०३५)
भृत्यस्वजनबन्धुभिः (०९४-०३५)
पातकी कीकटः क्षुद्रैर् (०९४-०३५)

उपजप्तः परेण वा (०९४-०३५)
इत्य् उक्तः सो ऽभवन् मौनी (०९४-०३६)
पश्यन् दोषं नृपात्मनि (०९४-०३६)
अदुष्टांश् चात्मनो भृत्यान् (०९४-०३६)
विचिन्त्यातीव दुर्मनाः (०९४-०३६)
अवेक्ष्य तं साध्वसिनं (०९४-०३७)
क्षत्रबन्धुं महामुनिः (०९४-०३७)
ध्यात्वा चिरम् अथापश्यत् (०९४-०३७)
क्षत्रबन्धुं स्वदोषिणम् (०९४-०३७)
संत्यक्तबन्धुलोके च (०९४-०३८)
तस्मिन् दुर्वृत्तचेतसि (०९४-०३८)
कृपां चकार स मुनिः (०९४-०३८)
क्षत्रबन्धौ दयापरः (०९४-०३८)
उवाच च मुनिर् भूयः (०९४-०३९)
क्षत्रबन्धुं कृपालुकः (०९४-०३९)
उपकारिणम् उग्रेण (०९४-०३९)
कर्मणा तं विदूषितम् (०९४-०३९)
अपि शक्नोषि संयन्तुम् (०९४-०४०)
अकार्यप्रसृतं मनः (०९४-०४०)
प्राणि पीडानिवृत्तिं च (०९४-०४०)
कर्तुं क्रोधादिसंयमम् (०९४-०४०)
अपि मैत्रीं जने कर्तुं (०९४-०४१)
शक्नोषि त्वं मुधैव या (०९४-०४१)
ऐहिकामुष्मिकी वीर (०९४-०४१)
क्रियमाणा महाफला (०९४-०४१)
न शक्नोमि क्षमां कर्तुं (०९४-०४२)
न मैत्रीं मम चेतसि (०९४-०४२)
प्राणिनाम् अवधाद् ब्रह्मन् (०९४-०४२)
नास्ति दारादिपोषणम् (०९४-०४२)
अनायत्तं च मे चित्तं (०९४-०४३)
विषयान् एव धावति (०९४-०४३)
तदप्राप्तौ च सर्वेषां (०९४-०४३)
क्रोधादीनां समुद्भवः (०९४-०४३)
सो ऽहं न मैत्रीं न क्षान्तिं (०९४-०४४)
न हिंसादिविवर्जनम् (०९४-०४४)
कर्तुं शक्नोमि यत् कार्यं (०९४-०४४)
तदन्यद् उपदिश्यताम् (०९४-०४४)
तेनैवम् उक्तो विप्रो ऽसौ (०९४-०४५)
तम् उपेक्ष्यम् अमन्यत (०९४-०४५)
तथाप्य् अतिकृपालुत्वात् (०९४-०४५)
क्षत्रबन्धुम् अभाषत (०९४-०४५)
यद्य् एतद् अखिलं कर्तुं (०९४-०४६)
न शक्नोषि ब्रवीहि मे (०९४-०४६)
स्वल्पम् अन्यन् मयोक्तं हि (०९४-०४६)
करिष्यति भवान् यदि (०९४-०४६)
अशक्यम् उक्तं भवता (०९४-०४७)
चञ्चलत्वाद् धि चेतसः (०९४-०४७)
वाक्शरीरविनिष्पाद्यं (०९४-०४७)
यच् छक्यं तद् उदीरय (०९४-०४७)

उत्तिष्ठता प्रस्वपता (०९४-०४८)
प्रस्थितेन गमिष्यता (०९४-०४८)
गोविन्देति सदा वाच्यं (०९४-०४८)
क्षुतप्रस्खलितादिषु (०९४-०४८)
कार्यं वर्त्मनि मूढानां (०९४-०४९)
क्षेममार्गे ऽवतारणम् (०९४-०४९)
हितं च वाच्यं पृष्टेन (०९४-०४९)
शत्रूणाम् अपि जानता (०९४-०४९)
एतत् तवोपकाराय (०९४-०५०)
भविष्यत्य् अनुपालितम् (०९४-०५०)
यद्य् अन्यद् उपसंहर्तुं (०९४-०५०)
न शक्नोषि महीपते (०९४-०५०)
इत्य् उक्त्वा प्रययौ विप्रस् (०९४-०५१)
तेन वर्त्मनि दर्शिते (०९४-०५१)
सो ऽपि तच् छासनं सर्वं (०९४-०५१)
क्षत्रबन्धुश् चकार ह (०९४-०५१)
गोविन्देति क्षुते गच्छन् (०९४-०५२)
प्रस्थानस्खलितादिषु (०९४-०५२)
उदीरयन्न् अवापाग्र्यां (०९४-०५२)
रतिं तत्र शनैः शनैः (०९४-०५२)
ततः कालेन महता (०९४-०५३)
क्षत्रबन्धुर् ममार वै (०९४-०५३)
अजायत च विप्रस्य (०९४-०५३)
कुले जातिस्मरो नृप (०९४-०५३)
तस्य संस्मरतो जातीः (०९४-०५४)
शतशो ऽथ सहस्रशः (०९४-०५४)
निर्वेदः सुमहाञ् जज्ञे (०९४-०५४)
संसारे ऽत्रातिदुःखदे (०९४-०५४)
स चिन्तयाम् आस जगत् (०९४-०५४)
सर्वम् एतद् अचेतनम् (०९४-०५४)
अहम् एको ऽत्र संज्ञावान् (०९४-०५५)
गोविन्दोदीरितं हि यत् (०९४-०५५)
यच् चाध्वनि विमूढानां (०९४-०५५)
कृतं वर्त्मावतारणम् (०९४-०५५)
हितम् उक्तं च पृष्टेन (०९४-०५५)
तस्य जातिस्मृतिः फलम् (०९४-०५५)
सो ऽहं जातिस्मरो भूयः (०९४-०५६)
करिष्याम्य् अतिसंकटे (०९४-०५६)
तदा संसारचक्रे ऽस्मिन् (०९४-०५६)
येन प्राप्स्यामि निर्वृतिम् (०९४-०५६)
यस्योच्चारणमात्रेण (०९४-०५७)
जाता जातिस्मृतिर् मम (०९४-०५७)
तम् एवाराधयिष्यामि (०९४-०५७)
जगताम् ईश्वरं हरिम् (०९४-०५७)
यन्मयं परमं ब्रह्म (०९४-०५८)
तद् अव्यक्तं च यन्मयम् (०९४-०५८)
यन्मयं व्यक्तम् अप्य् एतद् (०९४-०५८)
भविष्यामि हि तन्मयः (०९४-०५८)
यद्य् अनाराधिते विष्णौ (०९४-०५९)

ममैतज् जन्म यास्यति (०९४-०५९)
ध्रुवं बन्धवतो मुक्तिर् (०९४-०५९)
नैव जातूपपद्यते (०९४-०५९)
अहो दुःखम् अहो दुःखम् (०९४-०६०)
अहो दुःखम् अतीव हि (०९४-०६०)
स्वरूपम् अतिघोरस्य (०९४-०६०)
संसारस्यातिदुर्लभम् (०९४-०६०)
विण्मूत्रपूयकलिले (०९४-०६१)
गर्भवासे ऽतिपीडनात् (०९४-०६१)
अशुचाव् अतिबीभत्से (०९४-०६१)
दुःखम् अत्यन्तदुःसहम् (०९४-०६१)
दुःखं च जायमानानां (०९४-०६२)
गात्रभङ्गादिपीडनात् (०९४-०६२)
वातेन प्रेर्यमाणानां (०९४-०६२)
मूर्छाकार्य् अतिभीतिदम् (०९४-०६२)
बालत्वे निर्विवेकानां (०९४-०६३)
भूतदेवात्मसंभवम् (०९४-०६३)
यौवने वार्द्धके चैव (०९४-०६३)
मरणे चातिदारुणम् (०९४-०६३)
शीतोष्णतृष्णाक्षुद्रोग- (०९४-०६४)
ज्वरादिपरिवारितः (०९४-०६४)
सर्वदैव पुमान् आस्ते (०९४-०६४)
यावज् जन्मान्तसंस्थितिः (०९४-०६४)
दुःखातिशयभूतं हि (०९४-०६५)
यद् अन्ते वासुखं नृणाम् (०९४-०६५)
तस्यानुमानं नैवास्ति (०९४-०६५)
कार्येणैवानुमीयते (०९४-०६५)
कृष्यमाणस्य पुरुषैर् (०९४-०६६)
यद् यमस्यातिदुःसहम् (०९४-०६६)
दुःखं तत्संस्मृतिप्राप्तं (०९४-०६६)
करोति मम वेपथुम् (०९४-०६६)
कुम्भीपाके तप्तकुम्भे (०९४-०६७)
महारौरवरौरवे (०९४-०६७)
कालसूत्रे महायन्त्रे (०९४-०६७)
शूकरे कूटशाल्मलौ (०९४-०६७)
असिपत्रवने दुःखम् (०९४-०६८)
अप्रतिष्ठे च यन् महत् (०९४-०६८)
विडालवक्त्रे च तथा (०९४-०६८)
तमस्य् उग्रे च दुःसहम् (०९४-०६८)
शस्त्राग्नियन्त्रवेगेषु (०९४-०६९)
शीतोष्णादिषु दारुणम् (०९४-०६९)
ततश् च मुक्तस्य पुनर् (०९४-०६९)
योनिसंक्रमणेषु यत् (०९४-०६९)
गर्भस्थस्य च यद् दुःखम् (०९४-०७०)
अतिदुःसहम् उल्वणम् (०९४-०७०)
पुनश् च जायमानस्य (०९४-०७०)
जन्म यौवनजं च यत् (०९४-०७०)
दुःखान्य् एतान्य् असह्यानि (०९४-०७१)
संसारान्तर्विवर्तिभिः (०९४-०७१)

पुरुषैर् अनुभूयन्ते (०९४-०७१)
सुखभ्रान्तिविमोहितैः (०९४-०७१)
न वै सुखकला काचित् (०९४-०७२)
तत्रास्त्य् अत्यन्तदुःखदे (०९४-०७२)
संसारसंकटे तीव्रे (०९४-०७२)
उपेतानां कदाचन (०९४-०७२)
विषयासक्तचित्तानां (०९४-०७३)
मनुष्याणां कदा मतिः (०९४-०७३)
संसारोत्तारणे वाञ्छां (०९४-०७३)
करिष्यति हि चञ्चला (०९४-०७३)
गोविन्दनाम्ना सततं (०९४-०७४)
समुच्चारणसंभवम् (०९४-०७४)
जातिस्मरत्वम् एतन् नः (०९४-०७४)
किं वृथैव प्रयास्यति (०९४-०७४)
सो ऽहं मुक्तिप्रदानार्थम् (०९४-०७५)
अनन्तम् अजम् अव्ययम् (०९४-०७५)
तच्चित्तस् तन्मयो भूत्वा (०९४-०७५)
तोषयिष्यामि केशवम् (०९४-०७५)
आत्मानम् आत्मनैवं स (०९४-०७६)
प्रोक्त्वा जातिस्मरो द्विजः (०९४-०७६)
तुष्टाव वाग्भिर् इष्टाभिः (०९४-०७६)
प्रणतः पुरुषोत्तमम् (०९४-०७६)
प्रणिपत्याक्षरं विश्वं (०९४-०७७)
विश्वहेतुं निरञ्जनम् (०९४-०७७)
यत् प्रार्थयाम्य् अविकलं (०९४-०७७)
सकलं तत् प्रयच्छतु (०९४-०७७)
कर्तारम् अकृतं विष्णुं (०९४-०७८)
सर्वकारणकारणम् (०९४-०७८)
अणोर् अणीयांसम् अजं (०९४-०७८)
सर्वव्यापिनम् ईश्वरम् (०९४-०७८)
परात् परतरं यस्मान् (०९४-०७९)
नास्ति सर्वेश्वरात् परम् (०९४-०७९)
तं प्रणम्याच्युतं देवं (०९४-०७९)
प्रार्थयामि यद् अस्तु तत् (०९४-०७९)
सर्वेश्वराच्युतानन्त (०९४-०८०)
परमात्मञ् जनार्दन (०९४-०८०)
संसाराब्धिमहापोत (०९४-०८०)
समुद्धर महार्णवात् (०९४-०८०)
व्योमानिलाग्न्यम्बुधरास्वरूप (०९४-०८१)
तन्मात्रसर्वेन्द्रियबुद्धिरूप (०९४-०८१)
अन्तःस्थितात्मन् परमात्मरूप (०९४-०८१)
प्रसीद सर्वेश्वर विश्वरूप (०९४-०८१)
तम् आदिर् अन्तो जगतो ऽस्य मध्यम् (०९४-०८२)
आदेस् त्वम् आदिः प्रलयस्य चान्तः (०९४-०८२)
त्वत्तो भवत्य् एतद् अशेषम् ईश (०९४-०८२)
त्वय्य् एव चान्ते लयम् अभ्युपैति (०९४-०८२)
प्रदीपवर्त्यन्तगतो ऽग्निर् अल्पो (०९४-०८३)
यथातिकक्षे विततं प्रयाति (०९४-०८३)
तद्वद् विसृष्टेर् अमरादिभिन्नैर् (०९४-०८३)

विकाशम् आयासि विभूतिभेदैः (०९४-०८३)
यथा नदीनां बहवो ऽम्बुवेगाः (०९४-०८४)
समन्ततो ऽब्धिं भगवन् विशन्ति (०९४-०८४)
त्वय्य् अन्तकाले जगद् अच्युतेदं (०९४-०८४)
तथा लयं गच्छति सर्वभूते (०९४-०८४)
त्वं सर्वम् एतद् बहुधैक एव (०९४-०८५)
जगत्पते कार्यम् इवाभ्युपेतम् (०९४-०८५)
यद् अस्ति यन् नास्ति च तत् त्वम् एव (०९४-०८५)
हरे त्वदन्यद् भगवन् किम् अस्ति (०९४-०८५)
किंत्व् ईश माया भवतो निजेयम् (०९४-०८६)
आविष्कृताविष्कृतलोकसृष्टे (०९४-०८६)
ययाहम् एषो ऽन्यतमो ममेति (०९४-०८६)
मदीयम् अस्याभिवदन्ति मूढाः (०९४-०८६)
तया विमूढेन मयाभनाभ (०९४-०८७)
न यत् कृतं तत् क्वचिद् अस्ति किंचित् (०९४-०८७)
भूम्यम्बराग्निसलिलेषु देव (०९४-०८७)
जाग्रत्सुषुप्तादिषु दुःखितेन (०९४-०८७)
न सन्ति तावन्ति जलान्य् अपीड्य (०९४-०८८)
सर्वेषु नाथाब्धिषु सर्वकालम् (०९४-०८८)
स्तन्यानि यावन्ति मयातिघोरे (०९४-०८८)
पीतानि संसारमहासमुद्रे (०९४-०८८)
संपच् छिलानां हिमवन्महेन्द्र- (०९४-०८९)
कैलासमेर्वादिषु नैव तादृक् (०९४-०८९)
देहान्य् अनेकान्य् अनुगृह्णतो मे (०९४-०८९)
प्राप्तास्थिसंपन् महति यथेश (०९४-०८९)
त्वय्य् अर्पितं नाथ पुनः पुनर् मे (०९४-०९०)
मनः समाक्षिप्य सुदुर्धरो ऽपि (०९४-०९०)
रागो हि वश्यं कुरुते ततो ऽनु (०९४-०९०)
लोभादयः किं भगवन् करोमि (०९४-०९०)
एकाग्रतामूल्यबलेन लभ्यं (०९४-०९१)
भवौषधं त्वं भगवन् किलैकः (०९४-०९१)
मनः परायत्तम् इदं भवे ऽस्मिन् (०९४-०९१)
संसारदुःखात् किम् अहं करोमि (०९४-०९१)
न सन्ति ते देव भुवि प्रदेशा (०९४-०९२)
न येषु जातो ऽस्मि तथा विनष्टः (०९४-०९२)
अत्ता मया येषु न जन्तवश् च (०९४-०९२)
संभक्षितो यैश् च न जन्तुसंघैः (०९४-०९२)
सिंहेन भूत्वा बहवो मयात्ता (०९४-०९३)
व्याघ्रेण भूत्वा बहवो मयात्ताः (०९४-०९३)
तथान्यरूपैर् बहवो मयात्ताः (०९४-०९३)
संभक्षितो ऽहं बहुभिस् ततश् च (०९४-०९३)
उत्क्रान्तिदुःखान्य् अतिदुःसहानि (०९४-०९४)
सहस्रशो यान्य् अनुसंस्मरामि (०९४-०९४)
तैः संस्मृतैस् तत् क्षणम् एव देव (०९४-०९४)
तडिद् यथा मे हृदयं प्रयाति (०९४-०९४)
ततश् च दुःखान्य् अनिवारणानि (०९४-०९५)
यन्त्राग्निशस्त्रौघसमुद्भवानि (०९४-०९५)
भवन्ति यान्य् अच्युत नारकानां (०९४-०९५)
तान्य् एव तेषाम् उपमानमात्रम् (०९४-०९५)

दुःखान्य् असह्यानि च गर्भवासे (०९४-०९६)
विण्मूत्रमध्ये ऽतिनिपीडितस्य (०९४-०९६)
भवन्ति यानि च्यवतश् च गर्भात् (०९४-०९६)
तेषां स्वरूपं गदितुं न शक्यम् (०९४-०९६)
दुःखानि बालेषु महन्ति नाथ (०९४-०९७)
कौमारके यौवनिनश् च पुंसः (०९४-०९७)
ज्वरातिसाराक्षिरुगादिकानि (०९४-०९७)
समस्तदुःखालय एव वृद्धः (०९४-०९७)
करोति कर्माच्युत तत्क्षणेन (०९४-०९८)
पापं नरः कायमनोवचोभिः (०९४-०९८)
यस्याब्दलक्षैर् अपि नान्तम् एति (०९४-०९८)
शस्त्रादियन्त्राग्निनिपीडनेषु (०९४-०९८)
दुःखानि यानीष्टवियोगजानि (०९४-०९९)
भवन्ति संसारविहारभाजाम् (०९४-०९९)
प्रत्येकशस् तेषु नरा विनाशम् (०९४-०९९)
इच्छन्त्य् असूनां ममताभिभूताः (०९४-०९९)
शोकाभिभूतस्य ममाश्रु देव (०९४-१००)
यावत्प्रमाणं न जलं पयोदा (०९४-१००)
तावत्प्रमाणं न जलं पयोदा (०९४-१००)
मुञ्चन्त्य् अनेकैर् अपि वर्षलक्षैः (०९४-१००)
मन्ये धरित्री परमाणुसंख्याम् (०९४-१०१)
उपैति पित्रोर् गणनामशेषम् (०९४-१०१)
मित्राण्य् अमित्राण्य् अनुजीविबन्धून् (०९४-१०१)
संख्यातम् ईशो ऽस्मि न देवदेव (०९४-१०१)
सो ऽहं भृशार्तः करुणां कुरु त्वं (०९४-१०२)
संसारगात्रे पतितस्य विष्णो (०९४-१०२)
महात्मनां संश्रयम् अभ्युपेतो (०९४-१०२)
नैवावसीदत्य् अतिदुर्गतो ऽपि (०९४-१०२)
परायणं रोगवतां हि वैद्यो (०९४-१०३)
महाब्धिमग्नस्य च नौर् नरस्य (०९४-१०३)
बालस्य मातापितरौ सुघोर- (०९४-१०३)
संसारखिन्नस्य हरे त्वम् एकः (०९४-१०३)
प्रसीद सर्वेश्वर सर्वभूत (०९४-१०४)
सर्वस्य हेतो परमार्थसार (०९४-१०४)
माम् उद्धरास्माद् उरुदुःखपङ्कात् (०९४-१०४)
संसारगर्तात् स्वपरिग्रहेण (०९४-१०४)
धर्मात्मनाम् अविकलां त्वयि नाथ भक्तिं (०९४-१०५)
श्रद्धावतां सततम् उद्वहतां वरेण्य (०९४-१०५)
कार्यं कियन् मम विमूढधियो ऽधमस्य (०९४-१०५)
भूत्वा कृपालुर् अमलाम् अज देहि बुद्धिम् (०९४-१०५)
ज्ञात्वा ययाखिलम् असारम् असारम् एव (०९४-१०६)
भूतेन्द्रियादिकम् अपारम् अमुक्तिमूलम् (०९४-१०६)
मायान्तरेयम् अचलां तव विश्वरूप (०९४-१०६)
संमोहितं सकलम् एव जगद् ययैतत् (०९४-१०६)
ब्रह्मेन्द्ररुद्रमरुदश्विदिवाकराद्या (०९४-१०७)
ज्ञातुं न यं परमगुह्यतमं समर्थाः (०९४-१०७)
न त्वाम् अलं स्तुतिपथेष्व् अहम् ईशितारं (०९४-१०७)
स्तोष्यामि मोहकलुषाल्पमतिर् मनुष्यः (०९४-१०७)
यस्माद् इदं भवति यत्र जगत् तथेदं (०९४-१०८)

यस्मिंल् लयं व्रजति यश् च जगत्स्वरूपः (०९४-१०८)
तं सर्गसंस्थितिविनाशनिमित्तभूतं (०९४-१०८)
स्तोतुं भवन्तम् अलम् ईश न कश्चिद् अस्ति (०९४-१०८)
मूढो ऽयम् अल्पमतिर् अल्पसुचेष्टितो ऽयं (०९४-१०९)
क्लिष्टं मनो ऽस्य विषयैर् न मयि प्रसङ्गि (०९४-१०९)
इत्थं कृपां कुरु मयि प्रणते किलेश (०९४-१०९)
त्वां स्तोतुम् अम्बुजभवो ऽपि हि देव नेशः (०९४-१०९)
यस्योदरे सकल एव महीध्रचन्द्र- (०९४-११०)
देवेन्द्ररुद्रमरुदश्विदिवाकराग्नि- (०९४-११०)
भूम्यम्बुवायुगगनं जगतां समुहां (०९४-११०)
स्तोष्यामि तं स्तुतिपदैः कतमैर् भवन्तम् (०९४-११०)
यस्याग्निरुद्रकमलोद्भववासवाद्यैः (०९४-१११)
स्वांशावतारकरणेषु सदाङ्घ्रियुग्मम् (०९४-१११)
अभ्यर्च्यते वद हरे स कथं मयाद्य (०९४-१११)
संपूजितः परम् उपैष्यसि तोषम् ईश (०९४-१११)
न स्तोतुम् अच्युत भवन्तम् अहं समर्थो (०९४-११२)
नैवार्चनैर् अलम् अहं तव देव योग्यः (०९४-११२)
चित्तं च न त्वयि समाहितम् ईश दोषैर् (०९४-११२)
आक्षिप्यते कथय किं नु करोमि पापः (०९४-११२)
तत् त्वं प्रसीद भगवन् कुरु मय्य् अनाथे (०९४-११३)
विष्णो कृपां परमकारुणिकः किल त्वम् (०९४-११३)
संसारसागरनिमग्नम् अनन्त दीनम् (०९४-११३)
उद्धर्तुम् अर्हसि हरे पुरुषोत्तमो ऽसि (०९४-११३)
इत्थं तेन नरव्याघ्र (०९४-११४)
स्तुतो भक्तिमता ततः (०९४-११४)
संसारबन्धभीतेन (०९४-११४)
कृष्णः प्रत्यक्षतां ययौ (०९४-११४)
स तं प्रत्यक्षम् ईशानम् (०९४-११५)
अनन्तम् अपराजितम् (०९४-११५)
देवदेवम् उवाचेदम् (०९४-११५)
अनादिनिधनं हरिम् (०९४-११५)
शिरसा धरणीं गत्वा (०९४-११६)
यतवाक्कायमानसः (०९४-११६)
परापरेश्वरं विष्णुं (०९४-११६)
जिष्णुम् आद्यम् अनोपमम् (०९४-११६)
दिव्याक्षरपदानन्त (०९४-११७)
प्रसन्नो भगवान् यदि (०९४-११७)
तद् देव देहि दीनाय (०९४-११७)
मह्यम् एकम् इमं वरम् (०९४-११७)
वरं वरय मत्तस् त्वं (०९४-११८)
यत् ते मनसि वर्तते (०९४-११८)
वरार्थिनां द्विजश्रेष्ठ (०९४-११८)
नाफलं मम दर्शनम् (०९४-११८)
जन्मसंपच्चिता देव (०९४-११९)
पापसंपन् ममाखिला (०९४-११९)
प्रयातु नाशम् ईशेश (०९४-११९)
त्वत्प्रसादाद् अधोक्षज (०९४-११९)
भक्तिभावपरेणाद्य (०९४-१२०)
मन्मयेन द्विजोत्तम (०९४-१२०)

यः स्तुतो ऽस्मि क्षयं पापं (०९४-१२०)
तेनैवाखिलम् आगतम् (०९४-१२०)
अस्मत्तो वरयेहाद्य (०९४-१२१)
द्विजवर्यापरं वरम् (०९४-१२१)
मयि भक्तिमताम् अत्र (०९४-१२१)
लोके किंचिन् न दुर्लभम् (०९४-१२१)
धन्यो ऽस्मि सर्वनाथेन (०९४-१२२)
यत्कृतो मय्य् अनुग्रहः (०९४-१२२)
तद् एकम् एव त्वत्तो ऽहं (०९४-१२२)
वरम् इच्छामि केशव (०९४-१२२)
निर्धूतसर्वपापेभ्यो (०९४-१२३)
नाथ पुण्यक्षयान् मम (०९४-१२३)
त्वत्परस्यास्तु गोविन्द (०९४-१२३)
मा पुनर् देहसंभवः (०९४-१२३)
यद् अक्षरं यद् अचलं (०९४-१२४)
व्यापि सूक्ष्मं च यत् परम् (०९४-१२४)
विशेषाइर् अविशेषं च (०९४-१२४)
गच्छेयं तत् पदं तव (०९४-१२४)
एवं भविष्यतीत्य् उक्त्वा (०९४-१२५)
प्रसादसुमुखस् ततः (०९४-१२५)
भूपाल तं द्विजश्रेष्ठं (०९४-१२५)
गतो ऽन्तर्धानम् ईश्वरः (०९४-१२५)
तत्प्रसादाद् द्विजः सो ऽपि (०९४-१२६)
तन्मयस् तद्व्यपाश्रयः (०९४-१२६)
प्रक्षीणकर्मबन्धस् तु (०९४-१२६)
प्रयातः परमं पदम् (०९४-१२६)
एवम् अक्षीणपापो ऽपि (०९४-१२७)
जगताम् ईश्वरेश्वरम् (०९४-१२७)
व्यपाश्रितो हरिं याति (०९४-१२७)
पापमुक्तः परं पदम् (०९४-१२७)
एतत् त्वया नाव्रतिने (०९४-१२८)
न चाशुश्रूषवे परम् (०९४-१२८)
आख्येयं राजशार्दूल (०९४-१२८)
यश् च नार्चयते हरिम् (०९४-१२८)
विष्णुभक्ताय दान्ताय (०९४-१२९)
व्रतिने पुण्यशीलिने (०९४-१२९)
कथनीयम् इदं भूप (०९४-१२९)
रहस्यं परमं हरेः (०९४-१२९)
बहुशो भवता प्रोक्तं (०९५-००१)
सांप्रतं च यद् ईरितम् (०९५-००१)
श्रोतुम् इच्छामि विप्रेन्द्र (०९५-००१)
तद् विष्णोः परमं पदम् (०९५-००१)
यत्स्वरूपं यदाधारं (०९५-००२)
यत्प्रमाणं यदात्मकम् (०९५-००२)
सर्वधातुः पदं तन् मे (०९५-००२)
श्रोतुम् इच्छा प्रवर्तते (०९५-००२)
साध्व् एतद् भवता पृष्टं (०९५-००३)
पृष्टम् आत्मज्ञानसमाश्रितम् (०९५-००३)
तत् कथ्यमानम् एकाग्रः (०९५-००३)

शृणु विष्णोः परं पदम् (०९५-००३)
यत् तद् ब्रह्म यतः सर्वं (०९५-००४)
यद् सर्वं सर्वसंस्थितिः (०९५-००४)
अग्राह्यकम् अनिर्देश्यं (०९५-००४)
तद् एव भगवत्पदम् (०९५-००४)
तत्स्वरूपं च राजेन्द्र (०९५-००५)
शृणुष्वेह समाहितः (०९५-००५)
विष्णोः पदस्याव्ययस्य (०९५-००५)
ब्रह्मणो गदतो मम (०९५-००५)
प्रधानादिविशेषान्तं (०९५-००६)
यद् एतत् पठ्यते जगत् (०९५-००६)
चराचरस्य तस्याद्यं (०९५-००६)
परं ब्रह्म विलक्षणम् (०९५-००६)
जन्मस्वप्नादिरूपादि- (०९५-००७)
दुःखादिरहितं च यत् (०९५-००७)
नोपचर्यम् अनिर्देश्यं (०९५-००७)
स्वप्रतिष्ठं च तत् परम् (०९५-००७)
क्षीणक्लेशास् तु संसार- (०९५-००८)
विमुक्तिपथम् आश्रिताः (०९५-००८)
योगिनस् तत् प्रपश्यन्ति (०९५-००८)
समर्था नैव चोदितुम् (०९५-००८)
तत् सर्वं सर्वभावस्थं (०९५-००९)
विशेषेण विवर्जितम् (०९५-००९)
पश्यताम् अप्य् अनिर्देश्यं (०९५-००९)
यतो वाग्विषये न तत् (०९५-००९)
कुर्वन्त्य् आलम्बनत्वेन (०९५-०१०)
यत्प्राप्त्यर्थं च देवताः (०९५-०१०)
ब्रह्म प्रकाशते तेषां (०९५-०१०)
तद् वरेणैव सर्वगम् (०९५-०१०)
प्रधानादिविशेषान्तं (०९५-०११)
यत्रैतद् अखिलं जगत् (०९५-०११)
तस्यानन्तस्य कः शक्तः (०९५-०११)
प्रमाणं गदितुं नरः (०९५-०११)
सूक्ष्माणां तत् परं सूक्ष्मं (०९५-०१२)
स्थूलानां तन् महत्तरम् (०९५-०१२)
सर्वव्याप्य् अपि राजेन्द्र (०९५-०१२)
दूरस्थं चान्तिके च तत् (०९५-०१२)
पराङ्मुखानां गोविन्दे (०९५-०१३)
विषयाक्रान्तचेतसाम् (०९५-०१३)
तेषां तत् परमं ब्रह्म (०९५-०१३)
दूराद् दूरतरे स्थितम् (०९५-०१३)
न प्राप्नुवन्ति गच्छन्तो (०९५-०१४)
यतो जन्मायुतैर् अपि (०९५-०१४)
संसाराध्वनि राजेन्द्र (०९५-०१४)
ततो दूरतरे हि तत् (०९५-०१४)
तन्मयत्वेन गोविन्दे (०९५-०१५)
य नरा न्यस्तचेतसः (०९५-०१५)
विषयत्यागिनस् तेषां (०९५-०१५)
विज्ञेयं च तदन्तिके (०९५-०१५)

सर्वतः पाणिपादान्तं (०९५-०१६)
सर्वतो ऽक्षिशिरोमुखम् (०९५-०१६)
सर्वतः श्रुतिमल् लोके (०९५-०१६)
सर्वम् आवृत्य तिष्ठति (०९५-०१६)
सर्वेन्द्रियगुनाभासं (०९५-०१७)
सर्वेन्द्रियविवर्जितम् (०९५-०१७)
असक्तं सर्वभृच् चैनन् (०९५-०१७)
निर्गुणं गुणभोक्तृ च (०९५-०१७)
अविभक्तं च भूतेषु (०९५-०१८)
विभक्तम् इव च स्थितम् (०९५-०१८)
भूतभर्तृ च तज् ज्ञेयं (०९५-०१८)
ग्रसिष्णु प्रभविष्णु च (०९५-०१८)
ज्योतिषाम् अपि तज् ज्योतिस् (०९५-०१९)
तमसः परम् उच्यते (०९५-०१९)
ज्ञानं ज्ञेयं ज्ञानगम्यं (०९५-०१९)
हृदि सर्वस्य् अधिष्ठितम् (०९५-०१९)
तच् चाद्यो जगताम् ईशः (०९५-०२०)
परेशः परमेश्वरः (०९५-०२०)
परापरस्वरूपेण (०९५-०२०)
विष्णुः सर्वहृदि स्थितः (०९५-०२०)
यज्ञेशं यज्ञपुरुषं (०९५-०२१)
केचिद् इच्छन्ति तत्परम् (०९५-०२१)
केचिद् विष्णुं हरिं केचित् (०९५-०२१)
केचित् केशवसंज्ञितम् (०९५-०२१)
केचिद् गोविन्दनामानं (०९५-०२२)
पुण्डरीकाक्षम् अच्युतम् (०९५-०२२)
केचिज् जनार्दनं त्व् अन्ये (०९५-०२२)
वदन्ति पुरुषोत्तमम् (०९५-०२२)
केचिद् विरिञ्चिं ब्राह्मणम् (०९५-०२३)
अब्जयोनिं तथापरे (०९५-०२३)
शर्वम् ईशम् अजं रुद्रं (०९५-०२३)
शूलिनं चापरे नृप (०९५-०२३)
वरुणं केचिद् आदित्यम् (०९५-०२४)
इन्द्रम् अग्निम् अथापरे (०९५-०२४)
यमं धनेशम् अपरे (०९५-०२४)
सोमम् अन्ये प्रजापतिम् (०९५-०२४)
हिरण्यगर्भं कपिलं (०९५-०२५)
क्षेत्रज्ञं कालम् ईश्वरम् (०९५-०२५)
स्वभावम् अन्तरात्मानम् (०९५-०२५)
आत्मानं बुद्धिरूपिणम् (०९५-०२५)
वदन्ति नामभिश् चान्यैर् (०९५-०२५)
अनामानम् अरूपिणम् (०९५-०२५)
श्रूयतां तु नरव्याघ्र (०९५-०२६)
वेदवेदान्तनिश्चयः (०९५-०२६)
यज्ञेशो यज्ञपुरुषो (०९५-०२६)
पुण्डरीकाक्षसंज्ञितः (०९५-०२६)
तद् विष्णोः परमं ब्रह्म (०९५-०२७)
यतो नावर्तते पुनः (०९५-०२७)
स एव रुद्रश् चन्द्रो ऽग्निः (०९५-०२७)

सूर्यो वैश्रवणो यमः (०९५-०२७)
ब्रह्मा प्रजापतिः कालः (०९५-०२८)
स्वभावो बुद्धिर् एव च (०९५-०२८)
क्षेत्रज्ञाख्यस् तथैवान्याः (०९५-०२८)
संज्ञाभिः प्रोच्यते बुधैः (०९५-०२८)
संज्ञा तु तस्य नैवास्ति (०९५-०२९)
न रूपं नापि कल्पना (०९५-०२९)
स सर्वभूतानुगतः (०९५-०२९)
परमात्मा सनातनः (०९५-०२९)
आख्यातं भवता ब्रह्मन्न् (०९६-००१)
एतद् ब्रह्म सनातनम् (०९६-००१)
यस्माद् उत्पद्यते कृत्स्नं (०९६-००१)
जगद् एतच् चराचरम् (०९६-००१)
किंतु कौतुकम् अत्रास्ति (०९६-००२)
मम भार्गवनन्दन (०९६-००२)
तद् अहं श्रोतुम् इच्छामि (०९६-००२)
त्वत्तः संदेहम् उत्तमम् (०९६-००२)
यद् एतद् भवताख्यातं (०९६-००३)
ब्रह्म ब्रह्मविदां वर (०९६-००३)
परिणामो न तस्यास्ति (०९६-००३)
निर्गुणं सर्वगं यतः (०९६-००३)
सनातनात् सर्वगतात् (०९६-००४)
परिणामविवर्जितात् (०९६-००४)
कथं संजायते कृत्स्नं (०९६-००४)
तस्माद् अपगुणाद् अपि (०९६-००४)
द्विविधं कारणं भूप (०९६-००५)
निबोध गदतो मम (०९६-००५)
निमित्तकारणं पूर्वं (०९६-००५)
द्वितीयं परिणामि च (०९६-००५)
यथा कुम्भस्य करणे (०९६-००६)
कुलालः प्रथमं नृप (०९६-००६)
कारणं परिणामाख्यं (०९६-००६)
मृद्द्रव्यम् अपरं स्मृतम् (०९६-००६)
धर्माधर्मादयस् तद्वज् (०९६-००७)
जगत्सृष्टेर् महीपते (०९६-००७)
कारणं परिणामाख्यं (०९६-००७)
निमित्ताख्यं तु तत् परम् (०९६-००७)
कारणं कालगगने (०९६-००८)
यथा संनिधिमात्रतः (०९६-००८)
अविकारितया ब्रह्म (०९६-००८)
तथा सृष्टेर् नरेश्वर (०९६-००८)
अज्ञानपटलाच्छन्नैर् (०९६-००९)
एकदेशात्मवृत्तिभिः (०९६-००९)
अनात्मवेदिभिर् जीवैर् (०९६-००९)
निजकर्मनिबन्धनैः (०९६-००९)
कुर्वद्भिर् नृपते कर्म (०९६-०१०)
कर्तृत्वम् उपचारतः (०९६-०१०)
क्रियते सर्वभूतस्य (०९६-०१०)
सर्वगस्याव्ययात्मनः (०९६-०१०)

यतः संबन्धवान् एभिर् (०९६-०११)
अशेषैः प्राणिभिः प्रभुः (०९६-०११)
कर्तृत्वम् उपचारेण (०९६-०११)
ततस् तस्यापि भूपते (०९६-०११)
भेदाभेदस्वरूपेण (०९६-०१२)
तत्र ब्रह्म व्यवस्थितम् (०९६-०१२)
तयोः स्वरूपं नृपते (०९६-०१२)
श्रूयताम् उभयोर् अपि (०९६-०१२)
अनादिसंबन्धवत्या (०९६-०१३)
क्षेत्रज्ञः क्षेत्रविद्यया (०९६-०१३)
व्याप्तः पश्यत्य् अभेदेन (०९६-०१३)
ब्रह्म तद् ध्य् आत्मनि स्थितम् (०९६-०१३)
पश्यत्व् आत्मानम् अन्यत्र (०९६-०१४)
यावद् वै परमात्मनः (०९६-०१४)
तावत् संभ्राम्यते जन्तुर् (०९६-०१४)
मोहितो निजकर्मणा (०९६-०१४)
संक्षीनाशेषकर्मा तु (०९६-०१५)
परं ब्रह्म प्रपश्यति (०९६-०१५)
अभेदेनात्मनः शुद्धं (०९६-०१५)
शुद्धत्वाद् अक्षयो ऽक्षयम् (०९६-०१५)
भेदश् च कर्मजनितः (०९६-०१६)
क्षेत्रज्ञपरमात्मनोः (०९६-०१६)
संक्षीणकर्मबन्धस्य (०९६-०१६)
न भेदो ब्रह्मणा सह (०९६-०१६)
उपास्योपास्यकतया (०९६-*(१४७))
भेदो यैर् अपि कथ्यते (०९६-*(१४७))
तौ हि शुद्ध्यर्थम् इच्छन्ति (०९६-*(१४७))
मलानां तद् उपासनम् (०९६-*(१४७))
परो ऽसाव् अपरेणात्मा (०९६-*(१४७))
संत्यक्तममतेन तु (०९६-*(१४७))
उपास्यते तदा सो ऽपि (०९६-*(१४७))
तद्भावं प्रतिपद्यते (०९६-*(१४७))
कर्मिणां कर्मभेदेन (०९६-०१७)
भेदाद् एवादयो यतः (०९६-०१७)
कर्मक्षयाद् अशेषाणां (०९६-०१७)
भेदानां संक्षयस् ततः (०९६-०१७)
अविद्या तु क्रिया सर्वा (०९६-०१८)
विद्या ज्ञानं प्रचक्षते (०९६-०१८)
कर्मणा जायते जन्तुर् (०९६-०१८)
विद्यया तु विमुच्यते (०९६-०१८)
अद्वैतं परमार्थो हि (०९६-०१९)
द्वैतं तद्भेद उच्यते (०९६-०१९)
उभयं ब्रह्मणो रूपं (०९६-०१९)
द्वैताद्वैतविभेदतः (०९६-०१९)
तयोः स्वरूपं वदतो (०९६-०१९)
निबोध मम पार्थिव (०९६-०१९)
देवतिर्यङ्मनुष्याख्यस् (०९६-०२०)
तथैव नृप तारकः (०९६-०२०)
चतुर्विधो हि भेदो यो (०९६-०२०)

मिथ्याज्ञाननिबन्धनः (०९६-०२०)
अहम् अन्यो ऽपरश् चायम् (०९६-०२१)
अमी चात्र तथापरे (०९६-०२१)
विज्ञानम् एतत् तद् द्वैतं (०९६-०२१)
यद् अन्यच् छ्रूयतां परम् (०९६-०२१)
ममेत्यहमितिप्रज्ञा- (०९६-०२२)
वियुक्तम् अविकल्पवत् (०९६-०२२)
अविकारम् अनाख्येयम् (०९६-०२२)
अद्वैतम् अपि भूपते (०९६-०२२)
अभेदेन तवाख्यातं (०९६-०२३)
यद् एतद् ब्रह्म शाश्वतम् (०९६-०२३)
ज्ञानज्ञेयैक्यसद्भावं (०९६-०२३)
तद् एवाद्वैतसंज्ञितम् (०९६-०२३)
यश् च द्वैते प्रपञ्चः स्यान् (०९६-०२४)
निवर्त्योभयचेतसः (०९६-०२४)
मनोवृत्तिमयं द्वैतम् (०९६-०२४)
अद्वैतं परमार्थतः (०९६-०२४)
मनसो वृत्तयस् तस्माद् (०९६-०२५)
धर्माधर्मनिमित्तजाः (०९६-०२५)
निरोधव्यास् तन्निरोधाद् (०९६-०२५)
द्वैतं नैवोपपद्यते (०९६-०२५)
मनोदृश्यम् इदं द्वैतं (०९६-०२६)
यत् किंचित् सचराचरम् (०९६-०२६)
मनसो ह्य् अमतीभावे (०९६-०२६)
द्वैताभावात् तद् आप्नुयात् (०९६-०२६)
मनो हि विषयं यद्वद् (०९६-०२७)
आदत्ते तद्वद् एव तत् (०९६-०२७)
भवत्य् अपास्तविषयं (०९६-०२७)
ग्राहिधर्मे च जायते (०९६-०२७)
अग्राहि तच् च विधृतं (०९६-०२८)
योगिनां विषयं प्रति (०९६-०२८)
निरोधे योगसामर्थ्याद् (०९६-०२८)
ब्रह्मग्राह्य् एव जायते (०९६-०२८)
ग्राह्यं च परमं ब्रह्म (०९६-०२९)
योगिचित्तस्य पार्थिव (०९६-०२९)
समुज्झितग्राह्यवृत्तिर् (०९६-०२९)
अमलस्य मलं महत् (०९६-०२९)
क्षीणक्लेशास् तु संसार- (०९६-०३०)
विमुक्तिपथम् आश्रिताः (०९६-०३०)
ये ऽपि कर्माणि कुर्वन्ति (०९६-*(१४८))
भगवन्तम् अपाश्रिताः (०९६-*(१४८))
क्रियायोगपरा राजन् (०९६-*(१४८))
कामाकाङ्क्षाविवर्जिताः (०९६-*(१४८))
ब्रह्मनिष्ठा ध्यानपरा (०९६-*(१४८))
ब्रह्मण्य् एव व्यवस्थिताः (०९६-*(१४८))
ते ऽपि तद्भावम् आयान्ति (०९६-*(१४८))
विमुक्तिपथम् आश्रिताः (०९६-*(१४८))
योगिनस् तं प्रपश्यन्ति (०९६-०३०)
समर्था नैव चोदितुम् (०९६-०३०)

कर्मणो भावना येयं (०९६-०३१)
सा ब्रह्मपरिपन्थिनी (०९६-०३१)
कर्मभावनया तुल्यं (०९६-०३१)
विज्ञानम् उपपद्यते (०९६-०३१)
तादृग् भवतो विज्ञप्तिर् (०९६-०३२)
यादृशी कर्मभावना (०९६-०३२)
क्षये तस्याः परं ब्रह्म (०९६-०३२)
स्वयम् एव प्रकाशते (०९६-०३२)
एवम् एतन् मया भूप (०९६-०३३)
यथावत् कथितं तव (०९६-०३३)
द्वैताद्वैतस्वरूपेण (०९६-०३३)
यथा ब्रह्म व्यवस्थितम् (०९६-०३३)
यथावत् कर्मनिष्ठानां (०९६-*(१४९))
तत्प्राप्तिः कथितं तथा (०९६-*(१४९))
स्वरूपं ब्रह्मणश् चोक्तम् (०९६-०३४)
उभयत्रापि ते पृथक् (०९६-०३४)
वासुदेवमयस्यान्यत् (०९६-०३४)
किं भूयः कथयामि ते (०९६-०३४)
आख्यातं भगवन् सम्यक् (०९७-००१)
परं ब्रह्म त्वया मम (०९७-००१)
विष्णुर् एव जगद्धाता (०९७-००१)
योगिनां वर्तते यतः (०९७-००१)
उपायस् तस्य यः प्राप्तो (०९७-००२)
विष्णोर् ईशस्य भार्गव (०९७-००२)
अद्वैतद्वैतरूपस्य (०९७-००२)
तन् मे विस्तरतो वद (०९७-००२)
येन जन्मजरामृत्यु- (०९७-००३)
महाग्राहभवार्णवम् (०९७-००३)
त्वद्वाक्यनावम् आरुह्य (०९७-००३)
मुक्तितीरम् अवाप्नुयाम् (०९७-००३)
तन् मम ब्रूहि तत्त्वेन (०९७-*(१५०))
प्राप्नुयां येन तत् पदम् (०९७-*(१५०))
बन्धः कर्ममयो ह्य् अत्र (०९७-००४)
यथामुक्तिविघातकृत् (०९७-००४)
तस्यापगमने यत्नः (०९७-००४)
कार्यः संसारभीरुणा (०९७-००४)
सुवर्णादिमहादान- (०९७-००५)
पुण्यतीर्थावगाहनैः (०९७-००५)
शारीरैश् च तथा क्लेशैः (०९७-००५)
शास्त्रोक्तैस् तच्छमो भवेत् (०९७-००५)
देवतास्तुतिसच्छास्त्र- (०९७-००६)
श्रवणैः पुण्यदर्शनैः (०९७-००६)
गुरुशुश्रूषणाच् चैव (०९७-००६)
पापबन्धः प्रणश्यति (०९७-००६)
प्रपाकूपतडागानि (०९७-००७)
देवतायतनानि च (०९७-००७)
कारयन् पुरुषव्याघ्र (०९७-००७)
पापबन्धात् प्रमुच्यते (०९७-००७)
योगिनाम् अथ शुश्रूषां (०९७-००८)

तथैवावसथान् नृप (०९७-००८)
कुर्वन् पूर्ताश्रितं चान्यत् (०९७-००८)
पापबन्धात् प्रमुच्यते (०९७-००८)
विष्णुः कृष्णो वासुदेवो (०९७-००९)
गोविन्दः पुष्करेक्षणः (०९७-००९)
इत्यादि व्याहरन् नित्यं (०९७-००९)
पापबन्धात् प्रमुच्यते (०९७-००९)
विश्वो विश्वेश्वरो विश्व- (०९७-०१०)
विधाता धाम शाश्वतम् (०९७-०१०)
विष्णुर् इत्यादि च जपन् (०९७-०१०)
पापबन्धात् प्रमुच्यते (०९७-०१०)
पद्मनाभो हृषीकेशः (०९७-०११)
केशवो मधुसूदनः (०९७-०११)
इत्यादि व्याहरन् नित्यं (०९७-०११)
पापबन्धात् प्रमुच्यते (०९७-०११)
नारायणश् चक्रधरो (०९७-०१२)
विश्वरूपस् त्रिविक्रमः (०९७-०१२)
इत्यादि व्याहरन् नित्यं (०९७-०१२)
पापबन्धात् प्रमुच्यते (०९७-०१२)
विष्णौ प्रतिष्ठितं विश्वं (०९७-०१३)
विष्णुर् विश्वे प्रतिष्ठितः (०९७-०१३)
विष्णुर् विश्वेश्वरो विश्वम् (०९७-०१३)
इति भावात् प्रमुच्यते (०९७-०१३)
एवं संशान्तपापस्य (०९७-०१४)
पुण्यवृद्धिमतो नृप (०९७-०१४)
इच्छा प्रवर्तते पूंसो (०९७-०१४)
मुक्तिदायिषु कर्मसु (०९७-०१४)
मुक्तिदायीनि कर्माणि (०९७-*(१५१))
निष्कामेन कृतानि तु (०९७-*(१५१))
भवन्ति दोषक्षयकाः (०९७-*(१५१))
पुण्यबन्धात् प्रमुच्यते (०९७-*(१५१))
नित्यनैमित्तिकानीह (०९७-०१५)
कर्माण्य् उक्तानि यानि वै (०९७-०१५)
तेषां निष्कामकारणात् (०९७-०१५)
पुण्यबन्धः प्रशाम्यति (०९७-०१५)
अनेकजन्मसंसार- (०९७-०१६)
चितस्यापि दृढात्मनः (०९७-०१६)
कर्मबन्धस्य शैथिल्य- (०९७-०१६)
कारणं चापरं शृणु (०९७-०१६)
अहिंसा नातिमानित्वम् (०९७-०१७)
अदम्भित्वम् अमत्सरम् (०९७-०१७)
तितिक्षा समदर्शित्वं (०९७-०१७)
मैत्र्यादौ दण्डसंयमः (०९७-०१७)
ऋजुत्वम् इन्द्रियजयः (०९७-०१८)
शौचम् आचार्यपूजनम् (०९७-०१८)
पुण्यस्तवादिपठनम् (०९७-०१८)
अपैशुन्यम् अकत्थनम् (०९७-०१८)
विषयान् प्रति वैराग्यम् (०९७-०१९)
अनहंकारम् एव च (०९७-०१९)

अकामित्वं मनःस्थैर्यम् (०९७-०१९)
अद्रोहः सर्वजन्तुषु (०९७-०१९)
अविवादस् तथा मूढैर् (०९७-०२०)
अमूढैः प्रश्नसत्कथा (०९७-०२०)
विविक्तदेशे ऽभिरतिर् (०९७-०२०)
महाजनविवर्जनम् (०९७-०२०)
सद्भिः सहास्य सततं (०९७-०२१)
योगाभ्यासो मितोक्तिता (०९७-०२१)
स्त्रीभर्त्सोत्सवसंलाप- (०९७-०२१)
विवर्जनम् अवेक्षणम् (०९७-०२१)
परयोषिद्विलासानां (०९७-०२२)
काव्यालापविवर्जनम् (०९७-०२२)
गीतवादितनृत्तेषु (०९७-०२२)
मृदङ्गेष्व् अपरेषु च (०९७-०२२)
असक्तिर् मनसो मौनम् (०९७-०२३)
आत्मतत्त्वावलोकनम् (०९७-०२३)
तपः संतोषः सत्येषु (०९७-०२३)
स्थितिर् लोभविवर्जनम् (०९७-०२३)
तथा परिग्रहो राजन् (०९७-०२४)
मायाव्याजविवर्जनम् (०९७-०२४)
असृङ्मांसादिभूतत्वान् (०९७-०२४)
निजदेहजुगुप्सनम् (०९७-०२४)
सर्वाण्य् एतानि भूतानि (०९७-०२५)
विष्णुर् इत्य् अचला मतिः (०९७-०२५)
तत्रैवाशेषभूतेशे (०९७-०२५)
भक्तिर् अव्यभिचारिणी (०९७-०२५)
एते गुणा मयाख्याता (०९७-०२६)
मनोनिर्वृतिकारकाः (०९७-०२६)
शैथिल्यहेतवश् चैते (०९७-०२६)
कर्मबन्धस्य पूर्थिव (०९७-०२६)
एभिः शान्तिं गते चित्ते (०९७-०२७)
ध्यानाकृष्टः स्थितो हरिः (०९७-०२७)
शमं नयति कर्माणि (०९७-०२७)
सितमिश्रासितानि वै (०९७-०२७)
भूयश् च शृणु शास्त्रार्थं (०९७-०२८)
संक्षेपाद् वदतो मम (०९७-०२८)
यथा संप्राप्यते मुक्तिर् (०९७-०२८)
मनुजेन्द्र मुमुक्षुभिः (०९७-०२८)
नित्यनैमित्तिकानां तु (०९७-०२९)
निष्कामस्य हि या क्रिया (०९७-०२९)
निसिद्धानां सकामानां (०९७-०२९)
तथैवाकरणं नृप (०९७-०२९)
सर्वेश्वरे च गोविन्दे (०९७-०३०)
भक्तिर् अव्यभिचारिणी (०९७-०३०)
प्रयच्छति नृणां मुक्तिं (०९७-०३०)
मा ते भूद् अत्र संशयः (०९७-०३०)
आख्यातम् एतद् अखिलं (०९८-००१)
यत् पृष्टो ऽसि मया द्विज (०९८-००१)
जायते शमकामानां (०९८-००१)

प्रशमः कर्मणां यथा (०९८-००१)
किंत्व् अत्र भवता प्रोक्ता (०९८-००२)
प्रशान्तिः सर्वकर्मणाम् (०९८-००२)
नात्यन्तनाशः शान्तानाम् (०९८-००२)
उद्भवो भविता पुनः (०९८-००२)
निजकारणम् आसाद्य (०९८-००२)
स्तोकस्याग्नेर् यथा तृणम् (०९८-००२)
तद् आचक्ष्व महाभाग (०९८-००३)
प्रसादसुमुखो मम (०९८-००३)
संक्षयो येन भवति (०९८-००३)
मूलोद्वर्तेन कर्मणाम् (०९८-००३)
न कर्मणां क्षयो भूप (०९८-००४)
जन्मनाम् अयुतैर् अपि (०९८-००४)
कर्मक्षयम् ऋते योगाद् (०९८-००४)
योगाग्निः क्षपयेत् परम् (०९८-००४)
तं योगं मम विप्रर्षे (०९८-००५)
प्रणतस्याभियाचतः (०९८-००५)
त्वम् आचक्ष्व क्षयो येन (०९८-००५)
जायते ऽखिलकर्मणाम् (०९८-००५)
हिरण्यगर्भो भगवान् (०९८-००६)
अनादिर् मुनिभिः पुरा (०९८-००६)
पृष्टः प्रोवाच यं योगं (०९८-००६)
तं समासेन मे शृणु (०९८-००६)
अनादिकालप्रसृता (०९८-००७)
यथा विद्या महीपते (०९८-००७)
तथा तत्क्षयहेतुत्वाद् (०९८-००७)
योगो विद्यामयो ऽव्ययः (०९८-००७)
तं परंपरया श्रुत्वा (०९८-००८)
मुनयो ऽत्र दयालवः (०९८-००८)
प्रकाशयन्ति भूतानाम् (०९८-००८)
उपकारचिकीर्षवः (०९८-००८)
देवा महर्षयो राजंस् (०९८-००९)
तथा राजर्षयो ऽखिलाः (०९८-००९)
श्रेयोऽर्थिनः पुरा जग्मुः (०९८-००९)
शरणं कपिलं किल (०९८-००९)
ते तम् ऊचुर् भवान् नित्यं (०९८-०१०)
दयालुः सर्वजन्तुषु (०९८-०१०)
सो ऽस्मान् उद्धर संमग्नान् (०९८-०१०)
इतः संसारकर्दमात् (०९८-०१०)
यच् छ्रेयः सर्ववर्णानां (०९८-०११)
स्त्रीणाम् अप्य् उपकारकम् (०९८-०११)
यस्मात् परतरं नान्यच् (०९८-०११)
श्रेयस् तद् ब्रूहि नः प्रभो (०९८-०११)
आदाव् अन्ते च मध्ये च (०९८-०१२)
नृणां यद् उपकारकम् (०९८-०१२)
अपि कीटपतंगानां (०९८-०१२)
तन् नः श्रेयः परं वद (०९८-०१२)
इत्य् उक्तः कपिलः सर्वैर् (०९८-०१३)
देवैर् देवर्षिभिस् तथा (०९८-०१३)

नास्ति योगात् परं श्रेयः (०९८-०१३)
किंचिद् इत्य् उक्तवान् पुरा (०९८-०१३)
यथा जन्मायुतैः क्लेशाः (०९८-०१४)
स्थैर्यं चेतस्य् उपागताः (०९८-०१४)
तच्छान्तये तथा योगो (०९८-०१४)
बहुजन्मार्जितो भवेत् (०९८-०१४)
स एवाभ्यसतां नृणां (०९८-०१५)
तीव्रसंवेगिचेतसाम् (०९८-०१५)
आसन्नतां प्रयात्य् आशु (०९८-०१५)
विष्णुः संन्यस्तकर्मणाम् (०९८-०१५)
ब्राह्मणक्षत्रियविशां (०९८-०१६)
स्त्रीशूद्रस्य च पावनम् (०९८-०१६)
शान्तये कर्मणां नान्यद् (०९८-०१६)
योगाद् अस्ति हि मुक्तये (०९८-०१६)
अभ्यस्तं जन्मभिर् नैकैः (०९८-०१७)
शुभजातिभवेषु यत् (०९८-०१७)
योगस्वरूपं तत् तेषां (०९८-०१७)
स्त्रीशूद्रत्वे व्यवस्थितम् (०९८-०१७)
योगाभ्यासो नृणां येषां (०९८-०१८)
नास्ति जन्मान्तराहृतः (०९८-०१८)
योगस्य प्राप्तये तेषां (०९८-०१८)
शूद्रवैश्यादिकः क्रमः (०९८-०१८)
स्त्रीत्वाच् छूद्रत्वम् अभ्येति (०९८-०१९)
ततो वैश्यत्वम् आप्नुयात् (०९८-०१९)
ततश् च क्षत्रियो विप्रः (०९८-०१९)
क्रियाहीनस् ततो भवेत् (०९८-०१९)
अनूचानस् तथा यज्वी (०९८-०२०)
कर्मन्यासी ततः परम् (०९८-०२०)
ततो ज्ञानित्वम् अभ्येत्य (०९८-०२०)
योगी मुक्तिं क्रमाल् लभेत् (०९८-०२०)
येषां तु जातिमात्रेण (०९८-०२१)
योगाभ्यासस् तिरोहितः (०९८-०२१)
आस्ते तत्रैव मुच्यन्ते (०९८-०२१)
जातिहेतौ क्षयंगते (०९८-०२१)
असत्कर्म कृतं पूर्वम् (०९८-०२२)
असज्जातिप्रदायि यत् (०९८-०२२)
तस्मिन् योगाग्निना दग्धे (०९८-०२२)
तस्य जातेर् बलं कुतः (०९८-०२२)
यथा वातेरितः कक्षं (०९८-०२३)
दहत्य् ऊर्ध्वशिखो ऽनलः (०९८-०२३)
सर्वकर्माणि योगाग्निर् (०९८-०२३)
भस्मसात् कुरुते तथा (०९८-०२३)
यथा दग्धतुषं बीजम् (०९८-०२४)
अबीजत्वान् न जायते (०९८-०२४)
योगदग्धैस् तथा क्लेशैर् (०९८-०२४)
नात्मा संजायते पुनः (०९८-०२४)
अदृष्टा दृष्टतत्त्वानां (०९८-०२५)
योगिनां योगविच्युतिः (०९८-०२५)
येषां भवति योगित्वं (०९८-०२५)

प्राप्नुवन्तीह ते पुनः (०९८-०२५)
सज्जातिप्रापकं कर्म (०९८-०२६)
कृतं तेन तदात्मना (०९८-०२६)
जातिं प्रयान्ति विप्राद्या (०९८-०२६)
योगकर्मानुरञ्जिताः (०९८-०२६)
तत्राप्य् अनेकजन्मोत्थ- (०९८-०२७)
योगाभ्यासानुरञ्जिताः (०९८-०२७)
तेनैवाभ्यासयोगेन (०९८-०२७)
ह्रियन्ते तत्त्वविद्यया (०९८-०२७)
जैगीषव्यो यथा विप्रो (०९८-०२८)
यथा चैवासितादयः (०९८-०२८)
हिरण्यनाभो राजन्यस् (०९८-०२८)
तथा वै जनकादयः (०९८-०२८)
पूर्वाभ्यस्तेन योगेन (०९८-०२९)
तुलाधारादयो विशः (०९८-०२९)
संप्राप्ताः परमां सिद्धिं (०९८-०२९)
शूद्राः पैलवकादयः (०९८-०२९)
मैत्रेयी सुलभा गार्गी (०९८-०३०)
शाण्डिली च तपस्विनी (०९८-०३०)
स्त्रीत्वे प्राप्ताः परां सिद्धिम् (०९८-०३०)
अन्यजन्मसमाधितः (०९८-०३०)
धर्मव्याधादयो ऽप्य् अन्ये (०९८-०३१)
पूर्वाभ्यासाज् जुगुप्सिते (०९८-०३१)
वर्णावरत्वे संप्राप्ताः (०९८-०३१)
संसिद्धिं श्रवणी तथा (०९८-०३१)
पूर्वाभ्यस्तं च तत् तेषां (०९८-०३२)
योगज्ञानं महात्मनाम् (०९८-०३२)
सुप्तोत्थितप्रत्ययवद् (०९८-०३२)
उपदेशादिना विना (०९८-०३२)
तस्माद् योगः परं श्रेयो (०९८-०३३)
विमुक्तिफलदो हि यः (०९८-०३३)
विमुक्तौ सुखम् अत्यन्तं (०९८-०३३)
संमोहस् त्व् इतरत् सुखम् (०९८-०३३)
एतत् ते सर्वम् आख्यातं (०९८-०३४)
मया मनुजकुञ्जर (०९८-०३४)
श्रेयः परतरं योगात् (०९८-०३४)
किंचिद् अन्यन् न विद्यते (०९८-०३४)
कथितं योगमाहात्म्यं (०९९-००१)
भवता मुनिसत्तम (०९९-००१)
स्वरूपं तु न मे प्रोक्तं (०९९-००१)
श्रोतुम् इच्छामि तद् ध्य् अहम् (०९९-००१)
द्वैविध्यं नृप योगस्य (०९९-००२)
परं चापरम् एव च (०९९-००२)
तच् छृणुष्व वदाम्य् एष (०९९-००२)
वाच्यं शुश्रूषतां सताम् (०९९-००२)
यो दद्याद् भगवज्ज्ञानं (०९९-००३)
कुर्याद् वा धर्मदेशनाम् (०९९-००३)
कृत्स्नां वा पृथिवीं दद्यान् (०९९-००३)
न तत्तुल्यं कथंचन (०९९-००३)

क्षयिष्णून्य् अपराणीह (०९९-००४)
दानानि मनुजाधिप (०९९-००४)
एकम् एवाक्षयं शस्तं (०९९-००४)
ज्ञानदानम् अनुत्तमम् (०९९-००४)
दानान्य् एकफलानीह (०९९-००५)
त्रैलोक्ये ददता सताम् (०९९-००५)
ज्ञानं प्रयच्छता सम्यक् (०९९-००५)
किं न दत्तं भवेन् नृप (०९९-००५)
ज्ञानान्य् अन्यान्य् असाराणि (०९९-००६)
शिल्पिनीव नरेश्वर (०९९-००६)
एकम् एव परं ज्ञानं (०९९-००६)
यद् योगप्राप्तिकारकम् (०९९-००६)
अहं वक्ता भवाञ् श्रोता (०९९-००७)
वाच्यो योगो विमुक्तिदः (०९९-००७)
प्राणिनाम् उपकाराय (०९९-००७)
संपद् एषा गुणाधिका (०९९-००७)
परेण ब्रह्मणा सार्धम् (०९९-००८)
एकत्वं यन् नृपात्मनः (०९९-००८)
स एव योगो विख्यातः (०९९-००८)
किम् अन्यद् योगलक्षणम् (०९९-००८)
अपरं च परं चैव (०९९-००९)
द्वौ योगौ पृथिवीपते (०९९-००९)
तयोः स्वरूपं वक्ष्यामि (०९९-००९)
तद् इहैकमनाः शृणु (०९९-००९)
सत्तामात्रं परं ब्रह्म (०९९-०१०)
विष्णवाख्यम् अविशेषणम् (०९९-०१०)
दुर्विचिन्त्यं यतः पूर्वं (०९९-०१०)
तत्प्राप्त्यर्थम् अथोच्यते (०९९-०१०)
वातालीचञ्चलं चित्तम् (०९९-०११)
अनालम्बनम् अस्थिति (०९९-०११)
सूक्ष्मत्वाद् ब्रह्मणो राजन्न् (०९९-०११)
अग्राह्य् अग्राह्यधर्मिणः (०९९-०११)
सम्यग् अभ्यस्यतो ऽजस्रम् (०९९-०१२)
उपवृंहितशक्तिमत् (०९९-०१२)
जन्मान्तरशतैर् वापि (०९९-०१२)
ब्रह्मग्राह्य् अभिजायते (०९९-०१२)
यद्य् अन्तराय दोषेण (०९९-०१३)
नापकर्षो नराधिप (०९९-०१३)
योगिनो योगरूढस्य (०९९-०१३)
तालाग्रात् पतनं यथा (०९९-०१३)
ज्ञानं प्रयच्छतां सम्यक् (०९९-*(१५२))
किं वदतु भवेन् नृप (०९९-*(१५२))
तद् आप्नोति परं ब्रह्म (०९९-०१४)
क्लेशेन महता नृप (०९९-०१४)
जन्माभ्यासान्तरोत्थेन (०९९-०१४)
विज्ञानेन समेधितः (०९९-०१४)
विष्णवाख्यं ब्रह्म दुष्प्रापं (०९९-०१५)
विषयाकृष्टचेतसा (०९९-०१५)
मनुष्येणेति तत्प्राप्ताव् (०९९-०१५)

उपायम् अपरं शृणु (०९९-०१५)
सुरूपां प्रतिमां विष्णोः (०९९-०१६)
प्रसन्नवदनेक्षणाम् (०९९-०१६)
कृत्वात्मनः प्रीतिकरीं (०९९-०१६)
सुवर्णरजतादिभिः (०९९-०१६)
तस्याश् च लक्षणं भूप (०९९-०१७)
शृणुष्व गदतो मम (०९९-०१७)
यद्द्रव्या यत्स्वरूपा च (०९९-०१७)
कर्तव्या ध्यानकर्मणि (०९९-०१७)
सुवर्णरूप्यताम्रैस् तु (०९९-०१८)
आरकूटमयीं तथा (०९९-०१८)
शैलदारुमृदा वापि (०९९-०१८)
लेख्यजां वापि कारयेत् (०९९-०१८)
कार्यस् तु विष्णुर् भगवान् (०९९-०१९)
सौम्यरूपश् चतुर्भुजः (०९९-०१९)
सलिलाध्मातमेघाभः (०९९-०१९)
श्रीमात्र् श्रीवत्सभूषितः (०९९-०१९)
आबद्धमकुटः स्रग्वी (०९९-०२०)
हारभारार्पितोदरः (०९९-०२०)
स्वक्षेण चारुचिपुकः (०९९-०२०)
सुललाटेन सुभ्रुणा (०९९-०२०)
स्वोष्ठेन सुकपोलेन (०९९-०२१)
वदनेन विराजता (०९९-०२१)
कण्ठेन शुभलेखेन (०९९-०२१)
वराभरणधारिणा (०९९-०२१)
नानारत्नानतार्ताभ्यां (०९९-०२२)
श्रवणाभ्याम् अलंकृतः (०९९-०२२)
पुष्टश्लिष्टायतभुजस् (०९९-०२२)
तनुताम्रनखाङ्गुलिः (०९९-०२२)
मध्येन त्रिवलीभङ्ग- (०९९-०२३)
भूषितेन च चारुणा (०९९-०२३)
सुपादः सूरुयुगलः (०९९-०२३)
सुकटीगुल्फजानुकः (०९९-०२३)
वामपार्श्वे गदादेवी (०९९-०२४)
चक्रं देवस्य दक्षिणे (०९९-०२४)
शङ्खो वामकरे देयो (०९९-०२४)
दक्षिणे पद्म सुप्रभम् (०९९-०२४)
ऊर्ध्वदृष्टिम् अधोदृष्टिं (०९९-०२५)
तिर्यग्दृष्टिं न कारयेत् (०९९-०२५)
निमीलिताक्षो भगवान् (०९९-०२५)
न प्रशस्तो जनार्दनः (०९९-०२५)
सौम्या तु दृष्टिः कर्तव्या (०९९-०२५)
किंचित् प्रहसितेव च (०९९-०२५)
कार्यश् चरणविन्यासः (०९९-०२६)
सर्वतः सुप्रतिष्ठितः (०९९-०२६)
चरणान्तरसंस्था च (०९९-०२६)
बिभ्रती रूपम् उत्तमम् (०९९-०२६)
कार्या वसुंधरा देवी (०९९-०२६)
तत्पादतलधारिणी (०९९-०२६)

यादृग्विधा वा मनसः (०९९-०२७)
स्थैर्यलम्भोपपादिका (०९९-०२७)
नृसिंहवामनादीनां (०९९-०२७)
तादृशीं कारयेद् बुधः (०९९-०२७)
ब्रह्म तस्यां समारोप्य (०९९-०२८)
मनसा तन्मयो भवेत् (०९९-०२८)
ताम् आर्चयेत् तां प्रणमेत् (०९९-०२८)
तां स्मरेत् तां विचिन्तयेत् (०९९-०२८)
ताम् अर्चयंस् तां प्रणमंस् (०९९-०२९)
तां स्मरंस् तां च चिन्तयन् (०९९-०२९)
विशत्य् अपास्तदोषस् तु (०९९-०२९)
ताम् एव ब्रह्मरूपिणीम् (०९९-०२९)
संकल्पनक्रियारूढः (०९९-०३०)
स्वरूपेण नृपात्मनः (०९९-०३०)
कुर्वीत भावनां तत्र (०९९-०३०)
तद्भावोत्पत्तिकारणात् (०९९-०३०)
नान्यत्र मनसानेया (०९९-०३०)
बुद्धिर् ईषद् अपि क्वचित् (०९९-०३०)
यमैश् च नियमैश् चैव (०९९-०३१)
पूतात्मा पृथिवीश्वर (०९९-०३१)
मूर्तिं भगवतः संयक् (०९९-०३१)
पूजयेत् तन्मयः सदा (०९९-०३१)
यमांश् च नियमांश् चैव (१००-००१)
श्रोतुम् इच्छामि भार्गव (१००-००१)
यैर् धूतकल्मषो योगी (१००-००१)
मुक्तिभाग् उपजायते (१००-००१)
अहिंसा सत्यम् अस्तेयं (१००-००२)
ब्रह्मचर्यापरिग्रहौ (१००-००२)
यमास् तवैते कथिता (१००-००२)
नियमान् अपि मे शृणु (१००-००२)
संतोषशौचस्वाध्यायास् (१००-००३)
तपश् चेश्वरभावना (१००-००३)
नियमाः कौरवश्रेष्ठ (१००-००३)
योगसंसिद्धिहेतवः (१००-००३)
एभिर् मूलगुणैः सद्भिर् (१००-००४)
विष्णोर् भक्तिमतस् तथा (१००-००४)
श्रद्दधानस्य चान्यानि (१००-००४)
योगाङ्गानि निबोध मे (१००-००४)
मध्यमप्राणम् अचलं (१००-००५)
सुखदायि शुभं शुचि (१००-००५)
योगसंसिद्धये भूप (१००-००५)
योगिनाम् आसनं स्मृतम् (१००-००५)
प्राणायामस् त्रिधा वायोः (१००-००६)
प्राणस्य हृदि धारणम् (१००-००६)
कुम्भरेचकपूराख्यास् (१००-००६)
तस्य भेदास् त्रयो नृप (१००-००६)
एते निबोध मात्रास् तु (१००-००७)
नालम्बनगुणान्विताः (१००-००७)
सालम्बनश् चतुर्थो ऽन्यो (१००-००७)

बाह्यान्तर्विषयः स्मृतः (१००-००७)
इन्द्रियाणां स्वविषयाद् (१००-००८)
बुद्धिः प्रत्येकशस् तु यत् (१००-००८)
करोत्य् आहरणं ज्ञेयः (१००-००८)
प्रत्याहारः स पण्डितैः (१००-००८)
शुभे ह्य् एकत्र विषये (१००-००९)
चेतसो यच् च धारणम् (१००-००९)
निश्चलत्वात् तु सा सद्भिर् (१००-००९)
धारणेत्य् अभिधीयते (१००-००९)
पौनःपुन्येन तत्रैव (१००-०१०)
विषये सैव धारणा (१००-०१०)
ध्यानाख्या लभते राजन् (१००-०१०)
समाधिम् अपि मे शृणु (१००-०१०)
अर्थमात्रं च यद् ग्राह्ये (१००-०११)
चित्तम् आदाय पार्थिव (१००-०११)
अर्थस्वरूपवद् भाति (१००-०११)
समाधिः सो ऽभिधीयते (१००-०११)
कथितानि तवैतानि (१००-०१२)
योगाङ्गानि कृतैस् तु यैः (१००-०१२)
उत्कर्षो जायते व्यस्तैः (१००-०१२)
समस्तैर् हेयसंक्षयः (१००-०१२)
योगाङ्गान्य् अङ्गभूतानि (१००-०१३)
ध्यानस्यैतान्य् अशेषतः (१००-०१३)
ध्यानम् अप्य् अवनीपाल (१००-०१३)
योगस्याङ्गत्वम् अर्छति (१००-०१३)
ध्यानम् एकव्रतानां तु (१००-०१४)
कुशलाकुशलेषु तत् (१००-०१४)
अर्थेष्व् आशक्तिम् अभ्येति (१००-०१४)
सर्वदैव नरेश्वर (१००-०१४)
शुभाव्यावर्तितं ध्यानम् (१००-०१५)
अविवेकस्य जायते (१००-०१५)
संसारदुःखदं राजन्न् (१००-०१५)
अशुभालम्बि तद् यतः (१००-०१५)
तद् एवाकृष्य दुष्टेभ्यो (१००-०१६)
विषयेभ्यः शुभाशुभम् (१००-०१६)
सर्वसंसारकान्तार- (१००-०१६)
पारम् अभ्येति मानवः (१००-०१६)
दुःखदाघप्रशमने (१००-०१७)
या चिन्ताहर्निशं नृणाम् (१००-०१७)
तद्ध्यानम् अविशुद्धार्थं (१००-०१७)
सुखदानाम् अपालने (१००-०१७)
कथं संसारबन्धो ऽयम् (१००-०१८)
अस्मान् मुक्तिः कथं त्व् इति (१००-०१८)
मनोवृत्तिर् मनुष्याणां (१००-०१८)
ध्यानम् एतच् छुभं द्विधा (१००-०१८)
शुद्धम् अप्य् एतद् अखिलं (१००-०१९)
लोभकार्यतयानया (१००-०१९)
सुखाभिलाषो यन्मुक्तौ (१००-०१९)
बन्धुदुःखादिपीडनात् (१००-०१९)

अवाञ्छितफलं लोभम् (१००-०२०)
अलोभांशविवर्जितम् (१००-०२०)
शुभाशुभफलं ध्यानम् (१००-०२०)
अरक्तं द्विष्टम् इष्यते (१००-०२०)
दृष्टानुमानागमिकं (१००-०२१)
ध्यानस्यालम्बनं त्रिधा (१००-०२१)
न हि निर्विषयं ध्यानं (१००-०२१)
मूढवृत्तिर् इवेष्यते (१००-०२१)
प्राक् स्थूलेषु पदार्थेषु (१००-०२२)
ततः सूक्ष्मेषु पण्डितः (१००-०२२)
ध्यानं कुर्वीत तत्पश्चात् (१००-०२२)
परमाणौ महीपते (१००-०२२)
ध्यानाभ्यासपरस्यैवं (१००-०२३)
हेयालम्बनबाधने (१००-०२३)
तच्छान्तये तद्विपक्ष- (१००-०२३)
भावनाम् एव भावयेत् (१००-०२३)
तच्चित्तस् तन्मयो ज्ञानी (१००-०२४)
भवत्य् अस्मान् न दोषवत् (१००-०२४)
कुर्वीतालम्बनं काले (१००-०२४)
कस्मिंश्चिद् अपि पार्थिव (१००-०२४)
आब्रह्मस्तम्बपर्यन्त- (१००-०२५)
जगदन्तर्व्यवस्थिताः (१००-०२५)
प्राणिनः कर्मजनित- (१००-०२५)
संस्कारवशवर्तिनः (१००-०२५)
यतस् ततो न ते ध्याने (१००-०२६)
ध्यानिनाम् उपकारकाः (१००-०२६)
अविद्यान्तर्गताः सर्वे (१००-०२६)
ते हि संसारगोचराः (१००-०२६)
पश्चाद् उद्भूतबोधाश् च (१००-०२७)
ध्याता नैवोपकारकाः (१००-०२७)
नैसर्गिको न वै बोधस् (१००-०२७)
तेषाम् अप्य् अन्यतो यतः (१००-०२७)
तस्मात् तद् अमलं ब्रह्म (१००-०२८)
निसर्गाद् एव बोधवत् (१००-०२८)
ध्येयं ध्यानविदां सम्यग् (१००-०२८)
यद् विष्णोः परमं पदम् (१००-०२८)
न तद् यज्ञैर् न दानेन (१००-०२९)
न तपोभिर् न तद् व्रतैः (१००-०२९)
पश्यन्त्य् एकाग्रमनसो (१००-०२९)
ध्यानेनैव सनातनम् (१००-०२९)
तच् च विष्णोः परं रूपम् (१००-०३०)
अनिर्देश्यम् अजं स्थिरम् (१००-०३०)
यतः प्रवर्तते सर्वं (१००-०३०)
लयम् अभ्येति यत्र च (१००-०३०)
अनिद्रम् अजम् अस्वप्नम् (१००-०३१)
अरूपानाम शाश्वतम् (१००-०३१)
योगिनस् तं प्रपश्यन्ति (१००-०३१)
ज्ञानदृश्यं सनातनम् (१००-०३१)
निर्धूतपुण्यपापा ये (१००-*(१५३))

ते विशन्त्य् एवम् ईश्वरम् (१००-*(१५३))
तच् च सर्वगतं ब्रह्म (१००-०३२)
विष्णुः सर्वेश्वरेश्वरः (१००-०३२)
परमात्मा परः प्रोक्तः (१००-०३२)
सर्वकारणकारणम् (१००-०३२)
अनन्तशक्तिम् ईशेशं (१००-०३३)
स्वप्रतिष्ठम् अनोपमम् (१००-०३३)
योगिनस् तं प्रपश्यन्ति (१००-०३३)
भगवन्तं सनातनम् (१००-०३३)
यत्र सर्वं यतः सर्वं (१००-०३४)
यः सर्वं सर्वतश् च यः (१००-०३४)
योगिनस् तं प्रपश्यन्ति (१००-०३४)
भगवन्तं सनातनम् (१००-०३४)
सर्गादिकारणं यस्य (१००-०३५)
स्वभावाद् एव शक्तयः (१००-०३५)
योगिनस् तं प्रपश्यन्ति (१००-०३५)
भगवन्तं सनातनम् (१००-०३५)
निर्धूतपुण्यपापा यं (१००-०३६)
विशन्त्य् अव्ययम् ईश्वरम् (१००-०३६)
योगिनस् तं प्रपश्यन्ति (१००-०३६)
भगवन्तं सनातनम् (१००-०३६)
तत्र योगवतः सम्यक् (१००-०३७)
पुरुषस्य नरेश्वर (१००-०३७)
यद् उक्तं लक्षणं तन् मे (१००-०३७)
गदतः श्रोतुम् अर्हसि (१००-०३७)
ब्रह्मण्य् एव स्थितं चित्तं (१००-०३८)
सर्वतः संनिवर्तितम् (१००-०३८)
नान्यालम्बनसापेक्षं (१००-०३८)
योगिनः सिद्धिकारकम् (१००-०३८)
संस्थानम् अविकारेण (१००-०३९)
चेतसो ब्रह्मसंस्थितौ (१००-०३९)
निवात इव दीपस्य (१००-०३९)
योगिनः सिद्धिलक्षणम् (१००-०३९)
एवम् एकाग्रचित्तस्य (१००-०४०)
पुण्यापुण्यम् अशेषतः (१००-०४०)
प्रयाति संक्षयम् ऋते (१००-०४०)
देहारम्भकरे नृप (१००-०४०)
देहारम्भकरस्यापि (१००-०४१)
कर्मणः संक्षयावहः (१००-०४१)
यो योगः पृथिवीपाल (१००-०४१)
शृणु तस्यापि लक्षणम् (१००-०४१)
यत् तद् ब्रह्म परं प्रोक्तं (१००-०४२)
विष्ण्वाख्यम् अजम् अव्ययम् (१००-०४२)
चेतसः प्रलयस् तत्र (१००-०४२)
योग इत्य् अभिधीयते (१००-०४२)
योगसेवानिरोधेन (१००-०४३)
प्रलीने तत्र चेतसि (१००-०४३)
पुरुषः कारनाभावाद् (१००-०४३)
भेदं नैवानुपश्यति (१००-०४३)

परात्मनोर् मनुष्येन्द्र (१००-०४४)
विभागो ज्ञानकल्पितः (१००-०४४)
क्षये तस्यात्मपरयोर् (१००-०४४)
विभागाभाग एव हि (१००-०४४)
परमात्मात्मनोर् यो ऽयम् (१००-०४५)
अविभागः परंतप (१००-०४५)
स एव परमो योगः (१००-०४५)
समासात् कथितस् तव (१००-०४५)
यथा कमण्डलौ भिन्ने (१००-०४६)
तत्तोयं सलिले गतम् (१००-०४६)
व्रजत्य् ऐक्यं तथैवैतद् (१००-०४६)
उभयं कारणक्षयात् (१००-०४६)
यथाग्निर् अग्नौ संक्षिप्तः (१००-०४७)
समानत्वम् अनुव्रजेत् (१००-०४७)
तदाख्यस् तन्मयो भूत्वा (१००-०४७)
गृह्यते न विशेषतः (१००-०४७)
एवं ब्रह्मात्मनोर् योगाद् (१००-०४८)
अकत्वम् उपपन्नयोः (१००-०४८)
न भेदः कलशाकाश- (१००-०४८)
नभसोर् इव जायते (१००-०४८)
प्रक्षीणाशेषकर्मा तु (१००-०४९)
यदा ब्रह्ममयः पुमान् (१००-०४९)
तदा स्वरूपम् अस्योक्तेर् (१००-०४९)
गोचरे नोपपद्यते (१००-०४९)
घटध्वंसे घटाकाशं (१००-०५०)
न भिन्नं नभसो यथा (१००-०५०)
ब्रह्मणा हेयविध्वंसे (१००-०५०)
विष्ण्वाख्येन पुमांस् तथा (१००-०५०)
भिन्ने दृतौ यथा वायुर् (१००-०५१)
नैवान्यः सह वायुना (१००-०५१)
क्षीणपुण्याघबन्धस् तु (१००-०५१)
तथात्मा ब्रह्मणा सह (१००-०५१)
ततः समस्तकल्याण- (१००-०५२)
समस्तसुखसंपदाम् (१००-०५२)
आह्लादम् अन्यम् अतुलं (१००-०५२)
कम् अप्य् आप्नोति शाश्वतम् (१००-०५२)
ब्रह्मस्वरूपस्य तदा ह्य् (१००-०५३)
आत्मनो नित्यदैव सः (१००-०५३)
व्युत्तानकाले राजेन्द्र (१००-०५३)
आस्ते हेयतिरोहितः (१००-०५३)
आदर्शस्य मलाभावाद् (१००-०५४)
वैमल्यं काशते यथा (१००-०५४)
ज्ञानाग्निदग्धहेयस्य (१००-०५४)
सो ऽह्लादो ह्य् आत्मनस् तथा (१००-०५४)
यथा न क्रियते ज्योत्स्ना (१००-०५५)
मलप्रक्षालनादिना (१००-०५५)
दोषप्रहाणं न ज्ञानम् (१००-०५५)
आत्मनः क्रियते तथा (१००-०५५)
यथोदुपानकरणात् (१००-०५६)

क्रियते न जलाम्बरम् (१००-०५६)
सदैव नीयते व्यक्तिम् (१००-०५६)
असतः संभवः कुतः (१००-०५६)
यथा हेयगणध्वंसाद् (१००-०५७)
अवबोधादयो गुणाः (१००-०५७)
प्रकाश्यन्ते न जन्यन्ते (१००-०५७)
नित्या एवात्मनो हिते (१००-०५७)
ज्ञानवैराग्यम् ऐश्वर्यं (१००-०५८)
धर्मश् च मनुजेश्वर (१००-०५८)
आत्मनो ब्रह्मभूतस्य (१००-०५८)
नित्यम् एव चतुष्टयम् (१००-०५८)
एतद् अद्वैतम् आख्यातम् (१००-०५९)
एष योगस् तवोदितः (१००-०५९)
अयं विष्णुर् इदं ब्रह्म (१००-०५९)
तथैतत् सत्यम् उत्तमम् (१००-०५९)
पुनश् च श्रूयताम् एष (१००-०६०)
संक्षेपाद् गदतो मम (१००-०६०)
नानाद्वैकत्वविज्ञान- (१००-०६०)
स्वरूपम् अवनीपते (१००-०६०)
आत्मा क्षेत्रज्ञसंज्ञो ऽयं (१००-०६१)
संयुक्तः प्राकृतैर् गुणैः (१००-०६१)
तैर् एव विगतैः शुद्धः (१००-०६१)
परमात्मा निगद्यते (१००-०६१)
ध्येयं ब्रह्म पुमान् ध्याता (१००-०६२)
उपायो ध्यानसंज्ञितः (१००-०६२)
यस् त्व् एतत् करणेष्व् आस्ते (१००-०६२)
तद्वर्गे का विभागता (१००-०६२)
संक्षेपाद् अपि भूपाल (१००-०६३)
संक्षेपन् अपरं शृणु (१००-०६३)
पुत्राय यत् पिता ब्रूयात् (१००-०६३)
स्वशिष्यायाथवा गुरुः (१००-०६३)
न वासुदेवात् परम् अस्ति किंचिन् (१००-०६४)
न वासुदेवाद् गदितं परं च (१००-०६४)
सत्यं परं वासुदेवो ऽमितात्मा (१००-०६४)
नमो नमो वासुदेवाय नित्यम् (१००-०६४)
तस्मात् तम् आराधय चिन्तयेशम् (१००-०६५)
अभ्यर्चयानन्तम् अतन्द्रितात्मा (१००-०६५)
संसारपारं परम् ईप्समानैर् (१००-०६५)
आराधनीयो हरिर् एक एव (१००-०६५)
आराधितो ऽर्थान् धनकाङ्क्षकानां (१००-०६६)
धर्मार्थिनां धर्मम् अशेषधर्मी (१००-०६६)
ददाति कामांश् च मनोनिविष्टान् (१००-०६६)
मोक्षार्थिनां मुक्तिद एव विष्णुः (१००-०६६)
ममैतत् कथितं सम्यग् (१०१-००१)
आत्मविद्याश्रितं मुने (१०१-००१)
यत् त्व् अन्यच् छ्रोतुम् इच्छामि (१०१-००१)
तत् प्रसन्नो वदस्व मे (१०१-००१)
येयं मुक्तिर् भगवता (१०१-००२)
प्रोक्ता वर्णक्रमान् मम (१०१-००२)

तत्रेच्छामि मुने श्रोतुं (१०१-००२)
वर्णाद् वर्णोत्तरोच्छ्रयम् (१०१-००२)
शूद्रो वैश्यत्वम् अभ्येति (१०१-००३)
कथं वैश्यश् च भार्गव (१०१-००३)
क्षत्रियत्वं द्विजश्रेष्ठ (१०१-००३)
ब्राह्मणत्वं कथं ततः (१०१-००३)
विप्रत्वान् मुक्तियोग्यत्वं (१०१-००४)
यथा याति महामुने (१०१-००४)
तद् अहं श्रोतुम् इच्छामि (१०१-००४)
त्वत्तो भार्गवनन्दन (१०१-००४)
त्वद्युक्तो ऽयम् अनुप्रश्नः (१०१-००५)
कुरुवर्य शृणुष्व तम् (१०१-००५)
मयोच्यमानम् अखिलं (१०१-००५)
वर्णानाम् उपकारकम् (१०१-००५)
शूद्रधर्मान् अशेषेण (१०१-००६)
कुर्वञ् शूद्रो यथाविधि (१०१-००६)
वैश्यत्वम् एति वैश्यश् च (१०१-००६)
क्षत्रियत्वं स्वकर्मकृत् (१०१-००६)
विप्रत्वं क्षत्रियः सम्यग् (१०१-००७)
द्विजधर्मपरो नृप (१०१-००७)
विप्रश् च मुक्तिलाभेन (१०१-००७)
युज्यते सत्क्रियापरः (१०१-००७)
सर्वेषाम् एव वर्णानां (१०१-००८)
स्वधर्मम् अनुवर्तताम् (१०१-००८)
सदोच्छ्रितिर् न्यूनकृतो (१०१-००८)
हानिश् चोत्कृष्टकर्मणः (१०१-००८)
तेषां च ब्राह्मणादीनां (१०१-००९)
वर्णधर्मान् अनुक्रमात् (१०१-००९)
समुच्छ्रितिप्रदान् राजन् (१०१-००९)
गदतो मे निशामय (१०१-००९)
अनसूया दया क्षान्तिः (१०१-०१०)
शौचं मङ्गलम् अस्पृहा (१०१-०१०)
अकार्पण्यम् अनायासस् (१०१-०१०)
तथान्यः सार्ववर्णिकः (१०१-०१०)
अष्टाव् एते गुणाः पुंसां (१०१-०११)
परत्रेह च भूतये (१०१-०११)
भवन्ति कुरुशार्दूल (१०१-०११)
पृथग्धर्मांश् च मे शृणु (१०१-०११)
यज्ञाध्ययनदानानि (१०१-०१२)
ब्रह्मक्षत्रविशां नृप (१०१-०१२)
साधारणानि तेषां तु (१०१-०१२)
जीविकाकर्म कथ्यते (१०१-०१२)
याजनाध्यापनैर् विप्रस् (१०१-०१३)
तथा शस्तप्रतिग्रहैः (१०१-०१३)
भृत्यादिभरणं कुर्याद् (१०१-०१३)
यज्ञांश् च विभवे सति (१०१-०१३)
भृत्यादिभरणे नालं (१०१-०१४)
स्ववृत्त्या हि यदा द्विजः (१०१-०१४)
तदा जीवेत् समालम्ब्य (१०१-०१४)

वृत्तिं क्षत्रियवैश्ययोः (१०१-०१४)
संत्यजेत समस्तांस् तान् (१०१-०१५)
न कुर्याद् वृत्तिसंकरम् (१०१-०१५)
आपत्काले ऽपि विप्रस्य (१०१-०१५)
शूद्रकर्म न शस्यते (१०१-०१५)
प्रजानां पालनं सम्यग् (१०१-०१६)
विधिः प्रथमकल्पितः (१०१-०१६)
राजन्यस्य महीपाल (१०१-०१६)
शस्त्राजीवेन वा भृतिः (१०१-०१६)
तदुत्पन्नैर् धनैः कुर्यात् (१०१-०१७)
समस्ताः क्षत्रियक्रियाः (१०१-०१७)
तस्याप्य् आपदि वैश्यस्य (१०१-०१७)
या वृत्तिः सा विधीयते (१०१-०१७)
वाणिज्यं वैश्यजातस्य (१०१-०१८)
पशूनां पालनं कृषिः (१०१-०१८)
दद्याद् यजेच् च विधिवत् (१०१-०१८)
तदुत्पन्नधनेन सः (१०१-०१८)
द्विजातिजनशुश्रूषां (१०१-०१९)
क्रयविक्रयजैर् धनैः (१०१-०१९)
शूद्रो यजेत् पाकयज्ञैर् (१०१-०१९)
दद्याद् इष्टानि चार्थिनाम् (१०१-०१९)
तस्मै शुश्रूषवे देयं (१०१-०२०)
जीर्णवस्त्रम् उपानहौ (१०१-०२०)
छत्त्रादिकं तथा कुर्यात् (१०१-०२०)
सम्यग्धर्मोपपादनम् (१०१-०२०)
चतुर्णाम् अपि वर्णानां (१०१-०२१)
धर्मस् ते कथितो मया (१०१-०२१)
शृणुष्व च महीपाल (१०१-०२१)
धर्मम् आश्रमिणाम् अतः (१०१-०२१)
कृतोपनयनः पूर्वं (१०१-०२२)
ब्रह्मचारी गुरोर् गृहे (१०१-०२२)
गुरुशुश्रूषणं कुर्याद् (१०१-०२२)
भैक्षान्नकृतभोजनः (१०१-०२२)
निवेद्य गुरवे भैक्षम् (१०१-०२३)
अत्तव्यं तदनुज्ञया (१०१-०२३)
गुरोर् भुक्तवतः पश्चान् (१०१-०२३)
नातिस्वादुमुदावता (१०१-०२३)
वह्निशुश्रूषणं क्रुयाद् (१०१-०२४)
वेदाहरणम् एव च (१०१-०२४)
गुरोर् अर्थे सदा तोयं (१०१-०२४)
समिदाहरणं तथा (१०१-०२४)
पुष्पादीनां च कुर्वीत (१०१-०२५)
सुप्ते तस्मिन्त्र् शयीत च (१०१-०२५)
शयने च समुत्तिष्ठेत् (१०१-०२५)
तं व्रजन्तम् अनुव्रजेत् (१०१-०२५)
आहूतश् च पठेत् तेन (१०१-०२६)
तन्मना नान्यतोमुखः (१०१-०२६)
व्रतानि चरता संयग् (१०१-०२६)
ग्राह्यो वेदो यतात्मना (१०१-०२६)

दण्डवत्प्लवनं स्नाने (१०१-०२६)
शस्तं नास्याङ्गशोधनम् (१०१-०२६)
अधीत्य वेदान् वेदौ वा (१०१-०२७)
वेदं वापि यथाक्रमम् (१०१-०२७)
अविप्लुतब्रह्मचर्यो (१०१-०२७)
गृहस्थाश्रमम् आवसेत् (१०१-०२७)
यथेष्टां दक्षिणां दत्त्वा (१०१-०२८)
गुरवे कुरुनन्दन (१०१-०२८)
ततो ऽनुज्ञां समासाद्य (१०१-०२८)
गृहस्थाश्रमम् आवसेत् (१०१-०२८)
तेनैवान्तं व्रजेत् प्राज्ञस् (१०१-०२९)
तच्छुश्रूषणतत्परः (१०१-०२९)
वानप्रस्थाश्रमं तस्माच् (१०१-०२९)
चतुर्थं वापि संश्रयेत् (१०१-०२९)
यथाक्रमं वा कुर्वीत (१०१-०२९)
विधिवद् दारसंग्रहम् (१०१-०२९)
ततस् त्व् अरोगिकुलजां (१०१-०३०)
तुल्यां पत्नीं समुद्वहेत् (१०१-०३०)
गृहस्थाश्रमवृत्त्यर्थम् (१०१-०३०)
अव्यङ्गां विधिना नृप (१०१-०३०)
आख्यातवर्णधर्मेण (१०१-०३१)
धनं लब्ध्वा महीपते (१०१-०३१)
कुर्वीत श्रद्धया युक्तो (१०१-०३१)
नित्यनैमित्तिकीः क्रियाः (१०१-०३१)
अभ्यागतातिथीन् बन्धून् (१०१-०३२)
भृत्यादीन् आतुरांस् तथा (१०१-०३२)
तोषयेच् छक्तितो ऽन्नेन (१०१-०३२)
वयांस्य् अन्त्यपशून् अपि (१०१-०३२)
ऋताव् उपगमश् चैव (१०१-०३३)
गृहस्थस्यापि शब्दितः (१०१-०३३)
धर्मो धर्मभृतां श्रेष्ठ (१०१-०३३)
यज्ञोच्छिष्टं च भोजनम् (१०१-०३३)
हव्येन प्रीणयेद् देवान् (१०१-०३४)
पितृन् कव्येन शक्तितः (१०१-०३४)
मनुष्यान् अन्नपानेन (१०१-०३४)
स्वाध्यायेन र्षितर्पणम् (१०१-०३४)
कुर्याच् च प्रीणनं नित्यं (१०१-०३५)
भूतानां बलिकर्मणा (१०१-०३५)
प्रजापतिं सुतोत्पत्त्या (१०१-०३५)
हार्देन सकलं जनम् (१०१-०३५)
शुभेन कर्मणात्मानम् (१०१-०३६)
उपदेशेन चात्मजान् (१०१-०३६)
अनुजीविजनं वृत्या (१०१-०३६)
गृहस्थस् तोषयेत् सदा (१०१-०३६)
तथैवापरमानेभ्यः (१०१-०३७)
प्रदेयं गृहमेधिना (१०१-०३७)
अन्नं भिक्षार्थिनो ये च (१०१-०३७)
परिव्राड्ब्रह्मचारिणः (१०१-०३७)
एवं गृहाश्रमे देवाः (१०१-०३८)

पितरो मुनयस् तथा (१०१-०३८)
सर्वकामान् प्रयच्छन्ति (१०१-०३८)
मनुष्याश् च सुपूजिताः (१०१-०३८)
गृहस्थस् तु यदा पश्येद् (१०१-०३९)
वलीपलितम् आत्मनः (१०१-०३९)
अपत्यस्य तथापत्यं (१०१-०३९)
तदारण्यं समाश्रयेत् (१०१-०३९)
पितृदेवातिथीनां तु (१०१-०४०)
स्मृतं तत्रापि पूजनम् (१०१-०४०)
तथैवारण्यभोगश् च (१०१-०४०)
तपोभिश् चात्मकर्षणम् (१०१-०४०)
ब्रह्मचर्यं महीशय्या (१०१-०४१)
होमस् त्रिषवणाप्लुतिः (१०१-०४१)
मौनादिकरणं शस्तं (१०१-०४१)
जटावल्कलधारणम् (१०१-०४१)
ग्रीष्मे पञ्चतपोभिश् च (१०१-०४२)
वर्षास्व् अभ्रावकाशिकैः (१०१-०४२)
जलशय्या च हेमन्ते (१०१-०४२)
भाव्यं वननिकेतनैः (१०१-०४२)
इङ्गुदैरण्डतैलेन (१०१-०४३)
गात्राभ्यङ्गानि चेष्यते (१०१-०४३)
श्यामाकनीवारमयं (१०१-०४३)
फलमूलैश् च भोजनम् (१०१-०४३)
अप्रवेशस् तथा ग्रामे (१०१-०४४)
वानप्रस्थविधिः स्मृतः (१०१-०४४)
वानप्रस्थस्य ते प्रोक्तं (१०१-०४४)
धर्मलक्षणम् आदितः (१०१-०४४)
आश्रमणं त्व् अपरं भिक्षोः (१०१-०४५)
शृणुष्व गदतो मम (१०१-०४५)
ग्रामैकरात्रिर् वसतिर् (१०१-०४५)
नगरे पञ्चरात्रिका (१०१-०४५)
सर्वसङ्गपरित्यागः (१०१-०४६)
क्षान्तिर् इन्द्रियसंयमः (१०१-०४६)
विकालभैक्षचरणम् (१०१-०४६)
अनारम्भस् तथा नृप (१०१-०४६)
आत्मज्ञानावबोधेच्छा (१०१-०४७)
ब्रह्मचर्यं समाधिना (१०१-०५७)
आत्मावलोकनं चैव (१०१-०४७)
भिक्षोः शस्तानि पार्थिव (१०१-०४७)
चतुर्थश् चैष कथितस् (१०१-०४८)
तव भिक्षोर् मयाश्रमः (१०१-०४८)
क्रमाद् विमुक्तिकामानां (१०१-०४८)
पुरुषाणाम् अयं विधिः (१०१-०४८)
एवं तु वर्णधर्मेण (१०१-०४९)
तथा चाश्रमकर्मना (१०१-०४९)
निजेन संपूज्य हरिं (१०१-०४९)
सिद्धिम् आप्नोति मानवः (१०१-०४९)
ब्रह्मचारी गृहस्थश् च (१०१-०५०)
भिक्षुर् वैखानसस् तथा (१०१-०५०)

कुर्वन्तो निजकर्माणि (१०१-०५०)
विष्णुम् एव यजन्ति ते (१०१-०५०)
यतो हि देवताः सर्वा (१०१-०५१)
ब्रह्माद्याः कुरुनन्दन (१०१-०५१)
अंशभूता जगद्धातुर् (१०१-०५१)
विष्णोर् अव्यक्तजन्मनः (१०१-०५१)
विश्वे देवा यतो विष्णुर् (१०१-०५२)
विष्णुः पितृगणो यतः (१०१-०५२)
देवा यज्ञभुजश् चेशो (१०१-०५२)
यतः पापहरो हरिः (१०१-०५२)
विश्वे भूतानि भूतानि (१०१-०५३)
यतो विष्णुस् तथर्षयः (१०१-०५३)
ततः सर्वाश्रमाणां हि (१०१-०५३)
पूज्य एको जनार्दनः (१०१-०५३)
सर्वेश्वरं सर्वमयं समस्त- (१०१-०५४)
संसारहेतुक्षयकारणेशम् (१०१-०५४)
वरं वरेण्यं वरदं वरिष्ठं (१०१-०५४)
विष्णुं क्रियावान् यजते मनुष्यः (१०१-०५४)
यस्योदरे जगद् इदं परमाणुभूतं (१०१-०५५)
चन्द्रेन्द्ररुद्रमरुदश्विवसुप्रजेशैः (१०१-०५५)
सर्वैः समेतम् अमितात्मतनोस् तम् एकम् (१०१-०५५)
अभ्यर्च्य विष्णुम् अभिवाञ्छितम् अस्त्य् अलभ्यम् (१०१-०५५)
आराध्य यं भुवनभावनम् अच्युताख्यम् (१०१-०५६)
ऐश्वर्यम् ईप्सितम् अवाप पतिः सुराणाम् (१०१-०५६)
त्रैलोक्यसारम् अमरार्चितपादपद्मम् (१०१-०५६)
एकं तम् एव हरिम् अर्चयतार्चनीयम् (१०१-०५६)
यस्याङ्घ्रिपद्मगलिताम्भसि देव दैत्य- (१०१-०५७)
यक्षादिभिः सकलपापम् अपोह्य सिद्धिः (१०१-०५७)
संप्राप्यते मरणजन्मजरापहन्त्री (१०१-०५७)
विष्णोर् अजात् कथय को ऽभ्यधिकस् ततो ऽस्ति (१०१-०५७)
कमलजहरसूर्यचन्द्रशक्रैः (१०१-०५८)
सततम् अभिष्टुतम् आद्यम् ईशितारम् (१०१-०५८)
सकलभुवनकार्यकारनेशं (१०१-०५८)
पुरुषतनुं प्रणतो ऽस्मि वासुदेवम् (१०१-०५८)
श्रुतं भगवतो रूपम् (१०२-००१)
अद्वैते यत् त्वयोदितम् (१०२-००१)
विष्णोर् भृगुकुलश्रेष्ठ (१०२-००१)
यच् च द्वैते महात्मनः (१०२-००१)
अविद्याभिन्नदृग्बुद्धिः (१०२-००२)
पुरुषो मुनिपुङ्गव (१०२-००२)
द्वैतभूते जगत्य् अस्मिन्न् (१०२-००२)
अद्वैतं भावयेत् कथम् (१०२-००२)
क्रोधलोभादयो दोषा (१०२-००३)
ये मुक्तेः परिपन्थिनः (१०२-००३)
विनिवृत्तिरूपा येन (१०२-००३)
तेषां येन वदेर् ह तम् (१०२-००३)
सर्वेश्वरेश्वरेशस्य (१०२-००४)
यच् च रूपं हरेः परम् (१०२-००४)
तच् चाहं श्रोतुम् इच्छामि (१०२-००४)

त्वत्तो भृगुकुलोद्वह (१०२-००४)
सम्यक् पृष्टम् इदं भूप (१०२-००५)
भवता गुह्यम् उत्तमम् (१०२-००५)
द्वैताद्वैतकथालाप- (१०२-००५)
संबन्धाद् उपकारकम् (१०२-००५)
पुरा धर्मगृहे जज्ञे (१०२-००६)
चतुर्मूर्तिर् नरेश्वर (१०२-००६)
देवदेवो जगद्धाता (१०२-००६)
परमात्मा जनार्दनः (१०२-००६)
जगतः पालनार्थाय (१०२-००७)
दुर्वृत्तनिधनाय च (१०२-००७)
स्वेच्छया भगवान् विष्णुः (१०२-००७)
संभवत्य् एव भूतले (१०२-००७)
स्वर्गे वापि भूलोके वा (१०२-००८)
भुवर्लोके ऽथवा विभुः (१०२-००८)
यत्र वा रोचते तत्र (१०२-००८)
चिकीर्षुर् जगतो हितम् (१०२-००८)
तुरीयांशेन धर्मस्य (१०२-००९)
भगवान् भूतभावनः (१०२-००९)
यदावतारं कृतवांस् (१०२-००९)
तदा तच्चरितं शृणु (१०२-००९)
नरो नारायणश् चैव (१०२-०१०)
हरिः कृष्णस् तथैव च (१०२-०१०)
विष्णोर् अंशांशका ह्य् एते (१०२-०१०)
चत्वारो धर्मसूनवः (१०२-०१०)
तेषां नारायणनरौ (१०२-०११)
गन्धमादनपर्वते (१०२-०११)
आत्मन्य् आत्मानम् आधाय (१०२-०११)
तेपते परमं तपः (१०२-०११)
ध्यायमानाव् अनौपम्यं (१०२-०१२)
स्वकारणम् अकारणम् (१०२-०१२)
वासुदेवम् अनिर्देश्यम् (१०२-०१२)
अप्रतर्क्यम् अजं परम् (१०२-०१२)
योगयुक्तौ महामौनम् (१०२-०१२)
आस्थितौ गुरुतेजसौ (१०२-०१२)
तयोस् तपःप्रभावेण (१०२-०१३)
न तताप दिवाकरः (१०२-०१३)
ववौ चाशङ्कितो वायुः (१०२-०१३)
सुखस्पर्शो ह्य् असर्करः (१०२-०१३)
शिशिरो ऽभवद् अत्यर्थं (१०२-०१४)
ज्वलन्न् अपि विभावसुः (१०२-०१४)
सिंहव्याघ्रादयः सौम्याश् (१०२-०१४)
चेरुः सह मृगैर् गिरौ (१०२-०१४)
तयोर् गौरवभारार्ता (१०२-०१५)
पृथिवी पृथिवीपते (१०२-०१५)
चचाल भूधराश् चेलुश् (१०२-०१५)
चुक्षुभुश् च महाब्धयः (१०२-०१५)
देवाश् च स्वेषु धिष्ण्येषु (१०२-०१६)
निष्प्रभेषु हतप्रभाः (१०२-०१६)

बभूवुर् अवनीपाल (१०२-०१६)
परमं क्षोभम् आगताः (१०२-०१६)
देवराजस् ततः शक्रः (१०२-०१७)
संत्रस्तस् तपसस् तयोः (१०२-०१७)
युयोजाप्सरसः शुभ्रास् (१०२-०१७)
तयोर् विघ्नचिकीर्षया (१०२-०१७)
रम्भे तिलोत्तमे कुण्ठे (१०२-०१८)
घृताचि ललितावति (१०२-०१८)
उम्लोचे सुभ्रुप्रम्लोचे (१०२-०१८)
सौरभे ऽपि मदोद्धते (१०२-०१८)
अलम्बुषे मिश्रकेशि (१०२-०१९)
पुण्डरीके वरूथिनि (१०२-०१९)
विलोभनीयं बिभ्राणा (१०२-०१९)
वपुर् मन्मथबोधनम् (१०२-०१९)
गन्धमादनम् आसाद्य (१०२-०१९)
कुरुध्वं वचनं मम (१०२-०१९)
नरनारायणौ तत्र (१०२-०२०)
तपोदीक्षान्वितौ द्विजौ (१०२-०२०)
तप्येते धर्मतनयौ (१०२-०२०)
तपः परमदुश्चरम् (१०२-०२०)
ताव् अस्माकं वरारोहाः (१०२-०२१)
कुर्वाणौ परमं तपः (१०२-०२१)
कर्मातिशयदुःखार्ति- (१०२-०२१)
प्रदावयतिनाशकौ (१०२-०२१)
तद् गच्छत न भीः कार्या (१०२-०२२)
भवतीभिर् इदं वचः (१०२-०२२)
स्मरः सहायो भविता (१०२-०२२)
वसन्तश् च वराङ्गनाः (१०२-०२२)
रूपं च वः समालोक्य (१०२-०२३)
मदनोद्दीपनं परम् (१०२-०२३)
कन्दर्पवशम् अभ्येति (१०२-०२३)
विवशः को न मानवः (१०२-०२३)
इत्य् उक्ता देवराजेन (१०२-०२४)
मदनेन समं तदा (१०२-०२४)
जग्मुर् अप्सरसः सर्वा (१०२-०२४)
वसन्तश् च महीपते (१०२-०२४)
गन्धमादनम् आसाद्य (१०२-०२५)
पुंस्कोकिलकुलाकुलम् (१०२-०२५)
चकार माधवो रम्यं (१०२-०२५)
प्रोत्फुल्लवनपादपम् (१०२-०२५)
प्रववौ दक्षिणः सद्यो (१०२-०२६)
मलयानुगतो ऽनिलः (१०२-०२६)
भृङ्गमालारुतरवैर् (१०२-०२६)
रमणीयम् अभूद् वनम् (१०२-०२६)
गन्धश् च सुरभिः सद्यो (१०२-०२७)
वनराजिसमुद्भवः (१०२-०२७)
किंनरोरगयक्षाणां (१०२-०२७)
बभूव घ्राणतर्पणः (१०२-०२७)
वराङ्गनाश् च ताः सर्वा (१०२-०२८)

नरनारायणाव् ऋषी (१०२-०२८)
विलोभयितुम् आरब्धा (१०२-०२८)
वराङ्गललितैः स्मितैः (१०२-०२८)
जगुर् मनोहरं काश्चिन् (१०२-०२९)
ननृतुश् चात्र चापराः (१०२-०२९)
अवादयंस् तथैवान्या (१०२-०२९)
मनोहरतरं नृप (१०२-०२९)
हावैर् भावैः स्मितैस् त्रासैस् (१०२-०३०)
तथान्या वल्गुभाषितैः (१०२-०३०)
तयोः क्षोभाय तन्वङ्ग्यश् (१०२-०३०)
चक्रुर् उद्यमम् अङ्गनाः (१०२-०३०)
तथापि न तयोः कश्चिन् (१०२-०३१)
मनसः पृथिवीपते (१०२-०३१)
विकारो ऽभवद् अध्यात्म- (१०२-०३१)
पारसंप्राप्तचेतसोः (१०२-०३१)
निवातस्थौ यथा दीपाव् (१०२-०३२)
अकम्पौ नृप तिष्ठतः (१०२-०३२)
वासुदेवार्पणे स्वच्छे (१०२-०३२)
तथैव मनसी तयोः (१०२-०३२)
पूर्यमाणो ऽपि चाम्भोभिर् (१०२-०३३)
भुवम् अन्यां महोदधिः (१०२-०३३)
यथा न याति न ययौ (१०२-०३३)
तथा तन्मानसं क्वचित् (१०२-०३३)
सर्वभूतहितौ ब्रह्म (१०२-०३४)
वासुदेवमयं परम् (१०२-०३४)
मन्यमानौ न रागस्य (१०२-०३४)
द्वेषस्य च वशंगतौ (१०२-०३४)
स्मरो ऽपि न शशाकाथ (१०२-०३५)
प्रवेष्टुं हृदयं तयोः (१०२-०३५)
विद्यामयं दीपयुतम् (१०२-०३५)
अन्धकारम् इवालयम् (१०२-०३५)
पुष्पोज्ज्वलांस् तरुवरान् (१०२-०३६)
वसन्तं दक्षिणानिलम् (१०२-०३६)
ताश् चैवाप्सरसः सर्वाः (१०२-०३६)
कन्दर्पं च महामुनी (१०२-०३६)
यच् चारब्धं तपस् ताभ्याम् (१०२-०३७)
आत्मानं गन्धमादनम् (१०२-०३७)
ददृशाते ऽखिलं रूपं (१०२-०३७)
ब्रह्मणः पुरुषर्षभ (१०२-०३७)
दाहाय नानलो वह्नेर् (१०२-०३८)
नापःक्लेदाय चाम्भसः (१०२-०३८)
तद्द्रव्यम् एव तद्द्रव्य- (१०२-०३८)
विकाराय न वै यतः (१०२-०३८)
ततो विज्ञानविज्ञात- (१०२-०३९)
परब्रह्मस्वरूपयोः (१०२-०३९)
मधुकन्दर्पयोषित्सु (१०२-०३९)
विकारो नाभवत् तयोः (१०२-०३९)
ततो गुरुतरं यत्नं (१०२-०४०)
वसन्तमदनौ नृप (१०२-०४०)

चक्राते ताश् च तन्वङ्ग्यस् (१०२-०४०)
तत्क्षोभाय पुनः पुनः (१०२-०४०)
अथ नारायणो धैर्य- (१०२-०४१)
गाम्भीर्योदार्यमानसः (१०२-०४१)
ऊरोर् उत्पादयाम् आस (१०२-०४१)
तां वरोरुबलां तदा (१०२-०४१)
त्रैलोक्यसुन्दरीरत्नम् (१०२-०४२)
अशेषम् अवनीपते (१०२-०४२)
गुणलाघवम् अभ्येति (१०२-०४२)
यस्याः संदर्शनाद् अनु (१०२-०४२)
तां विलोक्य महीपाल (१०२-०४३)
चकम्पे माधवानिलम् (१०२-०४३)
वसन्तो विस्मयं यातः (१०२-०४३)
संयातः संस्मरं स्मरः (१०२-०४३)
रम्भातिलोत्तमाद्याश् च (१०२-०४४)
विलक्षा देवयोषितः (१०२-०४४)
न रेजुर् अवनीपाल (१०२-०४४)
तल्लक्षहृदयेक्षणाः (१०२-०४४)
ततः कामो वसन्तश् च (१०२-०४५)
पार्थिवाप्सरसश् च ताः (१०२-०४५)
प्रणम्य भगवन्तौ तौ (१०२-०४५)
तुष्टुवुर् मुनिसत्तमौ (१०२-०४५)
प्रसीदतु जगद्धाता (१०२-०४६)
यस्य देवस्य मायया (१०२-०४६)
मोहिताः स्म विजानीमो (१०२-०४६)
नान्तरं वन्द्यनिन्द्ययोः (१०२-०४६)
प्रसीदतु स नो देवो (१०२-०४७)
यस्य रूपम् इदं द्विधा (१०२-०४७)
धाम भूतस्य लोकानाम् (१०२-०४७)
अनादेर् अत्र तिष्ठति (१०२-०४७)
नरनारायणौ देवौ (१०२-०४८)
शार्ङ्गचक्रायुधाव् उभौ (१०२-०४८)
आस्तां प्रसादसुमुखाव् (१०२-०४८)
अस्माकम् अपराधिनाम् (१०२-०४८)
निधानं सर्वविद्यानां (१०२-०४९)
सर्वपापेन्धनानलः (१०२-०४९)
नारायणो नो भगवान् (१०२-०४९)
सर्वपापं व्यपोहतु (१०२-०४९)
शार्ङ्गचक्रायुधः श्रीमान् (१०२-०५०)
आत्मज्ञानमयो ऽनघः (१०२-०५०)
नरः समस्तपापानि (१०२-०५०)
हत्वात्मा सर्वदेहिनाम् (१०२-०५०)
जटाकलापबन्धो ऽयम् (१०२-०५१)
अनयोर् अक्षयात्मनोः (१०२-०५१)
सौम्या च दृष्टिः पापानि (१०२-०५१)
हन्तु सर्वाणि नः शुभा (१०२-०५१)
प्रसीदतु नरो ऽस्माकं (१०२-०५२)
तथा नारायणो ऽव्ययः (१०२-०५२)
अपराधः कृतो ऽस्माभिर् (१०२-०५२)

ययोर् अव्यक्तजन्मनोः (१०२-०५२)
क्व मूर्तिर् ऐश्वर्यगुणैर् (१०२-०५३)
युक्ता दिव्यैर् महात्मनोः (१०२-०५३)
क्व नः शरीरकाणीदृग् (१०२-०५३)
मिश्रकर्मचितानि वै (१०२-०५३)
तथाप्य् अविद्यादुष्टेन (१०२-०५४)
मनसा यः कृतो हि वाम् (१०२-०५४)
अस्माभिर् अपराधो ऽयं (१०२-०५४)
क्षम्यतां सुमहाद्युती (१०२-०५४)
शरणं च प्रपन्नानां (१०२-०५५)
तवास्मीति च वादिनाम् (१०२-०५५)
प्रसादं पितृहन्तॄणाम् (१०२-०५५)
अपि कुर्वन्ति साधवः (१०२-०५५)
एष एव वरो ऽस्माकम् (१०२-०५६)
अविवेकाहृतो महान् (१०२-०५६)
त्रैलोक्यवन्द्यौ यन्नाथौ (१०२-०५६)
विलोभयितुम् आगताः (१०२-०५६)
प्रसीद देव विज्ञान- (१०२-०५७)
घनमूढदृशाम् अपि (१०२-०५७)
भवन्ति सन्तः सततं (१०२-०५७)
सद्धर्मन्यवतारकाः (१०२-०५७)
दृष्ट्वैतन् नः समुत्पन्नं (१०२-०५८)
यथा स्त्रीरत्नम् ईदृशम् (१०२-०५८)
त्वयि नारायणोत्पन्ना (१०२-०५८)
श्रेष्ठा पारवती मतिः (१०२-०५८)
तेन सत्येन सत्यात्मन् (१०२-०५९)
परमात्मन् सनातनम् (१०२-०५९)
नारायण प्रसीदेति (१०२-०५९)
सर्वलोकपरायण (१०२-०५९)
प्रसन्नबुद्धे शान्तात्मन् (१०२-०६०)
प्रसन्नवदनेक्षण (१०२-०६०)
प्रसीद योगिनाम् ईश (१०२-०६०)
नर सर्वगताच्युत (१०२-०६०)
नमस्यामो नरं देवं (१०२-०६१)
तथा नारायणं हरिम् (१०२-०६१)
नमो नराय नम्याय (१०२-०६१)
नमो नारायणाय च (१०२-०६१)
प्रसन्नानाम् अनाथानाम् (१०२-०६२)
अपराधवतां प्रभुः (१०२-०६२)
शं करोतु नरो ऽस्माकं (१०२-०६२)
शं नारायण देहि नः (१०२-०६२)
एवम् अभ्यर्थितः स्तुत्या (१०२-०६३)
रागद्वेषादिवर्जितः (१०२-०६३)
प्राहेशः सर्वभूतानां (१०२-०६३)
साध्यो नारायणो नृप (१०२-०६३)
स्वागतं मधवे काम (१०२-०६४)
भवतो ऽप्सरसाम् अपि (१०२-०६४)
यत् कार्यम् आगतानां व (१०२-०६४)
इहास्माभिस् तद् उच्यताम् (१०२-०६४)

यूयं संसिद्धये नूनम् (१०२-०६५)
अस्माकं वलशत्रुणा (१०२-०६५)
संप्रेषितास् ततो ऽस्माकं (१०२-०६५)
नृत्तगेयादिदर्शितम् (१०२-०६५)
न वयं नृत्तगीतेन (१०२-०६६)
नाङ्गचेष्टादिभाषितैः (१०२-०६६)
लुभ्यामो विषतो मन्ये (१०२-०६६)
विषया दारुणात्मकाः (१०२-०६६)
शब्दादिसङ्गदुष्टानि (१०२-०६७)
यदा नाक्षाणि नः शुभाः (१०२-०६७)
तदा नृत्तादयो भावाः (१०२-०६७)
कथं लोभप्रदायिनः (१०२-०६७)
ते सिद्धाः स्म न वै साध्या (१०२-०६८)
भवतीनां स्मरस्य च (१०२-०६८)
माधवस्य च शक्रो ऽपि (१०२-०६८)
स्वास्थ्यं यात्व् अविशङ्कितः (१०२-०६८)
यो ऽसौ परस्मात् परमः (१०२-०६९)
पुरुषात् परमेश्वरः (१०२-०६९)
परमात्मा हृषीकेशः (१०२-०६९)
स्थावरस्य चरस्य च (१०२-०६९)
उत्पत्तिहेतुर् अन्ते च (१०२-०७०)
यस्मिन् सर्वं प्रलीयते (१०२-०७०)
स सर्ववासिदेवत्वाद् (१०२-०७०)
वासुदेवेत्य् उदाहृतः (१०२-०७०)
वयम् अंशांशकास् तस्य (१०२-०७१)
चतुर्व्यूहस्य मायिनः (१०२-०७१)
तदादेशितवर्त्मनो (१०२-०७१)
जगद्बोधाय देहिनः (१०२-०७१)
तं सर्वभूतं सर्वेशं (१०२-०७२)
सर्वत्र समदर्शिनः (१०२-०७२)
पश्यन्तः कुत्र रागादीन् (१०२-०७२)
करिष्यामो विभेदकान् (१०२-०७२)
वसन्ते मयि चेन्द्रे च (१०२-०७३)
भवतीषु तथा स्मरे (१०२-०७३)
यदा स एव विश्वात्मा (१०२-०७३)
तदा द्वेषादयः कथम् (१०२-०७३)
तन्मयान्य् अविभक्तानि (१०२-०७४)
यदा सर्वेषु जन्तुषु (१०२-०७४)
पृथिव्य् आपस् तथा तेजो (१०२-०७४)
वायुर् आकाशम् एव च (१०२-०७४)
तथेन्द्रियाण्य् अहंकारो (१०२-०७५)
बुद्धिश् च न पृथग् यतः (१०२-०७५)
समदृष्टिर् यतः कुत्र (१०२-०७५)
रागद्वेषौ प्रवर्ततः (१०२-०७५)
आत्मा चायम् अभेदेन (१०२-०७६)
यतः सर्वेषु जन्तुषु (१०२-०७६)
सर्वेश्वरेश्वरो विष्णुः (१०२-०७६)
कुत्र रागादयस् ततः (१०२-०७६)
ब्रह्माणम् इन्द्रम् ईशानम् (१०२-०७७)

आदित्यान् मरुतो ऽखिलान् (१०२-०७७)
विश्वेदेवान् ऋषीन् साध्यान् (१०२-०७७)
वसून् पितृगणांस् तथा (१०२-०७७)
यक्षराक्षसभूतादीन् (१०२-०७८)
नागसर्पसरीसृपान् (१०२-०७८)
मनुष्यपक्षिगोरूप- (१०२-०७८)
गजसिंहजलेचरान् (१०२-०७८)
मक्षिकामशकादंशाञ् (१०२-०७९)
शलभान् अलसान् कृमीन् (१०२-०७९)
गुल्मवृक्षलतावल्लि- (१०२-०७९)
त्वक्सारतृणजातिजान् (१०२-०७९)
यच् च किंचिद् अदृश्यं वा (१०२-०८०)
दृश्यं वा त्रिदशाङ्गनाः (१०२-०८०)
मन्यध्वं रूपम् एकस्य (१०२-०८०)
तत् सर्वं परमात्मनः (१०२-०८०)
जानमानः कथं विष्णुम् (१०२-०८१)
आत्मानं परमं च यत् (१०२-०८१)
रागद्वेषौ तथा लोभं (१०२-०८१)
कः कुर्याद् अमराङ्गनाः (१०२-०८१)
सर्वभूतस्थिते विष्णौ (१०२-०८२)
सर्वगे सर्वधातरि (१०२-०८२)
निपात्यतां पृथग्भूते (१०२-०८२)
कुत्र रागादिको गणः (१०२-०८२)
एवम् अस्मासु युष्मासु (१०२-०८३)
सर्वभूतेषु चाबलाः (१०२-०८३)
तन्मयत्वैकभूतेषु (१०२-०८३)
रागाद्यवसरः कुतः (१०२-०८३)
सम्यग्दृष्टिर् इयं प्रोक्ता (१०२-०८४)
समस्तैक्यावलोकिनी (१०२-०८४)
पृथग्विज्ञानम् अत्रैव (१०२-०८४)
लोकसंव्यवहारवत् (१०२-०८४)
भूतेन्द्रियान्तःकरण- (१०२-०८५)
प्रधानपुरुषात्मकम् (१०२-०८५)
जगद् यद् एतद् अखिलं (१०२-०८५)
तदा भेदः किमात्मकः (१०२-०८५)
भवन्ति लयम् आयान्ति (१०२-०८६)
समुद्रे सलिलोर्मयः (१०२-०८६)
न वारिभेदतो भिन्नास् (१०२-०८६)
तथैवैक्याद् इदं जगत् (१०२-०८६)
यथाग्नेर् अर्चिषः पीताः (१०२-०८७)
पिङ्गलारुणधूसराः (१०२-०८७)
भवन्ति नाग्निभेदेन (१०२-०८७)
तथैतद् ब्रह्मणो जगत् (१०२-०८७)
भवतीभिश् च यत् क्षोभम् (१०२-०८८)
अस्माकं स पुरंदरः (१०२-०८८)
कारयत्य् असद् एतच् च (१०२-०८८)
विवेकाधारचेतसाम् (१०२-०८८)
भवत्यः स च देवेन्द्रो (१०२-०८९)
लोकाश् च ससुरासुराः (१०२-०८९)

समुद्राद्रिवनोपेता (१०२-०८९)
मद्देहान्तरगोचराः (१०२-०८९)
यथेयं चारुसर्वाङ्गी (१०२-०९०)
भवतीनां मयोरुतः (१०२-०९०)
दर्शिता दर्शयिष्यामि (१०२-०९०)
तथात्रैवाखिलं जगत् (१०२-०९०)
प्रयातु शक्रो मा गर्वम् (१०२-०९१)
इन्द्रत्वं कस्य सुस्थिरम् (१०२-०९१)
यूयं च मा स्मयं यात (१०२-०९१)
सन्ति रूपान्विताः स्त्रियः (१०२-०९१)
किं सुरूपं कुरूपं वा (१०२-०९२)
यदा भेदो न दृश्यते (१०२-०९२)
तारतम्यं सुरूपत्वे (१०२-०९२)
सततं भिन्नदर्शिनाम् (१०२-०९२)
भवतीनां स्मयं मत्वा (१०२-०९३)
रूपौदार्यगुणोद्भवम् (१०२-०९३)
मयेयं दर्शिता तन्वी (१०२-०९३)
ततस् तच्छमम् इच्छता (१०२-०९३)
यस्मान् मदूरोर् उद्भूता (१०२-०९४)
इयम् इन्दीवरेक्षणा (१०२-०९४)
उर्वशी नाम कल्याणी (१०२-०९४)
भविष्यति ततो ऽप्सराः (१०२-०९४)
तद् इयं देवराजाय (१०२-०९५)
नीयतां वरवर्णिनी (१०२-०९५)
भवत्यस् तेन चास्माकं (१०२-०९५)
प्रेषिताः प्रीतिम् इच्छता (१०२-०९५)
वक्तव्यश् च सहस्राक्षो (१०२-०९६)
नास्माकं भोगकारणात् (१०२-०९६)
तपश्चर्या न चाप्राप्य- (१०२-०९६)
फलं प्राप्तुम् अभीप्सितम् (१०२-०९६)
सन्मार्गम् अस्य जगतो (१०२-०९७)
दर्शयिष्यन् करोम्य् अहम् (१०२-०९७)
तपो नरेण सहितो (१०२-०९७)
जगतः पालनोद्यतः (१०२-०९७)
यदि कश्चित् तवाबाधां (१०२-०९८)
करोति त्रिदशेश्वर (१०२-०९८)
तम् अहं वारयिष्यामि (१०२-०९८)
निर्वृतो भव वासव (१०२-०९८)
कर्तासि चेत् त्वम् आबाधाम् (१०२-०९९)
अदुष्टस्येह कस्यचित् (१०२-०९९)
तवापि शास्तैतद् अहं (१०२-०९९)
प्रवर्तिष्याम्य् असंशयम् (१०२-०९९)
एतज् ज्ञात्वा न संतापस् (१०२-१००)
त्वया कार्यो हि मां प्रति (१०२-१००)
उपकाराय जगताम् (१०२-१००)
अवतीर्णो ऽस्मि वासव (१०२-१००)
या चेयम् उर्वशी मत्तः (१०२-१०१)
समुद्भूता पुरंदर (१०२-१०१)
त्रेताग्निहेतुभूतेयम् (१०२-१०१)

ऐलं प्राप्य भविष्यति (१०२-१०१)
इत्य् उक्ते ऽप्सरसः सर्वाः (१०३-००१)
प्रणिपत्यातिविस्मिताः (१०३-००१)
ऊचुर् नारायणं देवं (१०३-००१)
तद्दर्शनकुतूहलाः (१०३-००१)
उक्तो भगवता यो ऽयम् (१०३-००२)
उपदेशो हितार्थिनाम् (१०३-००२)
प्रोक्तः स सर्वो विज्ञातो (१०३-००२)
माहात्म्यं विदितं च ते (१०३-००२)
यत् त्व् एतद् भवता प्रोक्तं (१०३-००३)
प्रसन्नेनाव्ययात्मना (१०३-००३)
दर्शितेयं विशालाक्षी (१०३-००३)
दर्शयिष्यामि वो जगत् (१०३-००३)
तन्नाथ सर्वभावेन (१०३-००४)
प्रपन्नानां जगत्पते (१०३-००४)
दर्शयात्मानम् अखिलं (१०३-००४)
दर्शितेयं यथोर्वशी (१०३-००४)
यदि देवापराद्धेषु (१०३-००५)
नास्मासु कुपितं तव (१०३-००५)
मनस् तज् जगतम् ईश (१०३-००५)
दर्शयात्मानम् आत्मना (१०३-००५)
पश्यतेहाखिलांल् लोकान् (१०३-००६)
मम देहे सुराङ्गनाः (१०३-००६)
मधुं मदनम् आत्मानं (१०३-००६)
यच् चान्यद् द्रष्टुम् इच्छथ (१०३-००६)
इत्य् उक्त्वा भगवान् देवस् (१०३-००७)
तदा नारायणो नृप (१०३-००७)
उच्चैर् जहास स्वनवत् (१०३-००७)
तत्राभूद् अखिलं जगत् (१०३-००७)
ब्रह्मा प्रजापतिः शक्रः (१०३-००८)
सह रुद्रैः पिनाकधृक् (१०३-००८)
आदित्या वसवः साध्या (१०३-००८)
विश्वेदेवा महर्षयः (१०३-००८)
नासत्यदस्राव् अनिलाः (१०३-००९)
सर्वे सर्वे तथाग्नयः (१०३-००९)
यक्षगन्धर्वसिद्धाश् च (१०३-००९)
पिशाचाः किंनरोरगाः (१०३-००९)
समस्ताप्सरसो विद्याः (१०३-०१०)
साङ्गा वेदास् तदुक्तयः (१०३-०१०)
मनुष्याः पशवः कीटाः (१०३-०१०)
पक्षिणः पादपास् तथा (१०३-०१०)
सरीसृपाश् च ये सूक्ष्मा (१०३-०११)
यच् चान्यज् जीवसंज्ञितम् (१०३-०११)
समुद्राः सकलाः शैलाः (१०३-०११)
सरितः काननानि च (१०३-०११)
द्वीपान्य् अशेषाणि तथा (१०३-०१२)
नदाः सर्वसरांसि च (१०३-०१२)
नगरग्रामपूर्णा च (१०३-०१२)
मेदिनी मेदिनीपते (१०३-०१२)

देवाङ्गनाभिर् देवस्य (१०३-०१२)
देहे दृष्टं महात्मनः (१०३-०१२)
नक्षत्रग्रहताराभिः (१०३-०१३)
समवेतं नभस्तलम् (१०३-०१३)
ददृशुस् ताः सुचार्वङ्ग्यस् (१०३-०१३)
तस्यान्तर् विश्वरूपिणः (१०३-०१३)
नोर्ध्वं न तिर्यङ् नाधश् च (१०३-०१४)
यदान्तस् तस्य दृश्यते (१०३-०१४)
तम् अनन्तम् अनादिं च (१०३-०१४)
ततस् तास् तुष्टुवुः प्रभुम् (१०३-०१४)
मदनेन समं सर्वा (१०३-०१५)
मधुना च सुराङ्गनाः (१०३-०१५)
ससाध्वसा भक्तिमत्यः (१०३-०१५)
परं विस्मयम् आगताः (१०३-०१५)
पश्याम नादिं तव देव नान्तम् (१०३-०१६)
न मध्यम् अव्याकृतरूपपारम् (१०३-०१६)
परायणं त्वा जगताम् अनन्तम् (१०३-०१६)
नताः स्म नारायणम् आत्मभूतम् (१०३-०१६)
मही दिवं वायुजलाग्नयस् त्वं (१०३-०१७)
शब्दादिरूपश् च परापरात्मन् (१०३-०१७)
त्वत्तो भवत्य् अच्युत सर्वम् एतद् (१०३-०१७)
अभेदरूपो ऽसि विभो त्वम् एभिः (१०३-०१७)
द्रष्टासि रूपस्य रसस्य वेत्ता (१०३-०१८)
श्रोता च शब्दस्य हरे त्वम् एकः (१०३-०१८)
स्प्रष्टा भवान् स्प्रशवतो ऽखिलस्य (१०३-०१८)
घ्रातासि गन्धस्य पृथक्शरीरी (१०३-०१८)
सुरेषु सर्वेषु न सो ऽस्ति कश्चिन् (१०३-०१९)
मनुष्यलोके च न सो ऽस्ति कश्चित् (१०३-०१९)
पश्वादिवर्गे च न सो ऽस्ति कश्चिद् (१०३-०१९)
यो नांशभूतस् तव देवदेव (१०३-०१९)
ब्रह्माद्युपेन्द्रप्रमुखानि सौम्येष्व् (१०३-०२०)
इन्द्राग्निरूपाणि च वीर्यवत्सु (१०३-०२०)
रुद्रान्तकादीनि च रौद्रवत्सु (१०३-०२०)
रूपेषु रूपाणि तवोत्तमानि (१०३-०२०)
समुद्ररूपं तव धैर्यवत्सु (१०३-०२१)
तेजस्विरूपेषु रविस् तथाग्निः (१०३-०२१)
क्षमाधनेषु क्षितिरूपम् अग्र्यं (१०३-०२१)
रूपं तवाग्र्यं बलवत्सु वायुः (१०३-०२१)
मनुष्यरूपं तव राजसेषु (१०३-०२२)
मूढेषु सर्वेश्वर पादपो ऽसि (१०३-०२२)
दर्पान्वितेष्व् अच्युत दानवस् त्वं (१०३-०२२)
सनत्सुजातश् च विवेकवत्सु (१०३-०२२)
रसस्वरूपेण जले स्थितो ऽसि (१०३-०२३)
गन्धस्वरूपो भवतो धरित्र्यम् (१०३-०२३)
दृश्यस्वरूपश् च हुताशने त्वं (१०३-०२३)
स्पर्शस्वरूपो भगवान् समीरे (१०३-०२३)
शब्दात्मकं ते नभसि स्वरूपं (१०३-०२४)
मन्तव्यरूपो मनसि प्रभो त्वम् (१०३-०२४)
बोधव्यरूपश् च विभो त्वम् एकः (१०३-०२४)

सर्वत्र सर्वेश्वर सर्वभूतः (१०३-०२४)
पश्याम ते नाभिसरोजमध्ये (१०३-०२५)
ब्रह्माणम् एतं च हरं भ्रुकूट्यम् (१०३-०२५)
तत्राश्विनौ कर्णगतौ समस्ताण् (१०३-०२५)
अवस्थितान् बाहुषु लोकपालान् (१०३-०२५)
घ्राणे ऽनिलं नेत्रगतौ रवीन्दू (१०३-०२६)
जिह्वा च ते नाथ सरस्वतीयम् (१०३-०२६)
पादौ धरित्रीं जठरं समस्तांल् (१०३-०२६)
लोकान् हृषीकेश विलोकयामः (१०३-०२६)
जङ्घे वियत् पादकराङ्गुलीषु (१०३-०२७)
पिशाचरक्षोरगसिद्धसङ्घान् (१०३-०२७)
पुंस्त्वे प्रजानां पतिर् ओष्ठयुग्मे (१०३-०२७)
प्रतिष्ठितास् ते क्रतवः समस्ताः (१०३-०२७)
सर्वेष्टयस् ते दशनेषु देव (१०३-०२८)
दंष्ट्रआसु विद्या भवतश् चतस्रः (१०३-०२८)
रोमस्व् अशेषास् तव देवसङ्घा (१०३-०२८)
विद्याधरा नाथ कराङ्घ्रिरेखाः (१०३-०२८)
साङ्घाः समस्तास् तव देव वेदाः (१०३-०२८)
समास्थिता बहुषु संधिभूताः (१०३-०२८)
वराहरूपं धरणीधृतस् ते (१०३-०२९)
नृसिंहरूपं च सटाकरालम् (१०३-०२९)
पश्याम ते वाजिशिरस् तथोच्चैस् (१०३-०२९)
त्रिविक्रमे यश् च तवाप्रमेयः (१०३-०२९)
अमी समुद्रास् तव देव देहे (१०३-०३०)
मेर्वादयः शैलवरास् तवामी (१०३-०३०)
इमाश् च गङ्गाप्रमुखाः स्रवत्यो (१०३-०३०)
द्वीपान्य् अशेषाणि वनानि चैव (१०३-०३०)
स्तुवन्ति चैते मुनयस् तवेश (१०३-०३१)
देहे स्थितास् त्वन्महिमानम् अग्र्यम् (१०३-०३१)
त्वाम् ईशितारं जगताम् अनन्तम् (१०३-०३१)
यज्ञेशम् अर्चन्ति च यज्विनो ऽमी (१०३-०३१)
त्वत्तो न सौम्यं जगतीह किंचित् (१०३-०३२)
त्वत्तो न रौद्रं च समस्तमूर्ते (१०३-०३२)
त्वत्तो न शीतं न च केशवोष्णं (१०३-०३२)
सर्वस्वरूपातिशयी त्वम् एकः (१०३-०३२)
प्रसीद सर्वेश्वर सर्वभूत (१०३-०३३)
सनातनात्मन् परमेश्वरेश (१०३-०३३)
त्वन्मायया मोहितमानसाभिर् (१०३-०३३)
यत् ते ऽपराद्धं तद् इदं क्षमस्व (१०३-०३३)
किं वापराद्धं तव देव मूढैर् (१०३-०३४)
यन् मायया नो हृदयं तथापि (१०३-०३४)
पापावशं किं प्रणतार्तिहारिन् (१०३-०३४)
मनो हि नो विङ्कलताम् उपैति (१०३-०३४)
न ते ऽपराद्धं यदि वापराद्धम् (१०३-०३५)
अस्माभिर् उन्मार्गविवर्तनीभिः (१०३-०३५)
तत् क्षम्यतां सृष्टिकरस् तवैव (१०३-०३५)
देवापराधं सृजतो विवेकान् (१०३-०३५)
नमो नमस् ते गोविन्द (१०३-०३६)
नारायण जनार्दन (१०३-०३६)

त्वन्नामस्मरणात् पापम् (१०३-०३६)
अशेषं नः प्रणश्यतु (१०३-०३६)
ततो ऽनन्त नमस् तुभ्यं (१०३-*(१५५))
विश्वात्मन् विश्वभावन (१०३-*(१५५))
त्वन्नामस्मरणात् पापम् (१०३-*(१५५))
अशेषं नः प्रणश्यतु (१०३-*(१५५))
नमो नमस् ते वैकुण्ठ (१०३-*(१५५))
श्रीवत्साङ्काब्जलोचन (१०३-*(१५५))
वरेण्य यज्ञपुरुष (१०३-*(१५५))
प्रजापालक वामन (१०३-*(१५५))
नमो ऽस्तु ते ऽब्जनाभाय (१०३-०३७)
प्रजापतिकृते हरे (१०३-०३७)
त्वन्नामस्मरणात् पापम् (१०३-०३७)
अशेषं नः प्रणश्यतु (१०३-०३७)
संसारार्णवपोताय (१०३-०३८)
नमस् तुभ्यम् अधोक्षज (१०३-०३८)
त्वन्नामस्मरणात् पापम् (१०३-०३८)
अशेषं नः प्रणश्यतु (१०३-०३८)
नमः परस्मै श्रीशाय (१०३-०३९)
वासुदेवाय वेधसे (१०३-०३९)
स्वेच्छया गुणभोक्तृत्वे (१०३-०३९)
सर्गान्तस्थितिकारिणे (१०३-०३९)
उपसंहार विश्वात्मन् (१०३-०४०)
रूपम् एतत् समन्ततः (१०३-०४०)
वर्धमानं न नो द्रष्टुं (१०३-०४०)
समर्थं चक्षुर् ईश्वर (१०३-०४०)
प्रलयाग्निसहस्रस्य (१०३-०४१)
समा दीप्तिस् तवाच्युत (१०३-०४१)
प्रमाणेन दिशो भूमिर् (१०३-०४१)
गगनं च समावृतम् (१०३-०४१)
न विद्मः क्व नु वर्तामो (१०३-०४२)
भवान् नैवोपलक्ष्यते (१०३-०४२)
सर्वं जगद् इहैकस्थं (१०३-०४२)
पिण्डितं लक्षयामहे (१०३-०४२)
किं वर्णयामो रूपं ते (१०३-०४३)
किं प्रमाणम् इदं हरे (१०३-०४३)
माहात्म्यं किंतु ते देव (१०३-०४३)
जिह्वाया यन् न गोचरम् (१०३-०४३)
वक्त्राणाम् अयुतेनापि (१०३-०४४)
बुद्धीनाम् अयुतायुतैः (१०३-०४४)
गुणानां वर्णनं नाथ (१०३-०४४)
तव वक्तुं न शक्यते (१०३-०४४)
तद् एतद् दर्शितं रूपं (१०३-०४५)
प्रसादः परमः कृतः (१०३-०४५)
छन्दतो जगताम् ईश (१०३-०४५)
तद् एतद् उपसंहर (१०३-०४५)
इत्य् एवं संस्तुतस् ताभिर् (१०३-०४६)
अप्सरोभिर् जनार्दनः (१०३-०४६)
दिव्यज्ञानोपपन्नानां (१०३-०४६)

तासां प्रत्यक्षम् ईश्वरः (१०३-०४६)
विवेश सर्वभूतानि (१०३-०४६)
स्वैर् अंशैर् भूतभावनः (१०३-०४६)
तं दृष्ट्वा सर्वभूतेषु (१०३-०४७)
लीयमानम् अधोक्षजम् (१०३-०४७)
विस्मयं परमं जग्मुः (१०३-०४७)
समस्ता देवयोषितः (१०३-०४७)
स च सर्वेश्वरः शैलान् (१०३-०४८)
पादपान् सागरान् भुवम् (१०३-०४८)
जलम् अग्निं तथा वायुम् (१०३-०४८)
आकाशं च विवेश ह (१०३-०४८)
काले दिक्ष्व् अथ सर्वात्मा (१०३-०४९)
मनुष्यात्मन्य् अथापि च (१०३-०४९)
आत्मरूपः स्थितः स्वेन (१०३-०४९)
महिम्ना भावयञ् जगत् (१०३-०४९)
देवदानवरक्षांसि (१०३-०५०)
यक्षविद्याधरोरगान् (१०३-०५०)
मनुष्यपशुकीटादीन् (१०३-०५०)
मृगपक्ष्यन्तरिक्षगान् (१०३-०५०)
ये ऽन्तरिक्षे तथा भूमौ (१०३-०५१)
दिवि ये ये जलाश्रयाः (१०३-०५१)
तान् प्रविश्य स विश्वात्मा (१०३-०५१)
पुनस् तद् रूपम् आस्थितः (१०३-०५१)
नरेण सार्द्धं यत् ताभिर् (१०३-०५१)
दृष्टपूर्वम् अरिंदम (१०३-०५१)
ताः परं विस्मयं गत्वा (१०३-०५२)
सर्वास् त्रिदशयोषितः (१०३-०५२)
प्रणेमुः साध्यसाः पाण्डु- (१०३-०५२)
वदना नृपसत्तम (१०३-०५२)
नारायणो ऽपि भगवान् (१०३-०५३)
आह तास् त्रिदशाङ्गनाः (१०३-०५३)
नीयताम् उर्वशी भद्रा (१०३-०५३)
यत्रास्ते त्रिदशेश्वरः (१०३-०५३)
भवतीनां हितार्थाय (१०३-०५४)
सर्वभूतेष्व् असाव् इति (१०३-०५४)
ज्ञानम् उत्पादितं भूयो (१०३-०५४)
लयं भूतेषु कुर्वता (१०३-०५४)
तद् गच्छत समस्तो ऽयं (१०३-०५५)
भूतग्रामो मदंशकः (१०३-०५५)
अहम् अप्य् आत्मभूतस्य (१०३-०५५)
वासुदेवस्य योगिनः (१०३-०५५)
यस्मात् परतरं नास्ति (१०३-०५६)
यो ऽनन्तः परिपठ्यते (१०३-०५६)
तम् अजं सर्वभूतेशं (१०३-०५६)
जानीत परमं पदम् (१०३-०५६)
अहं भवत्यो देवाश् च (१०३-०५७)
मनुष्याः पशवश् च ये (१०३-०५७)
एतत् सर्वम् अनन्तस्य (१०३-०५७)
देवदेवस्य विस्तृतिः (१०३-०५८)

एतज् ज्ञात्वा समं सर्गं (१०३-०५८)
सदेवासुरमानुषम् (१०३-०५८)
सपश्वादिगणं चैव (१०३-०५८)
द्रष्टव्यं त्रिदशाङ्गनाः (१०३-०५८)
इत्य् उक्तस् तेन देवेन (१०३-०५९)
समस्तास् ताः सुरस्त्रियः (१०३-०५९)
प्रणम्य तौ समदनाः (१०३-०५९)
सवसन्ताश् च पार्थिव (१०३-०५९)
आदाय चोर्वशीं भूयो (१०३-०६०)
देवराजम् उपागताः (१०३-०६०)
आचख्युश् च यथावृत्तं (१०३-०६०)
देवराजाय तत् तथा (१०३-०६०)
तथा त्वम् अपि राजेन्द्र (१०३-०६१)
सर्वभूतेषु केशवम् (१०३-०६१)
चिन्तयन् समतां गच्छ (१०३-०६१)
समतैव हि मुक्तये (१०३-०६१)
जानन्न् एवम् अशेषेषु (१०३-०६२)
भूतेषु परमेश्वरम् (१०३-०६२)
वासुदेवं कथं दोषांल् (१०३-०६२)
लोभादीन् न प्रहास्यसि (१०३-०६२)
सर्वभूतानि गोविन्दाद् (१०३-०६३)
यदा नान्यानि भूपते (१०३-०६३)
तदा वैरादयो भावाः (१०३-०६३)
क्रियतां कुत्र पार्थिव (१०३-०६३)
इह पश्यञ् जगत् सर्वं (१०३-०६४)
वासुदेवात्मकं नृप (१०३-०६४)
एतद् एव हि कृष्णेन (१०३-०६४)
रूपम् आविष्कृतं तदा (१०३-०६४)
परमस्माद् अपि महद् (१०३-०६५)
रूपं यत् कथितं तव (१०३-०६५)
जन्मादिभावरहितं (१०३-०६५)
तद् विष्णोः परमं पदम् (१०३-०६५)
संक्षेपेण च भूपाल (१०३-०६६)
श्रूयतां यद् वदामि ते (१०३-०६६)
यन् मतौ पुरुषः कृत्वा (१०३-०६६)
परं निर्वाणम् ऋच्छति (१०३-०६६)
सर्वं विष्णुः समस्तौ हि (१०३-०६७)
भावाभावौ च तन्मयौ (१०३-०६७)
सदसत् सर्वम् ईशेशो (१०३-०६७)
वासुदेवः परं पदम् (१०३-०६७)
भवजलधिगतानां द्वन्द्ववाताहतानां (१०३-०६८)
सुतदुहितृकलत्रत्राणभारार्दितानाम् (१०३-०६८)
विषमविषयतोये मज्जताम् अप्लवानां (१०३-०६८)
भवति शरणम् एको विष्णुपोतो नराणाम् (१०३-०६८)
इत्य् उक्तं तव धर्मज्ञ (१०४-००१)
विष्णोर् माहात्म्यम् उत्तमम् (१०४-००१)
स्वरूपं च जगद्धातुर् (१०४-००१)
आराधनविनिश्चयः (१०४-००१)
आराधितात् फलं यच् च (१०४-००२)

केशवात् प्राप्यते नरैः (१०४-००२)
कथितश् च महाभाग (१०४-००२)
दानानां विस्तराद् विधिः (१०४-००२)
योगद्वैधं च कथितम् (१०४-००३)
अद्वैतं द्वैतम् एव च (१०४-००३)
अद्वैतभावनोपायो (१०४-००३)
विस्तराच् च तवोदितः (१०४-००३)
संक्षेपविस्तराभ्यां च (१०४-००४)
सर्वम् एतत् तवोदितम् (१०४-००४)
देवदेवस्य माहात्म्यं (१०४-००४)
सर्वगस्याव्ययात्मनः (१०४-००४)
स एष सर्वप्रवरः (१०४-००५)
सर्वभूतश् च माधवः (१०४-००५)
सर्वम् अत्र च सर्वस्मिन्न् (१०४-००५)
एष एव प्रतिष्ठितः (१०४-००५)
त्रियुगं पुण्डरीकाक्षम् (१०४-००६)
अपवर्गमहाह्रदम् (१०४-००६)
समुत्पत्य पराह्लादम् (१०४-००६)
अनन्तं प्रतिपद्यते (१०४-००६)
श्रुतम् एतन् मया पूर्वं (१०४-००७)
विस्तरेण त्वयोदितम् (१०४-००७)
यत् त्व् एतत् त्रियुगेत्य् उक्तं (१०४-००७)
तस्य निर्वचनं वद (१०४-००७)
चतुर्युगेन कालस्य (१०४-००८)
परिसंख्या यदा द्विज (१०४-००८)
त्रियुगेन तदा विष्णोः (१०४-००८)
क्रियते किं विशेषणम् (१०४-००८)
कृतं त्रेता द्वापरं च (१०४-००९)
कलिश् चेति चतुर्युगम् (१०४-००९)
यदा जगति विख्यातं (१०४-००९)
तदा त्रियुगता कुतः (१०४-००९)
साधु पृष्टो ऽस्मि भूपाल (१०४-०१०)
भवता त्रियुगाश्रितम् (१०४-०१०)
विशेषणम् अनन्तस्य (१०४-०१०)
गदतस् तन् निशामय (१०४-०१०)
काष्ठा पार्थिव विज्ञेया (१०४-०११)
निमेषा दश पञ्च च (१०४-०११)
काष्ठात्रिंशत् कला ज्ञेया (१०४-०११)
मुहूर्तं तावतीः कलाः (१०४-०११)
त्रिंशन्मुहूर्ता भूपाल (१०४-०१२)
तथाहोरात्रम् उच्यते (१०४-०१२)
तत्संख्यातैर् अहोरात्रैर् (१०४-०१२)
मासः पार्थिवसत्तम (१०४-०१२)
अयनं दक्षिणं मासाः (१०४-०१३)
षण् मासाश् च तथोत्तरम् (१०४-०१३)
अयनद्वितयाख्यश् च (१०४-०१३)
कालः संवत्सरः स्मृतः (१०४-०१३)
दक्षिणं त्व् अयनं रात्रिर् (१०४-०१४)
देवानाम् उत्तरं दिनम् (१०४-०१४)

संवत्सरेण देवानाम् (१०४-०१४)
अहोरात्रम् इहोच्यते (१०४-०१४)
शतत्रयेण वर्षाणां (१०४-०१५)
षष्ट्या च पृथिवीपते (१०४-०१५)
मनुष्यसंख्यया वर्षं (१०४-०१५)
देवानाम् अपि गण्यते (१०४-०१५)
इति दिव्येन मानेन (१०४-०१६)
चतुर्युगविकल्पनाम् (१०४-०१६)
कथ्यमानां मया राजन् (१०४-०१६)
यथावच् छ्रोतुम् अर्हसि (१०४-०१६)
चत्वारि तु सहस्राणि (१०४-०१७)
वर्षाणां कृतम् उच्यते (१०४-०१७)
तस्य तावच्छती संध्या (१०४-०१७)
संध्यांशश् च तथाविधः (१०४-०१७)
त्रेता त्रीणि सहस्राणि (१०४-०१८)
दिव्याब्दानां नरर्षभ (१०४-०१८)
तस्य तावच्छती संध्या (१०४-०१८)
संध्यांशश् च तथाविधः (१०४-०१८)
द्वापरं द्वे सहस्रे तु (१०४-०१९)
वर्षाणाम् अभिधीयते (१०४-०१९)
तस्य तावच्छती संध्या (१०४-०१९)
संध्यांशश् च तथाविधः (१०४-०१९)
कलिः सहस्रम् एकं तु (१०४-०२०)
दिव्याब्दानां नरर्षभ (१०४-०२०)
तस्य तावच्छती संध्या (१०४-०२०)
संध्यांशश् च तथाविधः (१०४-०२०)
कृतं नामयुगं पूर्वं (१०४-०२१)
यत्र धर्मः सनातनः (१०४-०२१)
कृतम् एव च कर्तव्यं (१०४-०२१)
तस्मिन् काले नृपेप्सितम् (१०४-०२१)
न तत्र धर्माः सीदन्ति (१०४-०२२)
न च क्षीयन्ति वै प्रजाः (१०४-०२२)
ततः कृतयुगं नाम (१०४-०२२)
गुणतः प्रोच्यते युगम् (१०४-०२२)
देवदानवगन्धर्वा (१०४-०२३)
यक्षराक्षसपन्नगाः (१०४-०२३)
नासन् कृतयुगे राजन् (१०४-०२३)
न तदा क्रयविक्रयः (१०४-०२३)
न सामयजुरृग्वर्णाः (१०४-०२४)
क्रिया नासीच् च मानवी (१०४-०२४)
नाभिसंधाय च फलं (१०४-०२४)
कश्चिद् धर्मे प्रवर्तते (१०४-०२४)
न तस्मिन् युगसंसर्गे (१०४-०२५)
व्याधयो नेन्द्रियक्षयः (१०४-०२५)
नासूया नापि रुदितं (१०४-०२५)
न दर्पो नापि पैशुनम् (१०४-०२५)
न विग्रहः कुतस् तन्द्री (१०४-०२६)
न द्वेषो नापि दम्भनम् (१०४-०२६)
न भयं नापि संतापो (१०४-०२६)

न चेर्ष्या नापि मत्सरः (१०४-०२६)
ततः परमकं ब्रह्म (१०४-०२७)
या गतिर् योगिनां परा (१०४-०२७)
आत्मा च सर्वभूतानां (१०४-०२७)
शुक्लो नारायणस् तदा (१०४-०२७)
तस्मिन्न् आत्मनि लोकानां (१०४-०२८)
सर्वलोकमये ऽच्युते (१०४-०२८)
स्वेच्छया शौक्ल्यम् आपन्ने (१०४-०२८)
सर्वं भवति निर्मलम् (१०४-०२८)
ब्राह्मणाः क्षत्रिया वैश्याः (१०४-०२९)
शूद्राश् च कृतलक्षणाः (१०४-०२९)
कृते युगे भवन्तीह (१०४-०२९)
स्वकर्मनिरताः प्रजाः (१०४-०२९)
स्वम् आश्रमं स्वम् आचारं (१०४-०३०)
सम्यग्ज्ञानसमन्वितम् (१०४-०३०)
जगद् भवति राजेन्द्र (१०४-०३०)
सत्यप्रायं तपोरतम् (१०४-०३०)
एकवेदसमायुक्ता (१०४-०३१)
एकमन्त्रविधिक्रियाः (१०४-०३१)
पृथग्धर्मास् त्व् एकवेदा (१०४-०३१)
धर्मम् एकम् अनुव्रताः (१०४-०३१)
चतुराश्रमयुक्तेन (१०४-०३२)
कर्मणा कालयोगिना (१०४-०३२)
अकामफलसंयोगात् (१०४-०३२)
प्राप्नुवन्ति परां गतिम् (१०४-०३२)
आत्मयोगसमायुक्तो (१०४-०३३)
धर्मो ऽयं कृतलक्षणः (१०४-०३३)
कृते युगे चतुष्पादश् (१०४-०३३)
चतुर्वर्ण्यस्य शाश्वतः (१०४-०३३)
एतत् कृतयुगं नाम (१०४-०३४)
त्रैगुण्यपरिवर्जितम् (१०४-०३४)
त्रेताम् अपि निबोध त्वं (१०४-०३४)
यादृग्रूपं प्रवर्तते (१०४-०३४)
पादेन ह्रसते धर्मो (१०४-०३५)
रक्ततां याति चाच्युतः (१०४-०३५)
सत्यप्रवृत्ताश् च नराः (१०४-०३५)
क्रियाधर्मपरायणाः (१०४-०३५)
ततो यज्ञाः प्रवर्तन्ते (१०४-०३६)
धर्माश् च विविधाः क्रियाः (१०४-०३६)
त्रेतायां भावसंकल्पाः (१०४-०३६)
क्रियादानफलोदयाः (१०४-०३६)
प्रचरन्ति ततो वर्णास् (१०४-०३७)
तपोदानपरायणाः (१०४-०३७)
स्वकर्मस्थाः क्रियावन्तः (१०४-०३७)
समत्वाद् रजसान्विताः (१०४-०३७)
द्वापरे ऽपि युगे धर्मो (१०४-०३८)
द्विभागोनः प्रवर्तते (१०४-०३८)
विष्णुः पीतत्वम् अभ्येति (१०४-०३८)
चतुर्धा वेद एव च (१०४-०३८)

ततो ऽन्ये च चतुर्वेदास् (१०४-०३९)
त्रिवेदाश् च तथापरे (१०४-०३९)
द्विवेदाश् चैकवेदाश् च (१०४-०३९)
अनृचश् च तथापरे (१०४-०३९)
एवं शास्त्रेषु भिन्नेषु (१०४-०४०)
बहुधा नीयते क्रिया (१०४-०४०)
तपोदानप्रवृत्ता च (१०४-०४०)
राजसी भवति प्रजा (१०४-०४०)
अल्पायुषो नरा वेदः (१०४-०४१)
सुमहांश् चेति दुस्तरः (१०४-०४१)
करोति बहुधा वेदान् (१०४-०४१)
व्यासरूपी तदा हरिः (१०४-०४१)
सत्त्वस्य चाप्य् अविज्ञानात् (१०४-०४२)
सत्त्वे कश्चिद् व्यवस्थितः (१०४-०४२)
सत्त्वात् प्रच्यवमानानां (१०४-०४२)
व्याधयो बहवो ऽभवन् (१०४-०४२)
कामाश् चोपद्रवाश् चैव (१०४-०४३)
तदा दैवतकारिताः (१०४-०४३)
यैर् अर्द्यमानाः सुभृशं (१०४-०४३)
तपस् तप्यन्ति मानवाः (१०४-०४३)
धनकामाः स्वर्गकामा (१०४-०४४)
यज्ञांस् तन्वन्ति चापरे (१०४-०४४)
एवं द्वापरम् आसाद्य (१०४-०४४)
प्रजाः क्षीयन्त्य् अधर्मतः (१०४-०४४)
पादेनैकेन राजेन्द्र (१०४-०४५)
धर्मः कलियुगे ऽपि हि (१०४-०४५)
तामसं युगम् आसाद्य (१०४-०४५)
कृष्णो भवति केशवः (१०४-०४५)
व्रताचाराः प्रशाम्यन्ति (१०४-०४६)
धर्मयज्ञक्रियास् तथा (१०४-०४६)
ईतयो व्याधयस् तन्द्री (१०४-०४६)
दोषाः क्रोधादयस् तथा (१०४-०४६)
उपद्रवाश् च वर्धन्ते (१०४-०४६)
मनस्तापाश् च संगताः (१०४-०४६)
युगेष्व् आवर्तमानेषु (१०४-०४७)
लोको व्यावर्तते पुनः (१०४-०४७)
लोके क्षीणे क्षयं यान्ति (१०४-०४७)
भावा लोकप्रवर्तकाः (१०४-०४७)
युगद्वयकृतान् धर्मान् (१०४-०४७)
प्रार्थना न च कुर्वते (१०४-०४७)
एतत् कलियुगं भूप (१०४-०४८)
यत्र जातो ऽसि पार्थिव (१०४-०४८)
नात्रावतारं कुरुते (१०४-०४८)
कृष्णांशेन स्वरूपिणा (१०४-०४८)
कृतादिषु जगत् पाति (१०४-०४९)
दैत्येभ्यो रूपधृद् धरिः (१०४-०४९)
कलौ त्व् अन्यं समाविश्य (१०४-०४९)
पूर्वोत्पन्नं बिभर्ति तम् (१०४-०४९)
प्रत्यग्ररूपधृग् देवो (१०४-०५०)

दृश्यते न कलौ हरिः (१०४-०५०)
कृतादिष्व् एव तेनैष (१०४-०५०)
त्रियुगः परिपठ्यते (१०४-०५०)
कलेर् अन्ते च संप्राप्ते (१०४-०५१)
कल्किनं ब्रह्मवादिनम् (१०४-०५१)
अनुप्रविश्य कुरुते (१०४-०५१)
वासुदेवो जगत्स्थितिम् (१०४-०५१)
पूर्वोत्पन्नेषु भूतेषु (१०४-०५२)
तेषु तेषु कलौ प्रभुः (१०४-०५२)
कृत्वा प्रवेशं कुरुते (१०४-०५२)
यद् अभिप्रेतम् अच्युतः (१०४-०५२)
स्वेच्छाशुक्ले जगच् छुक्लं (१०४-०५३)
रक्ते रक्तं च जायते (१०४-०५३)
पीते च पीतताम् अस्मिन् (१०४-०५३)
कृष्णे चात्रासितं नृप (१०४-०५३)
एष एव जगद्देवो (१०४-०५४)
जगत्स्रष्टा जगद्गुरुः (१०४-०५४)
यद्रूप एव देवो ऽयं (१०४-०५४)
तद्रूपं जायते जगत् (१०४-०५४)
चतुर्युगं नः कथितं (१०५-००१)
संक्षेपाद् भवताखिलम् (१०५-००१)
कलिं विस्तरतो ब्रूहि (१०५-००१)
यत्र जातो ऽस्मि भार्गव (१०५-००१)
भगवत्य् अमले विष्णौ (१०५-००२)
क्रीडया कृष्णतां गते (१०५-००२)
किमाहाराः किमाचारा (१०५-००२)
भविष्यन्ति प्रजास् तदा (१०५-००२)
ब्राह्मणाः क्षत्रिया वैश्याः (१०५-००३)
शूद्राश् च द्विज कीदृशाः (१०५-००३)
भविष्यन्ति कलौ प्राप्ते (१०५-००३)
तन् ममाचक्ष्व विस्तरात् (१०५-००३)
तपः परं कृतयुगे (१०५-००४)
त्रेतायां यज्ञ एव हि (१०५-००४)
प्रधानं द्वापरे दानं (१०५-००४)
सत्यम् एव कलौ युगे (१०५-००४)
कृते युगे मनःशुद्धिर् (१०५-००५)
अस्त्य् एवायत्नतस् तपः (१०५-००५)
तपो निष्पाद्यते भूप (१०५-००५)
योगसंसाधनं परम् (१०५-००५)
रागादिदोषदुष्टेन (१०५-००६)
मनसा यत् तपो नृप (१०५-००६)
क्रियते क्लेशनाशाय (१०५-००६)
तत् तपो न विमुक्तये (१०५-००६)
त्रेतायां तु क्रियायज्ञान् (१०५-००७)
मनोयज्ञांस् ततो नराः (१०५-००७)
वितन्वते स्थूलतरः (१०५-००७)
पन्था धर्मस्य स प्रभो (१०५-००७)
द्वापरे नातिविद्वत्ता (१०५-००८)
यथा त्रेतायुगे ऽभवत् (१०५-००८)

ततः स्थूलतरः पन्था (१०५-००८)
दानात्मा क्रियते नरैः (१०५-००८)
न विद्वत्ता न शुद्धार्थो (१०५-००९)
न शुद्धिर् मनसः कलौ (१०५-००९)
यतो ऽतः सत्यम् एवैकम् (१०५-००९)
एकान्तेनोपकारकम् (१०५-००९)
यथा सत्यं तथा क्षान्तिर् (१०५-०१०)
अहिंसा च कलौ युगे (१०५-०१०)
परोपतापाद् विरतिर् (१०५-०१०)
नराणाम् उपकारिका (१०५-०१०)
तस्मिन् घोरे युगे प्राप्ते (१०५-०११)
कृष्णे कृष्णत्वम् आगते (१०५-०११)
यादृग्रूपं जगद् इदं (१०५-०११)
भवतीह शृणुष्व तत् (१०५-०११)
राजानो ब्राह्मणा वैश्याः (१०५-०१२)
शूद्राश् च मनुजेश्वर (१०५-०१२)
व्याजधर्मपराश् चैव (१०५-०१२)
धर्मवैतंसिका जनाः (१०५-०१२)
सत्यं संक्षिप्यते लोके (१०५-०१३)
नरैः पण्डितमानिभिः (१०५-०१३)
सत्यहान्या ततस् तेषां (१०५-०१३)
स्वल्पम् आयुर् भविष्यति (१०५-०१३)
आयुषः प्रक्षयाद् विद्यां (१०५-०१४)
न शक्ष्यन्त्य् उपशिक्षितुम् (१०५-०१४)
विद्याहीनान् अबुद्धींस् तांल् (१०५-०१४)
लोभो ऽप्य् अभिभविष्यति (१०५-०१४)
लोभक्रोधपरा मूढाः (१०५-०१५)
कामवश्याश् च मानवाः (१०५-०१५)
बद्धवैरा भविष्यन्ति (१०५-०१५)
परस्परवधेप्सवः (१०५-०१५)
ब्राह्मणाः क्षत्रिया वैश्याः (१०५-०१६)
संकीर्यन्तः परस्परम् (१०५-०१६)
शूद्रतुल्या भविष्यन्ति (१०५-०१६)
तपःसत्यविनाकृताः (१०५-०१६)
अन्त्या मध्या भविष्यन्ति (१०५-०१७)
मध्याश् चान्तावसायिनः (१०५-०१७)
ईदृशो भविता लोकः (१०५-०१७)
कृष्णे कृष्णत्वम् आगते (१०५-०१७)
वस्त्राणां प्रवरा शाणी (१०५-०१८)
धान्यानां कोरदूषकः (१०५-०१८)
भार्यामित्राश् च पुरुषा (१०५-०१८)
भविष्यन्ति कलौ युगे (१०५-०१८)
मत्स्यामिषेण जीवन्तो (१०५-०१९)
दुहन्तश् चाप्य् अजाविकाः (१०५-०१९)
गोषु नष्टासु पुरुषा (१०५-०१९)
भविष्यन्ति तदा नृप (१०५-०१९)
सरित्तीरेषु कुद्दालैर् (१०५-०२०)
वापयिष्यन्ति चौषधीः (१०५-०२०)
ताश् चाप्य् अल्पफलास् तेषां (१०५-०२०)

भविष्यन्ति युगक्षये (१०५-०२०)
अनिष्क्रान्तास् तु संबन्धाः (१०५-०२१)
स्वगोत्रात् पुरुषर्षभ (१०५-०२१)
अनिष्क्रान्तानि श्राद्धानि (१०५-०२१)
भविष्यन्ति च गेहतः (१०५-०२१)
न व्रतानि चरिष्यन्ति (१०५-०२२)
ब्राह्मणा वेदनिन्दकाः (१०५-०२२)
न यक्ष्यन्ति न होष्यन्ति (१०५-०२२)
हेतुवादविकूलिनः (१०५-०२२)
प्रायशः कृपणानां च (१०५-०२३)
तथा बन्धिमताम् अपि (१०५-०२३)
विधवानां च वित्तानि (१०५-०२३)
हरिष्यन्ति बलान्विताः (१०५-०२३)
अन्यायोपात्तवित्तेषु (१०५-०२४)
करिष्यन्ति नराः स्पृहाम् (१०५-०२४)
वेश्यालावण्यभावेषु (१०५-०२४)
स्पृहां योषित् करिष्यति (१०५-०२४)
कन्यां न याचिता कश्चिन् (१०५-०२५)
न च कन्याप्रदो नरः (१०५-०२५)
कन्या वरश् च च्छन्देन (१०५-०२५)
गृहीष्यन्ति परस्परम् (१०५-०२५)
भार्या न पतिशुश्रूषां (१०५-०२६)
तदा काचित् करिष्यति (१०५-०२६)
नरा देवद्विजांस् त्यक्त्वा (१०५-०२६)
भविष्यन्त्य् अन्यतोमुखाः (१०५-०२६)
यज्ञभागभुजो देवा (१०५-०२७)
ये वेदपठिता द्विजाः (१०५-०२७)
ब्रह्माद्यास् तान् परित्यज्य (१०५-०२७)
नराः कालबलात्कृताः (१०५-०२७)
हेतुवादपरा देवान् (१०५-०२७)
करिष्यन्त्य् अपरांस् तदा (१०५-०२७)
ये यवान्ना जनपदा (१०५-०२८)
गोधूमान्नास् तथैव च (१०५-०२८)
तान् देशान् संश्रयिष्यन्ति (१०५-०२८)
नराः कलियुगे नृप (१०५-०२८)
न श्राद्धैश् च पितॄंश् चापि (१०५-०२९)
तर्पयिष्यन्ति मानवाः (१०५-०२९)
बहु मंस्यन्ति ते स्नानं (१०५-०२९)
नापि शौचपरा नराः (१०५-०२९)
न विष्णुभक्तिप्रवणं (१०५-०३०)
नराणां नृप मानसम् (१०५-०३०)
भविता तु युगे प्राप्ते (१०५-०३०)
कृष्णे कार्ष्ण्योपलक्षिते (१०५-०३०)
विनिन्दां प्रथमे पादे (१०५-०३१)
करिष्यन्ति हरेर् नराः (१०५-०३१)
युगान्ते तु हरेर् नाम (१०५-०३१)
नैव कश्चिद् गृहीष्यति (१०५-०३१)
धन्यास् ते पुरुषव्याघ्र (१०५-०३२)
पापाम्भोधाव् अपापिनः (१०५-०३२)

ये नामापि कलौ विष्णोर् (१०५-०३२)
गृहीष्यन्त्य् अक्षयात्मनः (१०५-०३२)
ध्यायन् हरिं कृतयुगे (१०५-०३३)
त्रेताद्वापरयोर् यजन् (१०५-०३३)
यद् आप्नोति कलौ नाम्ना (१०५-०३३)
तद् एव परिकीर्तयन् (१०५-०३३)
हरिर् हरति पापानि (१०५-०३४)
नाम भक्त्या यदीरितम् (१०५-०३४)
वासुदेवेति न जनस् (१०५-०३४)
तद् एवोच्चारयिष्यति (१०५-०३४)
बहुपाषण्डसंकीर्णे (१०५-०३५)
जगत्य् अस्मिन् कलौ युगे (१०५-०३५)
कृष्णायेति नमो ऽस्त्व् अत्र (१०५-०३५)
सुकृती यदि वक्ष्यति (१०५-०३५)
हेतुवादबलैर् मोहं (१०५-०३६)
कुहकैश् च जने तदा (१०५-०३६)
पाषण्डिनः करिष्यन्ति (१०५-०३६)
चातुराश्रम्यदूषकाः (१०५-०३६)
पाषण्डभूतम् अत्यर्थं (१०५-०३७)
जगद् एतद् असत्कृतम् (१०५-०३७)
भविष्यति तदा भूप (१०५-०३७)
वृथाप्रव्रजितोत्कटम् (१०५-०३७)
न तु द्विजातिशुश्रूषां (१०५-०३८)
न स्वधर्मानुपालनम् (१०५-०३८)
करिष्यन्ति तदा शूद्राः (१०५-०३८)
प्रव्रज्यालिङ्गिनो वृथा (१०५-०३८)
उत्कोचाः सौगताश् चैव (१०५-०३९)
महायानरतास् तथा (१०५-०३९)
भविष्यन्त्य् अथ पाषण्डाः (१०५-०३९)
कापिला भिक्षवस् तथा (१०५-०३९)
वृद्धाः श्रावकनिर्ग्रन्थाः (१०५-०४०)
सिद्धपुत्रास् तथापरे (१०५-०४०)
भविष्यन्ति दुरात्मानः (१०५-०४०)
शूद्राः कलियुगे नृप (१०५-०४०)
निःशौचा वक्रमतयः (१०५-०४१)
परपाकान्नभोजनाः (१०५-०४१)
भविष्यन्ति दुरात्मानः (१०५-०४१)
शूद्राः प्रव्रजितास् तदा (१०५-०४१)
एते चान्ये च बहवः (१०५-०४२)
पाषण्डाः पुरुषर्षभ (१०५-०४२)
ब्राह्मणाः क्षत्रिया वैश्या (१०५-०४२)
भविष्यन्ति तथा परे (१०५-०४२)
राजशुल्कहराः क्षुद्रा (१०५-०४३)
गृहस्थपरिमोषकाः (१०५-०४३)
मुनिवेषाकृतिच्छन्ना (१०५-०४३)
वाणिज्यम् उपजीविकाः (१०५-०४३)
न द्विजान् न कलौ देवान् (१०५-०४४)
पूजयिष्यन्ति मानवाः (१०५-०४४)
म्लेच्छभाषानिबन्धैस् तु (१०५-०४४)

हेतुवादैर् विकूलिताः (१०५-०४४)
एवं तेष्व् अतिदुष्टेषु (१०५-०४५)
विमार्गपथिवर्तिनः (१०५-०४५)
भविष्यन्त्य् अपरे दुष्टास् (१०५-०४५)
तेषां मार्गानुयायिनः (१०५-०४५)
असंस्कृतोक्तिवक्तारो (१०५-०४६)
वेदशास्त्रविनिन्दकाः (१०५-०४६)
जगदुन्मार्गकर्तारो (१०५-०४६)
भविष्यन्ति तदा नराः (१०५-०४६)
तच्छीलवर्तिभिर् भूप (१०५-०४७)
मनुष्यैः परिपूरिते (१०५-०४७)
जगत्य् अत्र तदा नृणां (१०५-०४७)
स्वल्पम् आयुर् भविष्यति (१०५-०४७)
परमायुश् च भविता (१०५-०४८)
तदा वर्षाणि षोडश (१०५-०४८)
ततः प्राणान् प्रहास्यन्ति (१०५-०४८)
कृष्णे कृष्णत्वम् आगते (१०५-०४८)
पञ्चमे वाथ षष्ठे वा (१०५-०४९)
वर्षे कन्या प्रसूयते (१०५-०४९)
सप्तवर्षाष्टवर्षा वा (१०५-०४९)
प्रजास्यन्ति नरास् तदा (१०५-०४९)
अल्पद्रव्या वृथालिङ्गा (१०५-०५०)
हिंसारतिपरायणाः (१०५-०५०)
हर्तारो न तु दातारो (१०५-०५०)
भविष्यन्ति कलौ नराः (१०५-०५०)
शुक्लादानपराः क्षुद्राः (१०५-०५१)
परपाकाशिनो द्विजाः (१०५-०५१)
वैश्यास् तथा तु राजानो (१०५-०५१)
न तु क्षत्रियवंशजाः (१०५-०५१)
शूद्रा भिक्षवता विप्राः (१०५-०५२)
शुश्रूषाविपणाश्रिताः (१०५-०५२)
भविष्यन्ति नृपश्रेष्ठ (१०५-०५२)
कृष्णे कृष्णत्वम् आगते (१०५-०५२)
न शिष्यो न गुरुः कश्चिन् (१०५-०५३)
न पुत्रो न पिता तथा (१०५-०५३)
न भार्या न पतिर् भूप (१०५-०५३)
भविता तत्र संकुले (१०५-०५३)
एतत् कालस्वरूपं ते (१०५-०५४)
शतानीक मयोदितम् (१०५-०५४)
विष्णुभक्तान् नरश्रेष्ठ (१०५-०५४)
न नरान् बाधते कलिः (१०५-०५४)
ये ऽहर्निशं जगद्धातुर् (१०५-०५५)
वासुदेवस्य कीर्तनम् (१०५-०५५)
कुर्वन्ति तान् नरव्याघ्र (१०५-०५५)
न कलिर् बाधते नरान् (१०५-०५५)
ये तन्मनस्कास् तिष्ठन्ति (१०५-०५६)
प्रयान्तः संस्थितास् तथा (१०५-०५६)
स्वपन्तश् च नरव्याघ्र (१०५-०५६)
तान् कलिर् न प्रबाधते (१०५-०५६)

सर्वत्र भगवान् विष्णुर् (१०५-०५७)
गोविन्दः केशवो हरिः (१०५-०५७)
यस्य भावो न तं भूप (१०५-०५७)
कदाचिद् बाधते कलिः (१०५-०५७)
न कलौ कलिचेष्टो ऽसौ (१०५-०५८)
मूढेषु न स मुह्यते (१०५-०५८)
भगवत्य् अच्युते नित्यं (१०५-०५८)
येन भावः समर्पितः (१०५-०५८)
कलिप्रभावो दुष्टोक्तिः (१०५-०५९)
पाषण्डानां तथोक्तयः (१०५-०५९)
न क्रामन्ते मनस् तस्य (१०५-०५९)
यस्य चेतसि केशवः (१०५-०५९)
कलौ कृतयुगं तस्य (१०५-०६०)
कलिस् तस्य कृते युगे (१०५-०६०)
यस्य चेतसि गोविन्दो (१०५-०६०)
हृदये यस्य नाच्युतः (१०५-०६०)
अनिष्ट्वापि महायज्ञैर् (१०५-०६१)
अकृत्वापि पितृस्वधाम् (१०५-०६१)
कृष्णम् अभ्यर्च्य यद् भक्त्या (१०५-०६१)
नैनं श्वोमरणं तपेत् (१०५-०६१)
यस्याग्रतस् तथा पृष्ठे (१०५-०६२)
गच्छतस् तिष्ठतो ऽपि वा (१०५-०६२)
गोविन्दे नियतं चेतः (१०५-०६२)
कृतकृत्यः सदैव सः (१०५-०६२)
एतद् विदित्वा भूपाल (१०५-०६३)
सर्वे सर्वेश्वरे हरौ (१०५-०६३)
तन्मना भव तच्चित्तस् (१०५-०६३)
तन्मना नावसीदति (१०५-०६३)
परमार्थम् अशेषस्य (१०५-०६४)
जगतः प्रभवाव्ययम् (१०५-०६४)
शरण्यं शरणं गच्छन् (१०५-०६४)
गोविन्दं नावसीदति (१०५-०६४)
कलिकल्मषकक्षाग्निं (१०५-०६५)
निर्वाणं पदम् अव्ययम् (१०५-०६५)
सर्वकारणम् अव्यक्तं (१०५-०६५)
विष्णुं ध्यायन् न सीदति (१०५-०६५)
यत्र सर्वमये ध्याते (१०५-०६६)
ध्येयम् अन्यन् न विद्यते (१०५-०६६)
यत्रार्चिते ऽर्चनीयश् च (१०५-०६६)
जायते तं नमाम्य् अहम् (१०५-०६६)
जगत्स्रष्टारम् इशेशम् (१०५-०६७)
अनादिं परतः परम् (१०५-०६७)
सर्वास्पदं सर्वभूतं (१०५-०६७)
गच्छन् सर्वात्मना हरिम् (१०५-०६७)
हरत्य् अघम् अशेषं यो (१०५-०६८)
हरिर् इत्य् अभिसंस्तुतः (१०५-०६८)
अशेषाघहरं विष्णुं (१०५-०६८)
हरिवर्णं हरिं नमः (१०५-०६८)
यत्कीर्तनाद् अघः शुद्धः (१०५-०६९)

स्मृते यत्राशुचिः सुचिः (१०५-०६९)
तम् आत्मनि स्थितं भूप (१०५-०६९)
पुण्डरीकेक्षणं नमः (१०५-०६९)
अपवित्रः पवित्रो वा (१०५-०७०)
सर्वावस्थगतो ऽपि वा (१०५-०७०)
यः स्मरेत् पुण्डरीकाक्षं (१०५-०७०)
स बाह्याभ्यन्तरः शुचिः (१०५-०७०)
यद्य् अप्य् उपहतः पापैर् (१०५-०७१)
यदि वात्यन्तदुष्कृतैः (१०५-०७१)
तथापि संस्मरन् विष्णुं (१०५-०७१)
स बाह्याभ्यन्तरः शुचिः (१०५-०७१)
कलाव् अत्रातिदोषाढ्ये (१०५-०७२)
विषयासक्तमानसः (१०५-०७२)
कृत्वापि पापं गोविन्दं (१०५-०७२)
ध्यायन् पापैर् विमुच्यते (१०५-०७२)
तद् ध्यानं यत्र गोविन्दः (१०५-०७३)
सा कथा यत्र केशवः (१०५-०७३)
तत् कर्म यत् तदर्थीयं (१०५-०७३)
किम् अन्यैर् बहुभाषितैः (१०५-०७३)
नैतत् पिता तनूजाय (१०५-०७४)
न शिष्याय गुरुर् नृप (१०५-०७४)
परमार्थपदं ब्रूयाद् (१०५-०७४)
यद् एतत् ते मयोदितम् (१०५-०७४)
संसारे भ्रमता लभ्यं (१०५-०७५)
पुत्रदारधनं वसु (१०५-०७५)
सुहृदश् च तथिवान्ये (१०५-०७५)
नोपदेशो नृपेदृशः (१०५-०७५)
किं पुत्रदारैर् वित्तैर् वा (१०५-०७६)
न मित्रे क्षेत्रबान्धवैः (१०५-०७६)
उपदेष्टा परो बन्धुर् (१०५-०७६)
ईदृशो यो विमुक्तये (१०५-०७६)
यो नैकाग्रमना विष्णाव् (१०५-०७७)
इति ज्ञात्वापि पार्थिव (१०५-०७७)
स नूनम् अच्युतस्यैव (१०५-०७७)
नानुग्राह्यो ऽत्र पापकृत् (१०५-०७७)
द्विविधो भूतसर्गो ऽयं (१०५-०७८)
दैव आसुर एव च (१०५-०७८)
विष्णुभक्तिपरो दैवो (१०५-०७८)
विपरीतस् तथासुरः (१०५-०७८)
उपदेशप्रदानेन (१०५-०७९)
संभूतित्रय आसुरः (१०५-०७९)
नैव विष्णुपरो भूप (१०५-०७९)
भवत्य् अक्षीणकल्मषः (१०५-०७९)
उपदेशेषु सो ऽत्यन्तं (१०५-०८०)
संरम्भी युक्तियोजितम् (१०५-०८०)
हेतुवादाश्रितो मूढो (१०५-०८०)
ददात्य् उत्तरम् अक्षयम् (१०५-०८०)
स्नातस्य देवकार्येषु (१०५-०८१)
तथापत्सु कथासु च (१०५-०८१)

आसुरस्यापि तन्मात्रा (१०५-०८१)
जायते नृपते मतिः (१०५-०८१)
इति मत्वातिसद्भावं (१०५-०८२)
रहस्यं परम् ईरितम् (१०५-०८२)
त्वयाच्युतान् मतिर् भूप (१०५-०८२)
नापनेया कथंचन (१०५-०८२)
अप्राप्य वाञ्छति रतिं (१०५-०८३)
सर्वदैव नृणां मनः (१०५-०८३)
इहैवाच्युतसंसर्गि (१०५-०८३)
यदि तत् किं प्रहीयते (१०५-०८३)
तद् अलं तव राज्येन (१०५-०८४)
बलकोशादिभिस् तथा (१०५-०८४)
चिन्तितैर् अच्युतश् चिन्त्यो (१०५-०८४)
यद्भावि न तदन्यथा (१०५-०८४)
एतत् पवित्रम् आरोग्यं (१०५-०८५)
धन्यं दुःस्वप्ननाशनम् (१०५-०८५)
सुखप्रीतिकरं नृणां (१०५-०८५)
पततां निर्वृतिप्रदम् (१०५-०८५)
येषां गृहेषु लिखितम् (१०५-०८६)
एतत् स्थास्यति नित्यदा (१०५-०८६)
न तद्गृहाणि दैवोत्था (१०५-०८६)
बाधिष्यन्ते ह्य् उपद्रवाः (१०५-०८६)
किं तीर्थैः किं प्रदानैर् वा (१०५-०८७)
किं यज्ञैः किम् उपोषितैः (१०५-०८७)
अहन्य् अहन्य् एतद् एव (१०५-०८७)
तन्मयत्वेन शृण्वतः (१०५-०८७)
यओ ददाति तिलप्रस्थं (१०५-०८८)
सुवर्णस्य च मासकम् (१०५-०८८)
शृणोति श्लोकम् एकं च (१०५-०८८)
धर्मस्यास्य समं हि तत् (१०५-०८८)
अध्यायपारणं चास्य (१०५-०८९)
गोप्रदानाद् विशिष्यते (१०५-०८९)
शृण्वंश् चास्य दशाध्यायान् (१०५-०८९)
सद्यः पापैः प्रमुच्यते (१०५-०८९)
रात्र्या यद् एनः कुरुते (१०५-०९०)
दिवसेन च मानवः (१०५-०९०)
श्रोतुं वाञ्छा समस्तं तत् (१०५-०९०)
पार्थिवस्य व्यपोहति (१०५-०९०)
कपिलानां शते दत्ते (१०५-०९१)
यद् भवेज् ज्येष्ठपुष्करे (१०५-०९१)
नरेन्द्र विष्णुधर्माणां (१०५-०९१)
तदावाप्नोति पारणे (१०५-०९१)
प्रवृत्तौ च निवृत्तौ च (१०५-०९२)
धर्मं धर्मभृतां वर (१०५-०९२)
नास्त्य् अन्यद् विष्णुधमाणां (१०५-०९२)
सदृशं शास्त्रम् उत्तमम् (१०५-०९२)
मैत्रीं करोति भूतेषु (१०५-०९३)
भक्तिम् अत्यन्तम् अच्युते (१०५-०९३)
श्रुत्वा धर्मान् इमान् वेत्ति (१०५-०९३)

अभेदेनात्मनो जगत् (१०५-०९३)
पठन्न् अनुदिनं धर्मान् (१०५-०९४)
एताञ् शृण्वंस् तथापि वा (१०५-०९४)
भक्त्या मतिमतां श्रेष्ठ (१०५-०९४)
सर्वपापैः प्रमुच्यते (१०५-०९४)
नोपसर्गो न चानर्थो (१०५-०९५)
न चौराग्निभयं गृहे (१०५-०९५)
तस्मिन् भवति भूपाल (१०५-०९५)
यत्रैतत् पुस्तकं स्थितम् (१०५-०९५)
न गर्भहारिणी भीतिर् (१०५-०९६)
न च बालग्रहा गृहे (१०५-०९६)
यत्रैतद् भूपते तत्र (१०५-०९६)
न पिशाचादिकाद् भयम् (१०५-०९६)
शृण्वन् विप्रो वेदवित् स्यात् (१०५-०९७)
क्षत्रियः पृथिवीपतिः (१०५-०९७)
ऋद्धिं प्रयाति वैश्यश् च (१०५-०९७)
शूद्रश् चारोग्यम् ऋच्छति (१०५-०९७)
यश् चैतान् नियतान् धर्मान् (१०५-०९८)
पठेच् छ्रद्धासमन्वितः (१०५-०९८)
विष्णौ मनः समावेश्य (१०५-०९८)
सर्वत्र समदर्शनः (१०५-०९८)
तस्य पापं तथा रोगान् (१०५-०९९)
दुःस्वप्नाद्याभिचारुकान् (१०५-०९९)
यच् चान्यद् दुरितं किंचित् (१०५-०९९)
तत् सर्वं हन्ति केशवः (१०५-०९९)
हेमन्ते य इमान् धर्माञ् (१०५-१००)
शृणोति वसुधाधिप (१०५-१००)
श्रद्धासमन्वितः सम्यक् (१०५-१००)
सो ऽग्निष्टोमफलं लभेत् (१०५-१००)
शिशिरे च नरव्याघ्र (१०५-१०१)
यः शृणोति यथाविधि (१०५-१०१)
पुण्डरीकस्य यज्ञस्य (१०५-१०१)
स प्राप्नोति फलं नरः (१०५-१०१)
मधुमाधवसंज्ञे तु (१०५-१०२)
यः शृणोति नरस् त्व् इमान् (१०५-१०२)
सो ऽश्वमेधक्रतोर् भूप (१०५-१०२)
प्राप्नोत्य् अविकलं फलम् (१०५-१०२)
शृण्वन्न् एतान् निदाघे च (१०५-१०३)
धर्मान् धर्मभृतां वर (१०५-१०३)
वाजपेयस्य यज्ञस्य (१०५-१०३)
फलं प्राप्नोत्य् असंशयम् (१०५-१०३)
वर्षासु चेमान् यो धर्मान् (१०५-१०४)
संशृण्वन् वसुधाधिप (१०५-१०४)
राजसूयक्रतोः पुण्यम् (१०५-१०४)
अखिलं समवाप्नुयात् (१०५-१०४)
शरत्काले च संशृण्वन् (१०५-१०५)
धर्मान् एतान् नरर्षभ (१०५-१०५)
प्राप्नोति गोसवफलं (१०५-१०५)
सम्यक् श्रद्धासमन्वितः (१०५-१०५)

ऋतुष्व् एतेष्व् एतद् एव (१०५-१०६)
पठताम् अपि पार्थिव (१०५-१०६)
फलं भवति दुष्टेषु (१०५-१०६)
ग्रहेष्व् एते शुभप्रदाः (१०५-१०६)
कपिलानां शतस्योक्तं (१०५-१०७)
यत् फलं ज्येष्ठपुष्करे (१०५-१०७)
भूयो भूयस् तद् आप्नोति (१०५-१०७)
पारणे पारणे गते (१०५-१०७)
भक्त्या पठति यश् चैतान् (१०५-१०८)
देवस्य पुरतो हरेः (१०५-१०८)
सो ऽर्चयत्य् अवनीपाल (१०५-१०८)
ज्ञानयज्ञेन केशवम् (१०५-१०८)
सर्वाबाधास् तथा पापम् (१०५-१०९)
अखिलं मनुजेश्वर (१०५-१०९)
विष्णुधर्मा व्यपोहन्ति (१०५-१०९)
संस्मृताः पठिताः श्रुताः (१०५-१०९)
एतत् ते सर्वम् आख्यातं (१०५-११०)
रहस्यं परमं हरेः (१०५-११०)
नातः परतरं किंचिच् (१०५-११०)
श्राव्यं श्रुतिसुखावहम् (१०५-११०)
अत्रोक्तविधियुक्तस्य (१०५-१११)
पुरुषस्य विपश्चितः (१०५-१११)
न दुर्लभं नरव्याघ्र (१०५-१११)
परमं ब्रह्म शाश्वतम् (१०५-१११)